तालस्यावृत्तिषु प्रमाणभेदो दृश्यते । क्वचिदेकस्यामप्यावृत्तौ लघ्वादिष्वंशेषु प्रमाणभेदो दृश्यते । एतत्सर्वं देशीत्वस्य भूषणमेव; न दूषणमिति देशीतालरहस्यमाचार्याभिमतमवगन्तव्यम् ।

नन्वत्र देशीताललक्षणेषु; "द्रुतौ विरामान्तौ तृतीयः स्यात्" इति तृतीयतालादिषु केषुचिद्देशीतालेषु द्रुतशेषत्वेन विरामः श्रूयते । तथा "गजलीले विरामन्तमुक्तं लघुचतुष्टयम्" इति गजतालादिषु शेषत्वेन विरामः श्रूयते । तत्र विरामः किं रूपः? इति चेत्; उच्यते—उभयत्रापि विरामो विच्छेदपर्यायः । क्रियानन्तरविश्रान्तिरूपत्वाद्भिन्नकालश्च । तथाहि द्रुतशेषो विरामो लक्ष्येषु द्रुतार्धकालो दृष्टः । लघुशेषस्तु तद्द्रुतकाल इति । एवं विरामस्य भिन्नकालत्वे गुरुप्लुतयोर्विरामान्तवचनमेव ज्ञापकम् । तथाहि—यदि गुरुर्विरामान्त इत्युच्येत, ततो गुरोर्विरामोऽपि तदर्धत्वेन लघुः कालः स्यात् । ततश्च प्लुत एव प्रकारान्तरेणोक्तः स्यात् । तथा प्लुतस्यापि विरामः सार्धमात्रकालो भवेत् । तथाच प्लुतः सार्धचतुर्मात्रिको भवति । तथाच तादृशस्य तालावयवस्य क्वचिदप्यनुपलम्भादपसिद्धान्तता अपप्रयोगता च प्रसज्येत । तस्मात् गुरुप्लुतयोः सविरामत्ववचनमेव द्रुतलघुविरामयोर्वैरूप्यं ज्ञापयतीति सिद्धम् ।

अत्र केचिदिदानींतनाः भरतंमन्या विरामस्यापि तालावयवत्वमङ्गीकृत्य प्रस्तारादिषु तालप्रत्ययेषु तस्यापि समावेशं कृत्वा स्ववैदुष्यं प्रकाशयन्तोऽज्ञान् प्रतारयन्ति । तैः स्वकीयमेव शास्त्रापरिज्ञानं प्रकाशितमिति प्रकाशयता अभिनवभरताचार्येण सर्वज्ञेन चतुरेण कल्लिनाथविदुषा विरामस्य तालावयवत्वाभावे चतुरो हेतूनुपन्यस्य संग्रहः श्लोकः कृतः । यथा—

"अक्रियात्वात्क्रियाभावरूपत्वात्पारतन्त्र्यतः ।
विरूपत्वाद्विरामो न प्रस्तारादिकमर्हति ॥" इति ।

दर्पणे द्द्वयं गश्च

• ० ऽ इति दर्पणः (७)

सिंहविक्रमसंज्ञकः ।

गत्रयं लः पलगपाः

ऽ ऽ ऽ । ऽ॑ । ऽ ऽ॑ इति सिंहविक्रमः (८)

रतिलीले लघू गुरू ॥ २६३ ॥

। । ऽ ऽ इति रतिलीलः (९)

लघ्वन्ते दत्रयं सिंहलीलो

० ० ० । इति सिंहलीलः (१०)

दौ यगणस्तथा ।

कंदर्पतालस्तस्यैव पर्यायः स्यात्परिक्रमः ॥ २६४ ॥

० ० । ऽ ऽ इति कंदर्पः (११)

लघुर्द्रुतद्वयं चान्ते गुरुः स्याद्वीरविक्रमः ।

। ० ० ऽ इति वीरविक्रमः (१२)

विरामः प्रस्तारादिकं नार्हतीति कार्यनिषेधेन कारणस्य तालावयवत्वस्य निषेधो नान्तरीयकतया सिद्धो वेदितव्यः । अत्र चत्वारोऽपि हेतवः पृथक् साध्यसाधनसमर्था द्रष्टव्याः । एवमनभ्युपगच्छन्तं प्रति तेनैव व्याहतिर्दर्शिता श्लोकद्वयेन—

"क्रियाविश्रान्तिरूपस्य विरामस्य भवेद्यदि ।
प्रस्तारादिकमेतद्वलयानन्त्यं प्रसज्यते ॥
तत्स्वीकारे त्वतिव्याप्त्या शास्त्रं व्याकुलितं भवेत् ।
अतो विरामसहितप्रस्तारादिकथा वृथा ॥"

इति । प्रकृतमनुसरामः ॥ २६१, २६२ ॥

(सु०) उद्देशक्रमेण तालानां लक्षणं प्रतिज्ञाय कथयति—लघ्विति । एको लघुः (।) आदितालः (१) द्वौ द्रुतौ, एको लघुः (० ० ।) द्वितीय-

**रङ्गश्चतुर्द्रुती गश्च**

० ० ० ० S इति रङ्गः (१३)

**श्रीरङ्गः सगणो लपौ ॥ २६५ ॥**

। । S । Ṡ इति श्रीरङ्गः (१४)

**विरामान्तद्रुतद्वन्द्वान्यष्टौ लघु च चच्चरी ।**

० ०̐ ० ०̐ ० ०̐ ० ०̐ ० ०̐ ० ०̐ ० ०̐ ० ०̐ । इति चच्चरी (१५)

**प्रत्यङ्गो मगणो लौ द्वौ**

S S S । । इति प्रत्यङ्गः (१६)

**यतिलग्नो द्रुतो लघुः ॥ २६६ ॥**

० । इति यतिलग्नः (१७)

**गजलीलो विरामान्तमुक्तं लघुचतुष्टयम् ।**

। । । ।̐ इति गजलीलः (१८)

**हंसलीले विरामान्तं लघुद्वयमुदाहृतम् ॥ २६७ ॥**

।̐ ।̐ इति हंसलीलः (१९)

तालः (२) द्रुतादनन्तरं द्वौ द्रुतौ विरामान्तौ ( ० ० ०̐ ) तृतीयतालः (३) द्वौ लघू, एको द्रुतः ( । । ० ) चतुर्थतालः (४) द्रुतद्वयम् ( ० ० ) पञ्चमः (५) द्वौ प्लुतौ, द्वौ गुरू, एको लघुः ( ँ ँ S Ṡ । ) निःशङ्कलीलः (६) ।

(सु०) दर्पणे द्रुतद्वयं गुरुश्च ( ० ० S ) दर्पणः (७) गुरुत्रयं, एको लघुः, एकः प्लुतः, पुनरेको लघुः, एको गुरुः, पुनरेकः प्लुतश्च ( S S S । ँ । S ँ ) सिंहविक्रमः (८) लघुद्वयं गुरुद्वयं च ( । । S S ) रतिलीलः (९) लघुरादावन्ते च यस्य, एवंविधं द्रुतत्रयम् ( । ० ० ० । ) सिंहलीलः (१०) द्रुतद्वयं, यगणश्च ( ० ० । S S ) कंदर्पतालः (११) तस्यैव ; कंदर्पतालस्यैव परिक्रम इति नामान्तरम् । एको लघुः, द्रुतद्वयम्, अन्ते गुरुश्च ( । ० ० S ) वीरविक्रमः (१२) ।

(सु०) चत्वारो द्रुताः, गुरुश्च ( ० ० ० ० S ) रङ्गतालः (१३) सगणः, लघुद्वयं गुरुः, तत एको लघुः, एकः प्लुतश्च ( । । S । Ṡ ) श्रीरङ्गतालः (१४)

वर्णभिन्नो द्रुतौ लो गः

० ० । S इति वर्णभिन्नः (२०)

त्रिभिन्नो लगुरुप्लुताः ।

। S Ś इति त्रिभिन्नः (२१)

राजचूडामणिर्दौ द्वौ नगणश्च द्रुतौ लगौ ॥ २६८ ॥

० ० । । । ० ० । S इति राजचूडामणिः (२२)

मगणो लप्लुतौ रङ्गोद्योतः

S S S । Ś इति रङ्गोद्योतः (२३)

रङ्गप्रदीपकः ।

तो गप्लुतौ

S S । S Ś इति रङ्गप्रदीपकः (२४)

राजतालो गपौ दौ च गलौ प्लुतः ॥ २६९ ॥

S Ś ० ० S । Ś इति राजतालः (२५)

विरामान्तानि द्रुतद्वयान्यष्टौ, एको लघुश्च (० ०̆ ० ०̆ ० ०̆ ० ०̆ ० ०̆ ० ०̆ ० ०̆ - ० ०̆ । ) चच्चरीतालः (१५) मागणः गुरुत्रयम्, द्वौ लघू (S S S । ।) प्रत्यङ्गः (१६) एको द्रुतः, एको लघुश्च ( ० । ) यतिलग्नः (१७) विरामान्तं चत्वारो लघवः (। । । ।̆) इति गजलीलः (१८) लघुद्वयं विरामान्तम् ( । ।̆ ) हंसलीलः (१९)।

(सु०) द्वौ द्रुतौ, एको लघुः, एको गुरुश्च ( ० ० । S ) वर्णभिन्नः (२०) एको लघुः, एको गुरुः, एकः प्लुतश्च ( । S Ś ) त्रिभिन्नः (२१) द्वौ द्रुतौ, नगणः, लघुत्रयम्, पुनः द्वौ द्रुतौ, एको लघुः, एको गुरुश्च ( ० ० । । । ० ० । S ) राजचूडामणिः (२२) मगणः, गुरुत्रयम्, एको लघुः, एकः प्लुतश्च ( S S S । Ś ) रङ्गोद्योतः (२३) तो तगणः, गुरुद्वयमेको लघुः, पुनरेको गुरुः, प्लुतश्च ( S S । S Ś ) रङ्गप्रदीपकः (२४) एको गुरुः, एकः प्लुतः, दौ द्रुतद्वयम्, पुनरेको गुरुः, प्लुतश्च ( S Ś ० ० S । Ś ) राजतालः (२५)।

त्र्यश्रो मिश्रो द्विधा वर्णस्त्र्यश्रो लौ दौ लघुद्वयम् ।

(१) । । ० ० । । इति त्र्यश्रवर्णः

मिश्रो द्रुतचतुष्काः स्युर्विरामान्तास्त्रयः पृथक् ॥ २७० ॥

ततः पगौ दौ गलौ गः

(२) ० ० ० ॐ ० ० ० ॐ ० ० ० ॐ ऽ ऽ ० ० ऽ । ऽ इति मिश्रवर्णः

चतुरश्रोऽपि दृश्यते ।

गलौ द्रुतौ गुरुश्चेति

(३) ऽ । ० ० ऽ इति चतुरश्रवर्णः (२६)

सिंहविक्रीडितः पुनः ॥ २७१ ॥

लपौ गपौ पगौ लाद्रः पलौ पश्च

। ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ इति सिंहविक्रीडितः (२७)

जयः पुनः ।

जो लघुर्द्वौ द्रुतौ पश्च

। ऽ । । ० ० ऽ इति जयः (२८)

वनमाली चतुर्द्रुती ॥ २७२ ॥

(सु०) वर्णतालो द्विप्रकारः ; त्र्यश्रो मिश्रश्च । तत्र लघुद्वयम्, द्रुतद्वयम्, पुनर्लघुद्वयम् ( । । ० ० । । ) त्र्यश्रवर्णः । विरामान्ता द्रुतचतुष्कास्त्रयः ततोऽनन्तरं, पगौ ; प्लुतः, गुरुश्च, द्वौ द्रुतौ, एको गुरुः, एको लघुः, एको गुरुश्च ( ० ० ० ॐ ० ० ० ॐ ० ० ० ॐ ऽ ऽ ० ० । ऽ ) मिश्रवर्णः । एको गुरुः, एको लघुः, द्वौ द्रुतौ, एको गुरुश्च ( ऽ । ० ० ऽ ) चतुरश्रवर्णोऽपि दृश्यते (२६) लपौ ; लघुप्लुतौ, गपौ ; गुरुप्लुतौ, पगौ ; प्लुतगुरू, लाद्रः ; लघुगुरू, पलौ ; प्लुतगुरू, ततः प्लुतश्च ( । ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ) सिंहविक्रीडितः (२७) जो जगणः, एको लघुः, द्रुतद्वयम्, प्लुतश्च ( । ऽ । । ० ० ऽ ) जयः (२८) ।

लघुर्द्वौ द्वौ गुरुरिति

० ० ० ० । ० ० S इति वनमाली (२९)

लप्लुतौ द्वौ द्रुतौ प्लुतः ।

हंसनादः

। S̀ ० ० S̀ इति हंसनादः (३०)

सिंहनादो यगणश्च लघुर्गुरुः ॥ २७३ ॥

। S S । S इति सिंहनादः (३१)

कुडुक्को द्वौ द्रुतौ लौ द्वौ

विरामन्तद्रुतद्वयात् ।

० ० । । इति कुडुक्कः (३२)

द्रुतौ तुरङ्गलीलः स्यात्

०̊ ०̊ ० ० इति तुरङ्गलीलः (३३)

भवेच्छरभलीलकः ॥ २७४ ॥

लौ द्वौ चतुर्द्रुती द्वौ लौ

। । ० ० ० ० । । इति शरभलीलः (३४)

सिंहनन्दनकः पुनः ।

तपौ लगौ द्रुतौ गौ लः पलपा गो लघू ततः ॥ २७५ ॥

चत्वारो लघवोऽशब्दाः

S S । S̀ । S ० ० S S । S̀ । S̀ S । । ४ इति सिंहनन्दनः (३५)

त्रिभङ्गिः सगणाद्गुरुः ।

(सु०) चत्वारो द्रुताः, एको लघुः, द्रुतद्वयम्, गुरुश्च ( ० ० ० ० । ० ० S ) वनमाली (२९) लप्लुलौ ; लघुप्लुतौ, द्रुतद्वयं, प्लुतश्च ( । S̀ ० ० S̀ ) हंसनादः (३०) यगणः ; एको लघुः, गुरुद्वयम् ; ततो लघुर्गुरुश्च ( । S S । S ) सिंहनादः (३१) द्रुतद्वयं, लघुद्वयं च ( ० ० । । ) कुडुक्कः (३२) विरामान्तद्रुतद्वयानन्तरं द्रुतद्वयम् ( ०̊ ०̊ ० ० ) तुरङ्गलीलः (३३) ।

(सु०) द्वौ लघू , चतुर्द्रुती ; चतुर्णां द्रुतानां समाहारः चतुर्द्रुती, लौ ; लघुद्वयम्

।।SS इति त्रिभङ्गिः (३६)

**रङ्गाभरणताले ताल्लप्लुतौ**

SS।।S इति रङ्गाभरणः (३७)

**मण्ठके पुनः ॥ २७६ ॥**

**साच्चतुर्लघु निःशब्दं**

(१) ।।S४ × इति मण्ठः ।

**यद्वा भाद् द्वावशब्दकौ ।**

(२) S।।२ × इति वा मण्ठः (३८)

**भाच्चतुर्लघु निःशब्दं भवेन्मुद्रितमण्ठके ॥ २७७ ॥**

(३) S।।४ × इति मुद्रितमण्ठः ।

**मण्ठो न जौ लघुर्यद्वा**

(४) ।।।।S।। इति वा मण्ठः ।

**प्रोक्ताः षडपरे भिदाः ।**

(।।०००००।।) शरभलीलः (३४) तपौ ; तः; तगणः, गुरुद्वयं, लघुश्च ; पः; प्लुतः, लगौ ; लघुगुरू, द्रुतौ ; द्रुतद्वयम्, गौ ; गुरुद्वयम्, लः ; लघुः, पलपाः ; प्लुतलघुप्लुताः, गो, गुरुः, लघू ; लघुद्वयम्, ततः ; अनन्तरम्, चत्वारो लघवः, अशब्दा ; अशब्दपाटेन धारणीयम् ( SS।S।S००SS।S।SS।।४ ×) सिंहनन्दनः (३९) सगणः ; लघुद्वयं, गुरुश्च, पुनरपि गुरुः (।।SS) त्रिभङ्गिः (३६) तात्, तगणात्, गुरुद्वयं लघुश्च, अनन्तरम्, एको लघुः, एकः प्लुतश्च ( SS।।S ) रङ्गाभरणः (३७) सात् ; सगणात् लघुद्वयं गुरुश्च, अनन्तरं निःशब्दपाटेन लघुचतुष्टयं धारणीयम् (।।S४ ×) मण्ठः । पक्षान्तरमाह— यद्वेति । भात् ; भगणः, गुरुर्लघुद्वयं च, तस्मात् द्वौ भगणौ निःशब्दौ (S।।-२ ×) द्वितीयमण्ठः (३८) ।

(सु०) भगणौ ; गुरुर्लघुद्वयं च, तस्मात् निःशब्दं लघुचतुष्टयम (S।।-४) मुद्रितमण्ठः । यद्वा—नजौ ; नगणजगणौ, नगणो लघुत्रयम्, जगणो लघुगुरु-

मण्ठरूपकवेलायाम्

इति दशविधो मण्ठः ।

कोकिलाप्रियनाम्नि तु ॥ २७८ ॥

गलपाः स्युः

S । S̀ इति कोकिलाप्रियः (३९)

विरामान्तौ लघू निःसारुको मतः ।

। ।̀ इति निःसारुकः (४०)

लघुर्गुरुर्द्रुतद्वन्द्वं राजविद्याधरो भवेत् ॥ २७९ ॥

। S ० ० इति राजविद्याधरः (४१)

सगणद्वितयं यत्र स तालो जयमङ्गलः ।

। । S । । S इति जयमङ्गलः (४२)

मल्लिकामोदताले तु लौ द्वौ द्रुतचतुष्टयम् ॥ २८० ॥

। । ० ० ० ० इति मल्लिकामोदः (४३)

विजयानन्दसंज्ञे तु लघुद्वन्द्वं गुरुत्रयम् ।

। । S S S इति विजयानन्दः (४४)

क्रीडा द्रुतौ विरामान्तौ चण्डनिःसारुकश्च सः ॥ २८१ ॥

०̀ ०̀ इति क्रीडातालः, चण्डनिःसारुकश्च (४५)

जयश्री रगणाल्लो गः

S । S । S इति जयश्रीः (४६)

दौ लौ लो मकरन्दकः ।

लघवः, पुनर्लघुश्च (। । । । S । ।) इति वा मण्ठः । अपरे षड्भेदा मण्ठप्रबन्धलक्षणे उक्ताः । एवं दश मण्ठाः । गलपाः; गुरुलघुप्लुताः (S । S̀) कोकिलाप्रियः (३९) विरामान्तं लघुद्वयम् (। ।̀) नि सारुकः (४०) एको लघुः, एको गुरुः, द्रुतद्वयम् (। S ० ०) राजविद्याधरः (४१) ।

(सु०) सगणद्वितयम्; सगणो लगुद्वयम्, गुरुश्च (। । S । । S) जयमङ्गलः (४२) द्वौ लघू, द्रुतचतुष्टयम् (। । ० ० ० ०) मल्लिकामोदः (४३) लघुद्वयं,

० ० । । । इति मकरन्दः (४७)

**लपौ गलौ प्लुतः कीर्तिः**

। ऽ ऽ । ऽ इति कीर्तितालः (४८)

**श्रीकीर्तिर्द्वौ गुरू लघू ॥ २८२ ॥**

ऽ ऽ । । इति श्रीकीर्तिः (४९)

**लौ द्रुतौ प्रतितालः स्यात्**

। । ० ० इति प्रतितालः (५०)

**विजयः पगपा लघुः ।**

ऽ ऽ ऽ । इति विजयः (५१)

**गुर्वोर्मध्ये तु चत्वारो बिन्दवो बिन्दुमालिनि ॥ २८३ ॥**

ऽ ० ० ० ० ऽ इति बिन्दुमाली (५२)

**समो लौ दौ विरामान्तौ**

। । ॰ ॰ इति समः (५३)

**लघुर्द्वौ पश्च नन्दनः ।**

। ० ० ऽ इति नन्दनः (५४)

**गुरुद्रुतप्लुताः प्रोक्ता मण्ठिका**

ऽ ० ऽ इति मण्ठिका ।

गुरुत्रयं च ( । । ऽ ऽ ऽ ) विजयानन्दः (४४) विरामान्तौ द्वौ द्रुतौ ( ॰ ॰ ) क्रीडातालः, अयमेव चण्डनिःसारुकश्च (४५) रगणात्; रगणः, गुरुर्लघुर्गुरुश्च, तस्मात् लघुर्गुरुश्च ( ऽ । ऽ । ऽ ) जयश्रीः (४६) दौ; द्रुतद्वयम्, लौ; लघुद्वयम्, पुनरेको लघुश्च ( ० ० । । । ) मकरन्दः (४७) लपौ; लघुप्लुतौ, गलौ; गुरुलघू, पुनः प्लुतश्च ( । ऽ ऽ । ऽ ) कीर्तितालः (४८) ।

(सु०) गुरुद्वयं, लघुद्वयं च ( ऽ ऽ । । ) श्रीकीर्तिः (४९) लौ; लघुद्वयम्, द्रुतौ; द्रुतद्वयम् ( । । ० ० ) प्रतितालः (५०) पगपाः; प्लुतगुरुप्लुताः, लघुश्च ( ऽ ऽ ऽ । ) विजयः (५१) गुर्वोर्मध्ये चत्वारो बिन्दवः ( ऽ ० ० ० ० ऽ ) बिन्दुमाली (५२) लौ; लघुद्वयं, विरामान्तौ द्वौ द्रुतौ ( । । ॰ ॰ ) समतालः

अन्यैस्तु लद्वयम् ॥ २८४ ॥
विरामादिद्रुतौ द्वौ च मण्ठिका परिकीर्तिता ।

।। ॰̊ ॰̊ इति मण्ठिका (५५)

दीपको दलगा द्विर्द्विः

॰ ॰ ।। SS इति दीपकः (५६)

लौ द्वौ गुरुरुदीक्षणः ॥ २८५ ॥

।। S इत्युदीक्षणः (५७)

रगणो ढेङ्किका कैश्चिदेष प्रोक्तस्तु योजनः ।

S । S इति ढेङ्की (५८)

द्विश्चत्वारो विरामान्ता द्रुतास्तु विषमे मताः ॥ २८६ ॥

॰ ॰ ॰ ॰̊ ॰ ॰ ॰ ॰̊ इति विषमः (५९)

द्वौ लौ द्वौ दौ लघुर्दौ द्वौ कीर्तिता वर्णमण्ठिका ।

।। ॰ ॰ । ॰ ॰ इति वर्णमण्ठिका (६०)

अभिनन्दो लघुद्वन्द्वं द्रुतयुग्मं गुरुस्तथा ॥ २८७ ॥

।। ॰ ॰ S इत्यभिनन्दः (६१)

(९३) एको लघुः, द्रुतद्वयम्, प्लुतश्च ( । ॰ ॰ S̀ ) नन्दनः (९४) गुरुद्रुतप्लुताः ( S ॰ S̀ ) मण्ठिका ।

(सु॰) अन्यैस्तु--लघुद्वयम्, विरामादिद्रुतद्वयम्, ( ।। ॰̊ ॰̊ ) मण्ठिका परिकीर्तिता (९९) । दलगा ; द्रुतलघुगुरव , द्विर्द्विः, द्वौ द्रुतौ, द्वौ लघू , द्वौ गुरू इत्यर्थः ( ॰ ॰ ।। SS ) दीपकः (९६) लघुद्वयम् , गुरुश्च ( ।। S ) उदीक्षणः (९७) रगणः ; गुरुलघुगुरवः ( S । S ) ढेङ्किकातालः ; एषैव योजन इत्युच्यते (९८) विरामान्ताः द्रुताश्चत्वारः, द्विः ; द्विवारमावर्तनीयम ( ॰ ॰ ॰ ॰̊ ॰ ॰ ॰ ॰̊ ) विषमः (९९) द्वौ लौ ; लघुद्वयम् , द्वौ दौ ; द्रुतद्वयम् , पुनः द्वौ द्रुतौ ( ।। ॰ ॰ । ॰ ॰ ) वर्णमण्ठिका (६०) लघुद्वन्द्वम ; लघुद्वयम् , द्रुतयुग्मम् ; द्रुतद्वयम् , एको गुरुश्च ( ।। ॰ ॰ S ) अभिनन्दः (६१) ।

लप्लुतौ सगणोऽनङ्गः

। ऽ̊ । । ऽ इत्यनङ्गः (६२)

नान्दी लो दौ लघू गुरू ।

। ० ० । । ऽ ऽ इति नान्दी (६३)

मल्लतालो विरामान्तर्द्विबिन्द्वन्तं चतुर्लघु ॥ २८८ ॥

। । । । ० ०̊ इति मल्लतालः (६४)

उक्तश्चतुर्धा कङ्कालः पूर्णः खण्डः समोऽसमः ।

चतुर्द्रुती गलौ पूर्णः

(१) ० ० ० ० ऽ । इति पूर्णः

खण्डो दौ द्वौ गुरुद्वयम् ॥ २८९ ॥

(२) ० ० ऽ ऽ इति खण्डः ।

समो गुरू द्वौ लघ्वन्ते

(३) ऽ ऽ । इति समः ।

विषमो लाद् गुरुद्वयम् ।

(४) । ऽ ऽ इति विषमः (६५)

इति चतुर्धा कङ्कालः ।

(सु०) लप्लुतौ; लघुप्लुतौ, सगणः; लघुद्वयं गुरुश्च (। ऽ̊ । । ऽ) अनङ्गः (६२) लो; लघुः, दौ; द्रुतद्वयम्, लघू; लघुद्वयम्, ततः गुरू; गुरुद्वयम् (। ० ० । । ऽ ऽ) नान्दी (६३) विरामं द्रुतद्वन्द्वमन्ते यस्य एवंविधं लघुचतुष्टयम् (। । । । ० ०̊) मल्लतालः (६४) कङ्कालं लक्षयितुं विभजते—उक्त इति । पूर्णादिभेदेन चतुर्धा कङ्कालः । क्रमेण लक्षणान्याह—चतुर्द्रुती, चत्वारो द्रुताः, गलौ; गुरुलघू (० ० ० ० ऽ ।) पूर्णकङ्कालः (१) दौ द्वौ; द्रुतद्वयम्, गुरुद्वयम् (० ० ऽ ऽ) खण्डकङ्कालः (२) लघुरन्ते गुरुद्वयं यत्र (ऽ ऽ ।) समकङ्कालः (३) लात्; लघोरनन्तरम्, गुरुद्वयम् (। ऽ ऽ) विषमकङ्कालः (४) इति चतुर्धा कङ्कालः (६९) ।

कन्दुको लौ च सगणः

। । । । S इति कन्दुकः (६६)

द्रुतेन त्वेकतालिका ॥ २९० ॥

० इत्येकताली (६७)

कुमुदो लाद् द्रुतौ लौ गश्च

। ० ० । । S इति कुमुदः (६८)

अन्येषां लश्चतुर्द्रुती ।

अन्ते गुरुश्च कुमुदः

। ० ० ० ० S इति वा कुमुदः ।

चतुस्तालो गुरोः परे ॥ २९१ ॥

त्रयो द्रुताः

S ० ० ० इति चतुस्तालः (६९)

डोम्बुली तु द्विर्लघुः स्याद्विरामवत् ।

।́ ।́ इति डोम्बुली (७०)

अभङ्गो लप्लुतौ

। Ŝ इत्यभङ्गः (७१)

रायवङ्कोलो रगणाद् द्रुतौ ॥ २९२ ॥

S । S ० ० इति रायवङ्कोलः (७२)

(सु०) लौ; द्वौ लघू, सगणश्च; लघुद्वयं गुरुश्च ( । । । । S S ) कन्दुकः (६६) द्रुतेन तु, एकेन द्रुतेन ( ० ) एकतालिका (६७) लात्, लघोरनन्तरं द्रुतौ, द्रुतद्वयं, लौ लघुद्वयं गुरुश्च ( । ० ० । । S ) कुमुदः (६८) अन्येषां तु मते—एको लघुः, चत्वारो द्रुताः गुरुश्च ( । ० ० ० ० S ) इति वा कुमुदः । गुरोरनन्तरं चत्वारो द्रुताः ( S ० ० ० ० ) चतुस्तालः (६९) विरामयुक्तलघुद्वयेन ( ।́ ।́ ) डोम्बुली (७०) लघुः, प्लुतश्च ( । Ŝ ) अभङ्गः (७१) रगणात्, रगणो गुरुलघुगुरवः, ततोऽनन्तरं द्रुतद्वयम् ( S । S ० ० ) रायवङ्कोलः (७२) ।

**वसन्तो न्मौ**

।।। S S S इति वसन्तः (७३)

**विरामान्तलघुना लघुशेखरः ।**

ǃ इति लघुशेखरः (७४)

**प्रतापशेखरो दीप्ताद्विरामान्तं द्रुतद्वयम् ॥ २९३ ॥**

ऽ॰ ० ॰ऽ इति प्रतापशेखरः (७५)

**झम्पातालो विरामान्तं द्रुतद्वन्द्वं लघुस्तथा ।**

ऽ॰ ऽ॰ । इति झम्पातालः (७६)

**गजझम्पो गुरोरूर्ध्वं विरामान्तं द्रुतत्रयम् ॥ २९४ ॥**

S ० ० ऽ॰ इति गजझम्पः (७७)

**चतुर्मुखो जप्लुताभ्यां मात्रिक स्यात्स एव हि ।**

। S । Ṡ इति चतुर्मुखः (७८)

**दद्वयं गश्च मदनः**

० ० S इति मदनः (७९)

**सो भो वा प्रतिमण्ठकः ॥ २९५ ॥**

(सु०) न्मौ; नगणमगणौ, त्रिलघुर्नगणः, त्रिगुरुर्मगणः (।।। S S S) वसन्तः (७३) विरामान्त एको लघुः (ǃ) लघुशेखरः (७४) दीप्तात् प्लुतादनन्तरम्, विरामान्तं द्रुतद्वयम् (S ० ऽ॰) प्रतापशेखरः (७५) विरामान्तं द्रुतद्वन्द्वम्, द्रुतद्वयम्, लघुश्च (ऽ॰ ऽ॰ ।) झम्पातालः (७६) गुरोरूर्ध्वम्, गुरोरनन्तरं विरामान्तं त्रयो द्रुताः (S ऽ॰ ऽ॰ ऽ॰) गजझम्पः (७७) जो; जगणः, लघुगुरुलघवः, ततश्च प्लुतः (। S । Ṡ) चतुर्मुखः (७८) स एव, चतुर्मुख एव, मात्रिकः, लघुमात्र इत्यर्थः ॥

(सु०) दद्वयम्, द्रुतद्वयम्, गुरुश्च (० ० S) मदनः (७९) सगणो

कोल्लटोऽन्यैरयं प्रोक्तः

। । S S । । इति प्रतिमण्ठकः (८०)

पार्वतीलोचने पुनः ।

गलपा द्वौ गुरू दौ द्वौ

S S S । Ŝ S S ० ० इति पार्वतीलोचनः (८१)

रतितालो लघुर्गुरुः ॥ २९६ ॥

। S इति रतितालः (८२)

लीला दलौ पः

० । Ŝ इति लीलातालः (८३)

करणयतौ द्रुतचतुष्टयम् ।

० ० ० ० इति करणयतिः (८४)

ललिते द्वौ द्रुतौ लो गः

० ० । S इति ललितः (८५)

गारुगिस्तु चतुर्द्रुती ॥ २९७ ॥

भगणो वा प्रतिमण्ठकः ; लघुद्वयं गुरुश्च, सगणः, गुरुर्लघुद्वयं च भगणः, ( । । S S । । ) प्रतिमण्ठकः, अयमेव प्रतिमण्ठकः अन्यैः आचार्यैः कोल्लक इत्युक्तः (८०) मलपाः ; मगणलघुप्लुताः, त्रिगुरुर्मगणः, द्वौ गुरू ; गुरुद्वयं ; दौ द्वौ ; द्रुतद्वयं च ( S S S । Ŝ S S ० ० ) पार्वतीलोचनः (८१) लघुः, गुरुश्च ( । S ) रतितालः (८२) दलौ, द्रुतलघू , प्लुतश्च ( ० । S ) लीला (८३) द्रुतचतुष्टयम् ( ० ० ० ० ) करणयतिः (८४) ।

(सु०) द्रुतद्वयं, लघुर्गुरुश्च ( ० ० । S ) ललितः (८५) चतुर्द्रुती ;

**विरामान्तं बुधैरुक्ता**

०००ऽ̊ इति गारुगिः (८६)

**राजनारायणे पुनः।**

**द्रुतौ द्वौ जगणो वक्रः**

०० । S । S इति राजनारायणः (८७)

**लक्ष्मीशे तु द्रुतद्वयम् ॥ २९८ ॥**

**विरामान्तं लप्लुतौ च**

०ऽ̊ । S̀ इति लक्ष्मीशः (८८)

**तालस्तु ललितप्रियः।**

**ऊर्ध्वं लघुभ्यां रगणः**

।। S । S इति ललितप्रियः (८९)

**स्यातां श्रीनन्दने भपौ ॥ २९९ ॥**

S ।। S̀ इति श्रीनन्दनः (९०)

**जनको नयसा वक्रः**

।।।। SS ।। S इति जनकः (९१)

**वर्धनो द्वौ द्रुतौ लपौ।**

०० । S̀ इति वर्धनः (९२)

चत्वारो द्रुताः विरामान्ताः (०००ऽ̊) गारुगिः (८६) द्वौ द्रुतौ, जगणः, एको गुरुः, लघुद्वयम्, वक्रः, गुरुश्च (०० । S । S) राजनारायणः (८७) विरामान्तं द्रुतद्वयम्, लघुः, प्लुतश्च (०ऽ̊ । S̀) लक्ष्मीशः (८८) द्वौ लघू, अनन्तरं रगणः, गुरुलघुगुरुरूपः (।। S । S) ललितप्रियः (८९) भगणः, प्लुतश्च (S ।। S̀) श्रीनन्दनः (९०)।

(सु०) नगणयगणसगणाः, वक्रः गुरुश्च (।।।। SS ।। SS)

विरामान्तौ द्रुतौ बिन्दुस्त्रिमात्रो रागवर्धनः ॥ ३०० ॥

० ०̍ ० ऽ इति रागवर्धनः (९३)

द्रुतैः षड्भिस्तु षट्तालः

० ० ० ० ० ० इति षट्तालः (९४)

अन्तरक्रीडा तु कथ्यते ।

द्रुतत्रयं विरामान्तं

० ० ०̍ इत्यन्तरक्रीडा (९५)

हंसे सविरती लघू ॥ ३०१ ॥

। ।̍ इति हंसः (९६)

लघुप्लुतावुत्सवः स्यात्

। ऽ इत्युत्सवः (९७)

गो द्रौ दीप्तो विलोकिते ।

S ० ० ऽ इति विलोकितः (९८)

गजश्चतुर्ला धारासौ

। । । । इति गजः (९९)

लौ द्रौ वर्णयतिर्भवेत् ॥ ३०२ ॥

। । ० ० इति वर्णयतिः (१००)

जनकः (९१) द्रुतद्वयम्, लघुः, प्लुतश्च ( ० ० । ऽ ) वर्धनः (९२) विरामान्तद्रुतद्वयम्, ततश्च बिन्दुः त्रिमात्रः प्लुतः ( ० ०̍ ० ऽ ) रागवर्धनः (९३) षड्भिः द्रुतैः ( ० ० ० ० ० ० ) षट्तालः (९४) विरामान्तं द्रुतत्रयम् ( ० ० ०̍ ) अन्तरक्रीडा (९५) विरामान्तयुक्तं लघुद्वयम् ( । ।̍ ) हंसः (९६) एको लघुः,

**सिंहे लदौ लत्रयं च**

। ० ।।। इति सिंहः (१०१)

**गुरुणा करुणो मतः ।**

ऽ इति करुणः (१०२)

**लघुर्द्रुतानां त्रितयं लघू द्वौ सारसः स्मृतः ॥ ३०३ ॥**

। ० ० ० ।। इति सारसः (१०३)

**द्रुतत्रयं लघुद्वन्द्वं चण्डताले बभाषिरे ।**

० ० ० ।। इति चण्डतालः (१०४)

**मगणश्च त्रयो दीप्ता लघुश्चन्द्रकलाभिधे ॥ ३०४ ॥**

ऽऽऽऽ̇ऽ̇ऽ̇। इति चन्द्रकला (१०५)

**गलौ प्लुतत्रयं वक्रः प्लुतो बिन्दुत्रयं लये ।**

ऽ।ऽ̇ऽ̇ऽ̇ऽऽ̇ ० ० ० इति लयः (१०६)

एकः प्लुतश्च (।ऽ̇) उत्सवः (९८) एको गुरुः, द्वौ द्रुतौ, दीप्तः; प्लुतश्च (ऽ ० ० ऽ̇) विलोकितः (९८) चत्वारो लघवः (।।।।) गजः (९९) लघुद्वयं, द्रुतद्वयं च (।। ० ०) वर्णयतिः (१००)।

(सु०) एको द्रुतः, पुनर्लघुत्रयं च (। ० ।।।) सिंहः (१०१) एकेन गुरुणा (ऽ) करुणः (१०२) एको लघुः, द्रुतत्रयं, पुनर्लघुद्वयं च (। ० ० ० ।।) सारसः (१०३) द्रुतत्रयं, लघुद्वयं च (० ० ० ।।) चण्डतालः (१०४) मगणः; गुरुत्रयम्, त्रयो दीप्ताः; प्लुतत्रयमित्यर्थः । तत एको लघुश्च (ऽऽऽऽ̇ऽ̇ऽ̇।) चन्द्रकला (१०५) गलौ, गुरुलघू, प्लुतत्रयम्, वक्रः; गुरुः, ततः प्लुतः, ततो बिन्दुत्रयम् (ऽ।ऽ̇ऽ̇ऽ̇ऽऽ̇ ० ० ०) लयः (१०६)।

रो द्रुतो द्वौ गुरू स्कन्दे

SIS ० ० SS इति स्कन्दः (१०७)

अड्डताली दो लघुद्वयम् ॥ २०५ ॥

इयमेवोचिरे तालं केचित्त्रिपुटसंज्ञया ।

० ।। इत्यड्डताली (१०८)

द्वौ लौ द्वौ दौ लगौ घत्ता

।। ० ० । S इति घत्ता (१०९)

द्वन्द्वः सतगणौ प्लुतः ॥ २०६ ॥

।। SSS । Ŝ इति द्वन्द्वः (११०)

मुकुन्दे तु लघुर्बिन्दुचतुष्टयमथो गुरुः ।

। ० ० ० ० S इति मुकुन्दः (१११)

कुविन्दके लघुर्बिन्दुद्वयं गुरुरथ प्लुतः ॥ २०७ ॥

। ० ० S Ŝ इति कुविन्दकः (११२)

कलध्वनिर्लघुद्वन्द्वं गुरुर्लघुरथ प्लुतः ।

।। S । Ŝ इति कलध्वनिः (११३)

(सु०) रो रगणः, द्रुतद्वयम्, गुरुद्वयं च ( S । S ० ० S S ) स्कन्दः (१०७) एको द्रुतः, लघुद्वयं च ( ० ।। ) अड्डतालः (१०८) अमुमेव केचित् त्रिपुट इत्याहुः । लघुद्वयम्, गुरुद्वयम्, लघुर्गुरुश्च (।। ० ० । S) घत्ता (१०९) लघुद्वयं, गुरुश्च, सगणः, गुरुद्वयं लघुश्च तगणः, ततः प्लुतश्च (।। S S S । Ŝ) द्वन्द्वः (११०) एको लघुः, अनन्तरं बिन्दुचतुष्टयम्, चत्वारो द्रुताः, अथानन्तरं गुरुश्च (। ० ० ० ० S) मुकुन्दः (१११) एको लघुः, द्रुतद्वयम्, अनन्तरं गुरुः, प्लुतश्च (। ० ० S Ŝ ) कुविन्दकः (११२) लघुद्वयानन्तरं गुरुः, ततो लघुः, अथानन्तरं प्लुतश्च ( ।। S । Ŝ ) कलध्वनिः (११३) ।

पञ्चभिर्लघुभिर्गौरी

।।।।। इति गौरी (११४)

द्वौ गुरू द्वौ लघुप्लुतौ ॥ ३०८ ॥

ताले सरस्वतीकण्ठाभरणे शार्ङ्गिसंमतौ ।

SS।।०० इति सरस्वतीकण्ठाभरणः (११५)

भग्नताले चतुर्बिन्दुर्नगणश्च विरामवान् ॥ ३०९ ॥

०००० ।।।́ इति भग्नतालः (११६)

ताले राजमृगाङ्के तु द्रुतौ लघुरथो गुरुः ।

००।S इति राजमृगाङ्कः (११७)

गुरुर्लघुर्द्रुतस्ताले राजमार्तण्डसंज्ञके ॥ ३१० ॥

S।० इति राजमार्तण्डः (११८)

निःशङ्कसंज्ञके ताले लगुरू पगुरू गलौ ।

।SSS̀SSS। इति निःशङ्कः (११९)

शार्ङ्गदेवे द्रुतद्वन्द्वं गप्लुतौ गद्वयं लघुः ॥ ३११ ॥

००SS̀SS। इति शार्ङ्गदेवः (१२०)

इति विंशत्युत्तरं देशीतालाः

(सु०) पञ्चभिर्लघुभिः (।।।।।) गौरी (११४) गुरुद्वयम्, लघुद्वयम्, द्रुतद्वयम् (SS।।००) सरस्वतीकण्ठाभरणः (११५) चतुर्बिन्दुः; द्रुतचतुष्टयम्, विरामान्त नगणश्च (००००।।।́) भग्नतालः (११६) द्रुतद्वयम्, लघुः, अन्तरं गुरुश्च (००।S) राजमृगाङ्कः (११७) एको गुरुः, एको लघुः, द्रुतश्च (S।०) राजमार्तण्डः (११८) लगुरू; लघुगुरू, पगुरू; प्लुतगुरू, गुरुद्वयम्, लघुश्च (।SSS̀SSS।) निःशङ्कः (११९) द्रुतद्वन्द्वम्, गुरुः, प्लुतः, गद्वयं; गुरुद्वयम्, लघुश्च (००SS̀SS।) शार्ङ्गदेवः (१२०) ॥ २६१-३११ ॥

इति विंशत्युत्तरं देशीतालाः

अन्येऽपि सन्ति भूयांसस्तालास्ते लक्ष्यवर्त्मनि ।
प्रसिद्धिविधुरत्वेन शास्त्रेऽस्मिन्न प्रदर्शिताः ॥ ३१२ ॥
तद्भेदप्रत्ययार्थं तु लघूपाया भवन्त्यमी ।
प्रस्तारसंख्ये नष्टं चोद्दिष्टं पातालकस्ततः ॥ ३१३ ॥
द्रुतमेरुर्लघोर्मेरुर्गुरुमेरुः प्लुतस्य च ।
मेरुः संयोगमेरुश्च खण्डप्रस्तारकस्ततः ॥ ३१४ ॥
प्राचां चतुर्णां मेरूणां नष्टोद्दिष्टे पृथक्पृथक् ।
एकोनविंशतिरिति प्रत्ययास्तान् ब्रुवेऽधुना ॥ ३१५ ॥

(क०) **अन्येऽपीति** । विंशत्यभ्यधिकात् शतादन्येऽपि **भूयांसः तालाः** सन्ति । तर्हि किमर्थं न प्रदर्श्यन्त इत्यत आह—**प्रसिद्धिविधुरत्वेनेति** । **तद्भेदप्रत्ययार्थं त्विति** । तेषां प्रसिद्धानामप्रसिद्धानां च तालानां भेदस्य परिज्ञानाय **अमी** वक्ष्यमाणाः प्रस्तारादयः । **लघूपाया इति** । ज्ञेयस्यातिमहत्त्वेऽपि तज्ज्ञानसाधनानामेतेषामल्पत्वेन ते वक्तुं सुलभा इत्यर्थः । **प्रत्यया इति** । **तद्भेदप्रत्ययार्थं** त्वित्युक्तत्वात् प्रत्ययहेतुत्वेन प्रस्तारादयोऽपि प्रत्यया इत्युपचर्यन्ते । प्रतीयन्त एतैरर्थविशेषा इति वा प्रत्ययाः । क्रमेण तान् लक्षयितुमाह—**तान् ब्रुवेऽधुनेति** ॥ ३१२–३१५ ॥

(सु०) अन्येऽपीति । अन्येऽपि बहवो देशीतालाः सन्ति । ते लक्ष्यमार्गे अप्रसिद्धत्वाद्विशेषतो नोक्ताः । तेषां भेदपरिज्ञानार्थम्, अमी लघूपायाः; लाघयुक्ता उपायाः, क्लेशं विनैव ज्ञाने साधनमित्यर्थः । ते च लाघवभेदज्ञानोपाया एकोनविंशतिः । प्रस्तारः, संख्या, नष्टम्, उद्दिष्टम्, पातालः, द्रुतमेरुः, लघुमेरुः, गुरुमेरुः, प्लुतमेरुः, संयोगमेरुः, खण्डप्रस्तारकः; पूर्वोक्तानां चतुर्णां मेरूणां पृथक्पृथक् नष्टमुद्दिष्टं च; द्रुतमेरुनष्टम्, द्रुतमेरूद्दिष्टम्, लघुमेरुनष्टम्, लघुमेरूद्दिष्टम्, गुरुमेरुनष्टम्, गुरुमेरूद्दिष्टम्, प्लुतमेरुनष्टम्, प्लुतमेरूद्दिष्टं च । एते एकोनविंशतिप्रत्यया इहोच्यन्ते । प्रतीयन्ते तालभेदाः यैरिति प्रत्ययाः ॥ ३१२-३१५ ॥

**न्यस्याल्पमाद्यान्महतोऽधस्ताच्छेषं यथोपरि ।**
**प्रागूने वामसंस्थांस्तु संभवे महतो लिखेत् ॥ ३१६ ॥**
**अल्पानसंभवे तालपूर्त्यै भूयोऽप्ययं विधिः ।**
**सर्वद्रुतावधिः कार्यः प्रस्तारोऽयं लघौ गुरौ ॥ ३१७ ॥**
**प्लुतौ व्यस्ते समस्ते च न तु व्यस्ते द्रुतेऽस्ति सः ।**

इति प्रस्तारः

(क०) तत्र प्रस्तारं लक्षयति—**न्यस्याल्पमित्यादि** । स्वाभिमतं यं कंचन तालं प्रकृतत्वेन आदौ लिखित्वा तदवयवेषु, **आद्यात् महतः** ; अत्र महच्छब्देन लघुगुरुप्लुता उच्यन्ते । तेषु एकस्मात् आदिभूतात् महतोऽधस्तात् **अल्पं न्यस्य,** अत्र अल्पशब्देन द्रुतलघुगुरव उच्यन्ते । अयमर्थः—यत्र आद्यो लघुः महान् ततोऽधस्तदपेक्षया अल्पो द्रुतो लेखनीयः । यत्र तु आद्यो गुरुः महान् ततोऽधस्तदपेक्षया अल्पो लघुर्लेखनीयः । यत्र पुनराद्यः प्लुतो महान् ततोऽधस्तदपेक्षया अल्पो गुरुर्लेखनीयः । एवं नित्यमहान् प्लुतः, नित्याल्पो द्रुतः ; लघुगुर्वोस्त्वपेक्षया महत्वमल्पत्वं च द्रष्टव्यम् । **शेषं यथोपरीति** । लिखेदिति शेषः । यस्त्वनेकावयवस्तालः, तस्य आद्यात् महतोऽवयवात् **अधस्तात्** अल्पं न्यस्य शेषं दक्षिणभागस्थितत्वेन लेखनीयम् । यथोपरिपङ्क्तौ तथैवाधो लिखेदित्यर्थः । यस्त्वनेकावयवस्तालः, यश्चैकमहान् अन्त्यावयवः तत्रोपरितनस्य अवयवान्तरस्याभावादेवास्य लक्षणांशस्याव्यापार एव । **प्रागून इति** । प्रथमं न्यूने तालांशे **तालपूर्त्यै** प्रकृततालपरिपूर्तये **संभवे** सति । **महत इति** । प्लुतगुरुलघूनित्यर्थः । **असंभवे अल्पान्** द्रुतानित्यर्थः । **वामसंस्थान्** ; लेखकापेक्षया पूर्वलिखितावयवसंनिहितत्वेन वामभागस्थितान् लिखेदित्यर्थः । **भूयोऽप्ययं विधिः सर्वद्रुतावधिः कार्य** इत्यनेन वीप्सा गम्यते, भूयो

भूयोऽपीति; द्वितीयादिपङ्क्तिस्थान् तालान् प्रकृतीकृत्य अधोऽधः सर्वद्रुत-तालभेदान्तं लिखेदित्यर्थः। **प्रस्तारोऽयमित्यादि**। सोऽयमुक्तलक्षणः प्रस्तारः। व्यस्ते केवले लघौ प्रस्तारे यथा—एकं लघुं लिखित्वा तदधस्ततोऽन्यद्द्रुतं न्यसेत्। उपरि तालावयवाभावात् शेषाभावः। प्रागूने तालपूर्त्यै महतोऽसंभवात् अल्पं द्रुतं वामसंस्थं लिखेत्। एवं द्वितीयस्य भेदस्य सर्वद्रुतत्वात्ततः प्रस्तारो नोत्पद्यते। अतो लघुप्रस्तारे भेदद्वयमेव। व्यस्ते गुरौ प्रस्तारो यथा—एकं गुरुं लिखित्वा तदधस्तदपेक्षया अल्पं लघुं न्यसेत्। अत्रापि पूर्ववच्छेषाभावः। प्रागूने तालपूर्त्यै लघोर्महतः संभवात्तं वामसंस्थं लिखेत्। एवं द्वितीयभेदे लघुद्वयमभूत्। तत आद्यात् लघोरधस्तादल्पं द्रुतं न्यसेत्। उपरि लघोः सद्भावात् तदधः शेषत्वेन लघुं लिखेत्। प्रागूने तालपूर्त्यै द्रुतं लिखेत्। एवं द्रुतद्वयं लघुश्च तृतीयो भेदः। ततश्च लघोरधो द्रुतं लिखेत्। उपर्यभावाच्छेषाभावः। प्रागूने संभवात् द्रुतसंनिहितत्वेन लघुं लिखेत। ततस्तालपूर्तयेऽर्धमात्रसंभवात् लघुसंनिहितत्वेन द्रुतं लिखेत्। एवं द्रुतलघुद्रुतश्चतुर्थो भेदः। ततश्च लघोरधो द्रुतं लिखेत्। उपरि द्रुतस्य सद्भावाच्छेषत्वेन द्रुतं लिखेत्। प्रागूने संभवात् लघुं लिखेत्। एवं लघुर्द्रुतद्वयं पञ्चमो भेदः। ततश्च लघोरधो द्रुतं लिखेत। उपरि द्रुतद्वयस्य सद्भावाच्छेषत्वेन द्रुतद्वयं लिखेत्। प्रागूने त्वसंभवाद् द्रुतं लिखेत्। एवं द्रुतचतुष्टयं षष्ठो भेदः। तस्य सर्वद्रुतत्वात् ततः परं प्रस्ताराभाव एव। अतो गुरुप्रस्तारे षड्भेदाः। व्यस्तप्लुतप्रस्तारेऽप्युक्तरीत्या कृत एकोनविंशतिर्भेदा भवन्ति। व्यस्तेषु लघुषु लघ्वाद्यत्वम्, "आद्यन्तवदेकस्मिन्" (पा० १. १. २१) इति न्यायेन द्रष्टव्यम्। **समस्ते चेति**। सजातीयैर्विजातीयैर्वा सहिते च लघ्वादौ प्रस्तारोऽस्ति। **व्यस्ते द्रुते तु नास्ति**। ततोऽप्यल्पस्य तालावयवस्याभावादिति भावः॥३१६,३१७-॥

**इति प्रस्तारः**

(सु०) तेषां लक्षणं प्रतिज्ञाय प्रथमोद्दिष्टं प्रस्तारं लक्षयति—न्यस्येति। **आद्यात्** आदौ स्थापितात्, **महतः** प्लुतात्, गुरोर्लघोर्वा **अधस्तात्** अधः प्रदेशे **अल्पं न्यसेत्**। प्लुतस्याधस्तात् गुरुं, गुरोरधस्ताल्लघुं, लघोरधस्ताद् द्रुतमिति। एवं न्यस्य **उपरि** उपरिष्टात् यथा प्लुतादयो विद्यन्ते तथा शेषं लेखनीयम्। एवं ताल्या **संभवे सति वामसंस्थान्**; संस्था समाप्तिः येषां, तथाविधान् प्राक् पूर्वप्रदेशे **महत्सु संभवत्सु महतः** प्लुतादीन् लिखेत्। महतामसंभवे तु, **अल्पान् लिखेत्**। यावतां द्रुतानां तालस्तावतां द्रुतानां परिपूर्णाय प्लुतादीन् लिखेत्। एवं कृते सति पुनरप्ययं विधिः कर्तव्यः। प्रस्तारस्य विधिमाह—सर्वेति। यावत्ताल-परिपूरणसमर्थसंख्याकाः द्रुताः तावत्पर्यन्तं प्रस्तारः कार्यः। कुत्र? आदिभूते प्रस्तारे कार्य इत्यपेक्षायामाह—लघाविति। लघुगुरुप्लुते व्यस्ते पृथक् पृथक् स्थापिते केवले लघौ, केवले गुरौ, केवले प्लुते च कार्यः। समस्तेति। लघुप्लुतयोः, गुरुप्लुतयोः, लघुगुर्वोः प्लुतत्वे प्राप्ते, समस्तत्वासंभवात् द्रुतपूर्वं विलिख्य, द्रुते लघौ च, द्रुते गुरौ च, द्रुते प्लुते च न्यूनं द्रुतं पूर्वं विलिख्य प्रस्तारः कार्यः। निषेधमाह—व्यस्तेति। व्यस्ते; विपरीतस्थापिते लघ्वादौ द्रुते च न कर्तव्यः। पूर्वं महान् स्थापयित्वा पश्चादल्पेन कर्तव्यः। द्रुते च अल्पाभावोऽत्र कर्तव्य इत्यर्थः। अत्र दृष्टान्तार्थं षट्प्रस्तारं दर्शयामः—पूर्वं तावत्प्लुतो लेखनीयः, 'संभवे महतो लिखेत्' इत्युक्तत्वात्। ततः प्लुतस्याधो गुरुः पूर्वं षड्द्रुततालपूरणार्थं लघुः। एवं लघुगुरुरूपो द्वितीयो भेदः। ततो लघोरधस्तात् द्रुतः, पश्चाद्गुरुः, पूर्वं द्रुतः, एवं द्रुतद्वयं गुरुश्च तृतीयो भेदः। ततः गुरोरधस्तात् लघुः, पूर्वं गुरुः, एवं गुरुर्लघुश्चतुर्थो भेदः। ततः गुरोरधस्तात् लघुः, उपरि लघुः, लघोरधस्तात् द्रुतः, पश्चात् गुरुः, पूर्वं द्रुतः, एवं लघुत्रयं पञ्चमो भेदः। ततः प्रथमलघोरधस्तात् द्रुतः, ततो लघुद्वयं, पूर्वं द्रुतः, एवं द्रुतद्वयं लघुद्वयं च षष्ठो भेदः। ततः प्रथमलघोरधस्तात् द्रुतः, ततो लघुः, पूर्वं लघुद्रुते, ततश्च द्रुतः लघुद्रुतौ लघुश्चेति सप्तमो भेदः। ततः प्रथमलघोरधस्तात् द्रुतः, अनन्तरं द्रुतलघू, पूर्वं द्रुतः, ततश्च लघुर्द्रुतद्वयं लघुश्चेत्यष्टमो भेदः। ततः प्रथमलघोरधस्तात् द्रुतः, ततो द्रुतद्वयं लघुश्च, पूर्वं द्रुतः, ततश्च द्रुतचतुष्टयं लघुश्च नवमो भेदः। ततो लघोरधस्तात् द्रुतपूर्वं

**एकद्व्यङ्कौ क्रमान्न्यस्य युञ्जीतान्त्यं पुरातनैः ॥ ३१८ ॥**
**द्वितीयतुर्यषष्ठाङ्कैरभावे तुर्यषष्ठयोः ।**
**तृतीयपञ्चमाङ्काभ्यां क्रमात्तं योगमग्रतः ॥ ३१९ ॥**

गुरुर्द्रुतश्च, ततश्च द्रुतो गुरुर्द्रुतश्चेति दशमो भेदः । ततो गुरोरधस्तात् लघुः, अनन्तरं द्रुतः, पूर्वं लघुर्द्रुतश्च, ततश्च द्रुतो लघुद्वयं द्रुतश्चेत्येकादशो भेदः । ततः प्रथमलघोरधस्तात् द्रुतः, तत उपरिगताः द्रुतलघुप्लुताः । एवं पूर्वं द्रुतः; अनन्तरं द्रुतः, पूर्वं लघुर्द्रुतश्चेति द्वादशो भेदः । ततः प्रथमलघोरधस्तात् द्रुतः, ततोपरिगताः द्रुतलघुद्रुताः । पूर्वं द्रुतः, ततश्च द्रुतत्रयं लघुर्द्रुतश्च त्रयोदशो भेदः । ततो लघोरधस्तात् द्रुतः, अनन्तरं द्रुतपूर्वं गुरुः, एवं गुरुर्द्रुतद्वयं चेति चतुर्दशो भेदः । ततो गुरोरधस्तात् लघुः, अनन्तरं द्रुतद्वयं पूर्वं लघुः, एवं लघुद्वयं द्रुतद्वयं च पञ्चदशो भेदः । ततः प्रथमलघोरधस्तात् द्रुतः, ततो लघुर्द्रुतद्वयं च, पूर्वं द्रुतः, ततश्च द्रुतद्वयं, लघुर्द्रुतद्वयं चेति षोडशो भेदः । ततो लघोरधस्तात् द्रुतः, अनन्तरं द्रुतद्वयं, पूर्वं लघुद्रुतौ ततश्च द्रुतो लघुः, द्रुतत्रयं चेति सप्तदशो भेदः । ततो लघोरधस्तात् द्रुतः, अनन्तरं द्रुतत्रयं, पूर्वं लघुः, ततश्च लघुर्द्रुतचतुष्टयं चेत्यष्टादशो भेदः । ततो लघुरधस्तात् द्रुतः, अनन्तरं द्रुतचतुष्टयं, पूर्वं द्रुतः, एवं द्रुताः षट्, एवमेकोनविंशतिभेदः । ततो लघ्वक्ष्वक्षराभावात्प्रस्तारो नास्ति ॥ ३१६, ३१७- ॥

इति प्रस्तारः

(क०) संख्यां लक्षयति—**एकद्व्यङ्कावित्यादि** । **क्रमादिति** । एकाङ्कं प्रथमं न्यस्य तदनन्तरं द्व्यङ्कं तिर्यक्पङ्क्तिगतत्वेन दक्षिणसंस्थं न्यस्येदित्यर्थः । अन्त्यमङ्कं पुरातनैर्वामस्थैरन्त्यापेक्षया द्वितीयतुर्यषष्ठाङ्कैर्यथासंभवं योजयेत् । प्रथमं तावदन्त्यभूतं द्व्यङ्कम् । अत्र पुरातनेषु द्वितीयस्यैव सद्भावात् तेनैकाङ्केन सह योजयित्वा त्र्यङ्कं दक्षिणसंस्थं लिखेत् । ततस्तमन्त्यभूतं पुरातनेषु द्वितीयेन द्व्यङ्केन, 'अभावे तुर्यषष्ठयोः', 'तृतीयपञ्चमाङ्काभ्यां क्रमाद् युञ्जीत' इति वचनादत्र तुर्याभावे तत्प्रतिनिधिना

**लिखेद्दक्षिणसंस्थैवमङ्कश्रेणी विधीयते ।**
**सा चाङ्कैरिष्टतालस्थद्रुतसंख्यैः समाप्यते ॥ ३२० ॥**

तृतीयेनैकेन योजयित्वा त्र्यङ्कानन्तरं षडङ्कं लिखेत् । तमन्त्यभूतं पुरातनेषु द्वितीयेन त्र्यङ्केण तुर्येणैकाङ्केन च योजयित्वा षडङ्कादनन्तरं दशाङ्कं लिखेत् । ततस्तमन्त्यं पुरातनेषु द्वितीयतुर्याभ्यां षडङ्कद्व्यङ्काभ्यां षष्ठाभावे तत्प्रतिनिधिना पञ्चमेनैकाङ्केन च योजयित्वा दशाङ्कानन्तरमेकोनविंशत्यङ्कं लिखेत्। ततस्तमन्त्यं पुरातनैर्द्वितीयतुर्यषष्ठैर्दशाङ्कत्र्यङ्कैकाङ्कैर्योजयित्वा त्र्ययस्त्रिंशदङ्कं लिखेत् । **एवमङ्कश्रेणी दक्षिणसंस्था विधीयत इति** । लिखितुरपेक्षयेति द्रष्टव्यम् । न तूर्ध्वाधो वामसंस्था वेत्यर्थः । **सेति** । **सा च;** अङ्कश्रेणी । **इष्टतालस्थद्रुतसंख्यैरिति;** ज्ञातुरिष्टो यस्तालः, तत्र स्थितानां द्रुतानां संख्या सा येषां तैरङ्कैः । **समाप्यत इति** । अयमर्थः—प्रस्तारादिपरीक्षां कर्तुर्य इष्टस्तालः, तस्मिन् सर्वद्रुते कृते सति यावन्तो द्रुता भवन्ति, तावन्त एव संख्याकान् लिखेदिति ॥ -३१८–३२० ॥

(सु०) अथ संख्यां निरूपयति—**एकद्व्यङ्काविति** । एकाङ्कं द्व्यङ्कं च क्रमात् न्यस्य स्थापयित्वा, अन्त्यमङ्कं **पुरातनैः** पूर्वप्रदेशस्थितैः द्वितीयचतुर्थषष्ठाङ्कैः सह युञ्जीत मेलयेत्; चतुर्थषष्ठयोरङ्कयोरभावे तृतीयपञ्चमाभ्यां; तुर्याभावे तृतीयेन सह; षष्ठाभावे पञ्चमेनाङ्केन सहान्त्यमङ्कं युञ्जीतेति संबन्धः । तं **योगं** यथासंभवमन्त्यद्वितीययोः, अन्त्यद्वितीयतुर्याणां, अन्त्यद्वितीयचतुर्थषष्ठानां क्रमात् अग्रतः लिखेत् । एवं दक्षिणतः दक्षिणप्रदेशे **संस्था** समाप्तिर्यस्याः । एवंविधा अङ्कानां **श्रेणी** पङ्क्तिः क्रियते । सा कियदवधि कर्तव्येत्यपेक्षायामाह—**सा चेति** । **इष्टतालस्थद्रुतसंख्यैः**; इष्टो यस्तालः, षड्द्रुतः, सप्तद्रुतोऽष्टद्रुतो वा, तत्र स्थिताः यावन्तो द्रुताः तावत्संख्यैरङ्कैः समापनीयाः । षड्द्रुततालसंख्यायां जिज्ञासितायामेवमङ्का लेख्याः । सप्ताष्टद्रुततालेऽप्येवं ज्ञेयम् ॥ -३१८–३२० ॥

द्रुतो लघुः सार्धमात्रो गुरुः सार्धद्विमात्रिकः।
प्लुतः सार्धत्रिमात्रश्चेत्येकैकद्रुतवर्धितैः ॥ ३२१ ॥
तालभेदाः क्रमादङ्कैः संख्यायन्ते स्थितैरिह।
यदङ्कयोगादन्त्योऽङ्को लब्धस्तैरन्ततः क्रमात् ॥ ३२२ ॥
भेदा द्रुतान्तलघ्वन्तगुर्वन्ताश्च प्लुतान्तकाः।
संख्यायन्त इति प्रोक्ताः संख्या निःशङ्कसूरिणा ॥ ३२३ ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | २ | ३ | ६ | १० | १९ | ३३ |

इति संख्या

(क०) एवमेवार्थं विवृण्वन् संख्यया ज्ञेयमाह—**द्रुतो लघुरित्यादिना**। **इह**; अङ्कश्रेण्यां स्थितैरेकेन द्रुतेनैकाङ्कः, लघुना द्व्यङ्कः, सार्धमात्रेण त्र्यङ्कः। अत्र मात्राशब्देन लघुरुच्यते; अर्धशब्देन द्रुतः; गुरुणा षडङ्कः; सार्धद्विमात्रिकेण दशाङ्कः; प्लुतेनैकेन विंशत्यङ्कः; सार्धत्रिमात्रिकेण त्रयस्त्रिंशदङ्क इत्यैकैकद्रुतवर्धितैरङ्कैरेकादिभिः **क्रमात् तालभेदाः** प्रस्तारप्रकाशिताः तालभेदाः संख्यायन्ते। ज्ञेयान्तरमप्याह—**यदङ्कयोगादित्यादि**। **यदङ्कयोगात्**; येषामङ्कानामन्त्यद्वितीयतुर्यषष्ठानां यथासंभवं स्थितानां तुर्यषष्ठयोरभावे तत्प्रतिनिध्योस्तृतीयपञ्चमयोर्वा **योगात्** अन्त्याङ्को लब्धः, **तैः**; अन्त्याङ्कलाभहेतुभिः अन्त्यादिभिः। **अन्ततः क्रमात् द्रुतान्तलघ्वन्तगुर्वन्ताश्च प्लुतान्तकाः भेदाः संख्यायन्त इति**। अन्त्याङ्केन द्रुतान्ता भेदाः संख्यायन्ते; द्वितीयाङ्केन लघ्वन्ता भेदाः, तुर्येण तदभावे तत्प्रतिनिधिना तृतीयेन वा गुर्वन्ता भेदाः, षष्ठेन तदभावे तत्प्रतिनिधिना पञ्चमेन वा प्लुतान्ता भेदाः संख्यायन्त इति क्रमो द्रष्टव्यः। प्रतिनिधिस्थले बहुवचनमविवक्षितम्। तत्र बहूनामसंभवात्। उदाहरणार्थं प्लुतप्रस्तारे द्रुतान्तादयो भेदाः प्रदर्श्यन्ते। प्लुते प्रवृत्त एकोनविंशतिर्भेदा भवन्ति।

**अत्रैतावतिथो भेदः किंरूप इति पृच्छति।**
**यत्र तन्नष्टमाख्यातं तस्योत्तरमिहोच्यते ॥ ३२४ ॥**

एकोनविंशतिसंख्याकलापस्य बहवोऽङ्काः। अन्त्यो दशाङ्कः, तेन दश द्रुतान्ता भेदाः। द्वितीयः षडङ्कः, तेन लघ्वन्ता षड्भेदाः। चतुर्थो द्व्यङ्कः, तेन गुर्वन्तौ द्वौ भेदौ। षष्ठः प्रतिनिधित्वेन पञ्चमैकाङ्कः, तेन प्लुतान्त एको भेदः। एवमेतैरङ्कैरेकोनविंशतिर्भेदाः संख्यायन्ते। एवं सर्वत्र द्रष्टव्यम् ॥ ३२१–३२३ ॥

इति संख्या

(सु०) संख्यानिरूपणे प्रयोजनमाह—द्रुत इति। एकैकेन द्रुतेन वर्धितेन ताले अवस्थितैरङ्कैः क्रमात् यथासंख्यातैरङ्कानां संख्या ज्ञायते। तामेव ताले एकैकद्रुते स्थापनाप्रकारमाह— द्रुत इत्यादिना। एकद्रुतताले एको द्रुत एव स्थाप्यः, द्विद्रुते लघुः। त्रिद्रुते अर्धमात्रया द्रुतेन सहितः सार्धमात्रो लघुरित्यनुषङ्गः। चतुर्द्रुतेऽर्धमात्रया द्रुतेन सहितो द्विमात्रो गुरुः। षड्द्रुते प्लुतः। सप्तद्रुते मात्रया द्रुतेन सहितस्त्रिमात्रः। इतःपरमपि वर्धनं प्लुतं लिखित्वा द्रुतलघ्वादि योजनीयम्। अष्टद्रुते लघुः प्लुतश्च। नवद्रुते द्रुतो लघुः प्लुतश्च। दशद्रुते गुरुः प्लुतश्च। एकादशद्रुते द्रुतो गुरुः प्लुतश्च। द्वादशद्रुते प्लुतद्वयम्। त्रयोदशद्रुते द्रुतत्रयं गुरुः प्लुतश्चेत्यादि। एवंविधे ताले प्रस्तारेण जाता भेदा अत्र स्थितैरङ्कैर्ज्ञातव्या इति संबन्धः। अवान्तरप्रयोजनं संख्यानिरूपणमाह—यदङ्केति। येषामङ्कानां योगात् मेलनात् अन्त्यमङ्कः पूर्वोक्तप्रकारेण लभ्यते। तैरङ्कैः अन्ततः अन्त्यादारभ्य क्रमात् द्रुतान्तादयो भेदाः संख्यायन्ते। अन्त्येन द्रुतान्ताः; द्वितीये लघ्वन्ताः; चतुर्थेन गुर्वन्ताः; षष्ठेन प्लुतान्ताः, यथा सप्तद्रुतप्रस्तारे त्रयस्त्रिंशद्भेदाः। तेषु एकोनविंशतिर्द्रुतान्ताः; दश लघ्वन्ताः; त्रयो गुर्वन्ताः; एकः प्लुतान्त इति ॥ ३२१–३२३ ॥

इति संख्या

(क०) अथ नष्टं लक्षयति—**अत्रैतावतिथ इति**। अत्रैतावद्भेदवत्युक्तताल एतावतिथो भेद इति पूरणसंख्यामुद्दिश्य किंरूप इति भेदस्वरूपं यत्र

**भेदानां यावतां मध्ये नष्टप्रश्नः कृतो भवेत् ।**
**तावत्संख्याङ्कपर्यन्तां लिखेत्संख्याङ्कसंततिम् ॥ ३२५ ॥**
**अन्त्याङ्के तत्र नष्टाङ्कं पातयेदथ शेषतः ।**
**पातयेत्पूर्वपूर्वाङ्कं तत्र त्वपतितो द्रुतः ॥ ३२६ ॥**
**पूर्वश्चेत्पतितो न स्याल्लघुस्तु पतिताद्भवेत् ।**
**उत्तरेणाकृतार्थेन सहितात्तदसंभवे ॥ ३२७ ॥**

पृच्छति तन्नष्टमित्याख्यातम् । **तस्योत्तरमिति** । **तस्य**; नष्टस्य, **उत्तरं**; भेदस्वरूपनिरूपणोपाय इत्यर्थः । तमुपायं दर्शयति— **भेदानामित्यादिना** । सोदाहरणं दर्शयामः । **यावतां भेदानां मध्य इति** । प्लुतप्रस्तारे तावदेकोनविंशतिर्भेदा भवन्ति । तेषां मध्ये नष्टप्रश्नः । नष्टस्य भेदस्यात्र पञ्चदशो भेदः किंरूपः ? इति प्रश्नः कृतो भवेत् । **तावत्संख्याङ्कपर्यन्तं संख्याङ्कसंततिं लिखेदिति** । अत्र प्रथममेकाङ्कं द्वितीयं द्व्यङ्कं तृतीयं त्र्यङ्कं चतुर्थं षडङ्कं पञ्चमं दशाङ्कं षष्ठमेकोनविंशत्यङ्कमेवमेकोनविंशतिसंख्याङ्कपर्यन्तां संख्याङ्कसंततिं लिखित्वा तत्रान्त्याङ्क एकोनविंशत्यङ्के नष्टभेदपूरणाङ्कमत्र पञ्चदशाङ्कं पातयेत् । अथ शेषतः शेषे, सार्वविभक्तिकस्तसिः । **शेषत** इति । एकोनविंशतौ पञ्चदशस्वपनीतेषु चत्वारः शेषः, तस्मिन् चतुरङ्के । **पूर्वपूर्वाङ्कं पातयेदिति** । प्रथमं संनिहितं पूर्वं दशाङ्कं पातयेत् । अत्रावशिष्टे चतुरङ्के दशाङ्कोऽपतितो भवति । एवमपतिताङ्काद् द्रुतो लब्धो भवति । चतुरङ्के दशाङ्कात्पूर्वस्य षडङ्कस्याप्यपातादपतितात्ततोऽपि द्वितीयो द्रुतो लब्धो भवति । अत्र लब्धान् द्रुतादीन् द्वितीयादीन् वामसंस्थत्वेन लिखेत् । पूर्वः पतितो न स्याच्चेत्, पतितादङ्कादकृतार्थेनोत्तरेण सहितात् तदसंभवेऽकृतार्थेन पूर्वेण सहिताद्वा लघुर्भवेदित्येकं वाक्यम् । अत्र चतुरङ्के त्र्यङ्कस्य पातसंभवात् तच्छेष एकस्मिन् पूर्वस्य द्व्यङ्कस्यापातात् अकृतार्थेनापतितेनोत्तरेण षडङ्केन सहितात् चतुरङ्के पतितात् त्र्यङ्कात् लघुर्लब्धो भवति । अथैकमवशिष्टम् ।

अकृतार्थेन पूर्वेण सान्तरे पतिते पृथक् ।
लघुर्निरन्तरे त्वस्मिँल्लघुरेव गुरुर्भवेत् ॥ ३२८ ॥
गुरुहेतोस्तृतीये तु पतिते गः प्लुती भवेत् ।
अङ्काभावे द्रुता ग्राह्यास्तालपूरणहेतवः ॥ ३२९ ॥
इति नष्टस्य विज्ञेयमुत्तरं रूपनिर्णयात् ।

इति नष्टम्

**सान्तरे पतिते पृथग्लघुर्भवेदिति** । अत्रावशिष्ट एकस्मिन्नेकाङ्कस्य सान्तरपतितत्वात् अकृतार्थेन द्व्यङ्केन सह पृथग्लघुर्लब्धो भवति । **पृथगिति** । पूर्वलब्धेन लघुना सह गुरुरूपतां हित्वेत्यर्थः । अत्र शेषाङ्कपातनीयाङ्कयोरभावेऽपि त्रिमात्रिकस्य तालस्य लघुद्वयेन द्रुतद्वयेन च पूर्णत्वात् तालपूरणहेतवो द्रुता ग्राह्या न भवन्ति । **अस्मिन्निरन्तरे तु लघुरेव गुरुर्भवेदिति** । तत्रैव प्लुतप्रस्तारे दशमः किंरूपः ? इति नष्टप्रश्ने कृते सत्यन्तभूत एकोनविंशत्यङ्के नष्टपूरके दशाङ्के अपनीते सति, शेषे नवाङ्के पूर्वस्य दशाङ्कस्यापातादपतितात् तस्माद् द्रुतो लब्धो भवति । अथ तत्पूर्वयोः षडङ्कत्र्यङ्कयोः निरन्तरयोः पातात् अस्मिन् लघुहेतावङ्के निरन्तरे लघुहेतुना अङ्कान्तरेणाव्यवहिते सति, स लघुरेव लघ्वन्तरेण मिलितो गुरुर्भवति । तमत्र लब्धस्य द्रुतस्यानन्तरं लेखकापेक्षया वामसंस्थं लिखेत् । अत्र पातनीयस्यैकाङ्कस्य सद्भावेऽपि शेषाङ्काभावात्तालपूरणहेतुर्द्रुतोऽत्र ग्राह्यः । सोऽपि पूर्ववद्वामसंस्थो लेखनीयः । **गुरुहेतोस्तृतीये तु पतिते गः प्लुती भवेदिति** । अत्रैव प्लुतस्य प्रस्तारे प्रथमो भेदः किंरूपः ? इति नष्टस्य प्रश्ने सति तत्रान्त्याङ्क एकोनविंशत्यङ्क एकाङ्केऽपनीते सत्यवशिष्टेऽष्टादशाङ्के पूर्ववत् पूर्वयोर्दशाङ्कषडङ्कयोर्निरन्तरयोः पातात् गुरुर्लब्धो भवति । तत्रापि षडङ्को गुरुर्लाभहेतुर्भवति । तस्मात्तृतीयस्य द्व्यङ्कस्याप्यत्र पातात् तस्मिन् पतिते सति **गो** गुरुः

प्लुती भवेत्। पूर्वमप्लुतः तदा प्लुतो भवति। स एवात्र प्रथमभेदत्वेन लेखनीयः। **अङ्काभाव इति**; शेषाङ्कपातनीयाङ्कयोरेकतरस्याप्यभावे, **द्रुता ग्राह्या** इत्यत्र बहुवचनमविवक्षितं यथासंभवं द्रष्टव्यम्। किंच तत्रैव प्लुतप्रस्तारे सप्तमो भेदः कः? इति प्रश्न एकोनविंशतौ सप्तस्वपनीतेषु द्वादशावशिष्टा भवन्ति। तत्र पूर्वस्मिन् षडङ्के पतिते सत्यकृतार्थस्योत्तरस्याभावेऽप्यकृतार्थेन पूर्वेण सहिताद्दशाङ्कात् लघुर्लब्धो भवति। अथ द्वादशाववशिष्टौ। तत्रापतितास्त्र्यङ्कात् द्रुतो लब्धो भवति। ततः पतिताद्व्यङ्कादकृतार्थेन पूर्वेणैकाङ्केन सहिताल्लघुर्लब्धो भवति। ततोऽङ्काभावात् तालपूरणहेतुर्द्रुतो ग्राह्यः। अत्रायं संप्रदायो ज्ञेयः—यत्र प्रथमो लघुः पतितादङ्कादकृतार्थेनोत्तरेण तदसंभवे पूर्वेण वा तादृशेन सहिताल्लब्धो भवति; तत्र लघ्वन्तरेऽपि स एव क्रमोऽनुसंधेय इति। एतत्सर्वं प्लुतप्रस्तारे दर्शितम्। एवं सर्वत्र प्रस्तारेषु द्रष्टव्यम्। **इति नष्टस्य** भेदस्वरूपनिर्णयात् नष्टप्रश्नस्योत्तरं विज्ञेयम्। इह नष्टस्वरूपनिरूपणोपायः प्रत्ययोऽप्युपचारान्नष्टमित्युक्तः। उत्तरपरत्वेन नपुंसको निर्देशः॥ ३२४-३२९- ॥

## इति नष्टम्

(सु०) नष्टं निरूपयति—**अथेति**। **एतावतिथः**; एतावत्संख्याकः, पूर्णभेदेषु किं रूपः? इति संख्यामुद्दिश्य भेदस्वरूपं यत्र पृच्छति, तन्नष्टमित्युच्यते। **इह**; तस्य नष्टस्य उत्तरमुच्यते। यावतां भेदानां मध्ये षड्द्रुतानां सप्तद्रुतानामष्टादिद्रुतानां मध्ये नष्टस्य प्रश्नः कृतः, तावत्संख्याकमवधीकृत्य संख्याङ्कानां श्रेणीं पूर्वोक्तप्रकारेण लिखेत्। एवं कृत्वा नष्टं संख्याङ्कमन्त्याङ्कमध्ये पातयेत् न्यूनी कुर्यात्। अथ पातयित्वा शेषतः अवशिष्टे अन्त्याङ्के अन्त्याङ्कात् पूर्वपूर्वमेकं पातयेत्। यो योऽङ्कः पतति तत्राभिज्ञानं कुर्यात्। तत्र त्वपतितादङ्कात् द्रुतो लभ्यत इत्युत्सर्गः। अपवादमाह—पूर्वश्चेति। पूर्वाङ्को यदि पतितो न स्यात्, तदापतितात् द्रुतः। ततः किंभवेदित्यपेक्षायामाह—उत्तरेणेति।

उत्तरेणाकृतार्थेन सहितात्पतितो लघुः, तदसंभवे उत्तरस्याकृतार्थत्वात्संभवे लघूत्पातनेनाकृतार्थत्वे सति अकृतार्थेन पूर्वेण सह पतितात् लघुः। निरन्तरे पतिते सति विशेषं कथयितुं सान्तरे पूर्वोक्तमनुवदति—सान्तर इति। सान्तरे; एकाङ्कव्यवधाने अङ्कद्वये पतिते सति पृथक् लघुः लघुद्वयं कर्तव्यम्। निरन्तरे पतिताङ्कद्वये लघुरेव पूर्वोक्तलघुना सह गुरुर्भवेत्। गुरुहेतोः पतितादङ्कात् तृतीये पतिते; वक्ष्यति, 'गुरुरेव पतितापतिताभ्यां द्वाभ्यां सह प्लुतो भवति' इति। अङ्कानां संख्याः तालपूरणहेतवः यावत् द्रुतलाभस्तावत्संख्याकाः द्रुता ग्राह्या इति नष्टप्रश्नस्योत्तरं ज्ञेयम्। रूपनिर्णयात्; संख्यायां पृष्टायां स्वरूपकथनादित्यर्थः।

अत्र षड्द्रुतप्रस्तारे दृष्टान्तं दर्शयामः—तत्र षड्द्रुतप्रस्तारे प्रथमो भेदः कीदृगिति प्रश्ने; संख्याया अन्त्योऽङ्क एकोनविंशतिः, तस्मादेकस्मिन् पतिते सति अवशिष्टेषु अष्टादशसु पूर्वे एकादशाङ्कः पातितः। तस्मिन् पातिते अवशिष्टेष्वष्टसु ततः पूर्वाङ्कः पातितः। ततोऽवशिष्टद्वये षडङ्कात् पूर्वस्य त्र्यङ्कस्य पातनात् ततः पूर्वो द्वयङ्कः पातितः। एवं पातस्थानेष्वभिज्ञानं कृत्वा 'निरन्तरे त्वस्मिन् लघुरेव गुरुर्भवेत्' इति न्यायेन प्राप्तिर्लभ्यते, चतुर्भिरन्तस्थितैरङ्कैर्गुरुर्लभ्यते। गुरुहेतोः षडङ्कात् पतितात् तृतीयस्य द्वयङ्कस्य पातितत्वात् स एव गुरुः पतितापतिताभ्यां सह प्लुतो भवति। ततश्च प्रथमो भेदः प्लुतरूपः सिद्ध्यति। तस्मिन्नेव षड्द्रुतप्रस्तारे द्वितीयो भेदः कीदृगिति प्रश्ने; एकोनविंशतिमध्ये द्वयङ्के पातिते सति सप्तदशावशिष्टाः। तेषु दश, षडङ्कश्च पातितः। 'निरन्तरे त्वस्मिन् लघुरेव गुरुर्भवेत्' इति न्यायेन अन्त्यैश्चतुर्भिर्गुरुः। लघुस्तु पातितात् भवेत्। उत्तरेणाकृतार्थेन सहितादिति पूर्वाङ्कद्वयेन लघुः। ततश्च लघुर्गुरुश्च द्वितीयो भेदः। अत्रैव तृतीयो भेदः कीदृगिति प्रश्ने; एकोनविंशतौ अङ्के पातिते अवशिष्टेषु षोडशसु दशषडङ्कौ पातितौ, निरन्तरे त्वस्मिन्निति गुरुः। अपतित इति। पूर्वं द्रुतद्वयं, ततश्च द्रुतद्वयं गुरुश्च तृतीयो भेदः। एवं चतुर्थे भेदे पृष्टे चतुर्न्यूनान्त्याङ्के पञ्चदशसु दशाङ्कः। अङ्को द्विकश्च पातितः। पूर्वाङ्कचतुष्टयेन गुरुः। उत्तराङ्कद्वयेन लघुरित्यादि ज्ञेयम्॥ ३२४–३२९-॥

इति नष्टम्

ईदृग्रूपोऽत्र कतिधा भेदः प्रश्न इतीदृशः ॥ ३३० ॥
उद्दिष्टं तत्र संख्याङ्कसंततिं नष्टवल्लिखेत् ।
यैरङ्कैः पतितैर्नष्टे लभ्यन्ते ये प्लुतादयः ॥ ३३१ ॥
तानेवाङ्काँल्लभन्ते ते भेदमुद्दिष्टमाश्रिताः ।
यद्वा षट्प्लुतहेत्वङ्कमध्ये ऽन्त्यात्प्राचि सप्तमे ॥ ३३२ ॥
तदभावे तु षष्ठाङ्के पातितेऽन्त्याङ्कमध्यतः ।
यः शेषः स प्लुताल्लभ्यो लब्धहीनान्त्यशेषतः ॥ ३३३ ॥
ज्ञानं पूरणसंख्याया उद्दिष्टोत्तरमिष्यते ।

इत्युद्दिष्टम्

(क०) अथोद्दिष्टं लक्षयति—**ईदृग्रूप इत्यादि** । **अत्र** प्रकृते ताल-प्रस्तारे, **ईदृग्रूप** इति भेदस्वरूपमुद्दिश्य कतिधा भेद इति तस्य पूरणसंख्यां पृच्छति चेत्, ईदृशः प्रश्न उद्दिष्टमित्युच्यते । **तत्र**; उद्दिष्टे । **नष्टवत् संख्याङ्कसंततिं** लिखेदिति । अत्रापि सोदाहरणं वक्ष्यामः । प्लुतप्रस्तारे एकोनविंशत्यङ्कानां संततिं लिखित्वा लघुद्वयेन द्रुतद्वयेन च युक्ते भेद उद्दिष्टे सति नष्टे यैः पतितैरङ्कैः ये प्लुतादयो लभ्यन्ते, उद्दिष्टं भेदमाश्रिताः, ते प्लुतादयः तानङ्कानेव लभन्त इति । नष्टे अन्त्यावयवस्य पूर्वलब्धत्वात् उद्दिष्टेऽप्यन्त्यावयवादि द्रष्टव्यम् । नष्टे हि द्रुतानामपतितादङ्काद्वा तालपूरणत्वेन वा लब्धत्वात् उद्दिष्टभेदस्थिताद् द्रुतात् न कोऽप्यङ्को लभ्यते । अत्रान्त्यो-पान्त्यद्रुताभ्यामपतितावन्त्यद्वितीयौ दशाङ्कषडङ्कौ विहाय तृतीयेन लघुना पतितस्त्र्यङ्को लभ्यते । ततोऽपि चतुर्थावयवेन लघुना सान्तरपतित एकाङ्को लभ्यते । तेनात्र लभ्येनाङ्कद्वयेन चत्वारो लब्धाः । **लब्धहीनान्त्यशेषत इति** । एवं लब्धेन चतुरङ्केण हीनोऽन्त्य एकोनविंशत्यङ्कः । तस्य शेषतः पञ्चदशाङ्के । **पूरणसंख्याया इति** । अयं भेदः पञ्चदश इति

पूरणसंख्या, तस्या ज्ञानमित्युद्दिष्टस्योत्तरमिष्यते । तथा द्रुतगुरुद्रुत इत्युक्तं भेदमुद्दिश्यायं कतिधा इति संख्याप्रश्ने कृते तत्रान्त्येन द्रुतेनापतितमन्त्यं दशाङ्कं विहायान्त्योपान्त्येन गुरुणा निरन्तरपतितौ द्वितीयतृतीयौ षडङ्कत्र्यङ्कौ लभ्येते । ताभ्यां नव लब्धाः । तैर्हीनेऽन्त्य एकोनविंशत्यङ्केऽवशिष्टेषु दशस्वयं दशम इति पूरणसंख्याया ज्ञानमित्युद्दिष्टोत्तरम् । एवं सर्वत्र प्रस्तारेषु द्रष्टव्यम् । एतदेव व्यापकमुद्दिष्टोत्तरमवगन्तव्यम् ।

क्वचिल्लाघवार्थमव्यापकमप्युत्तरं दर्शयति—**यद्वेत्यादि । षट्प्लुतहेत्वङ्कमध्य इति** । अत्र षट्शब्देन पूरणप्रत्ययान्तः षष्ठशब्दो लक्ष्यते । प्लुतहेत्वङ्केत्यनेन षष्ठादीनां दक्षिणसंस्थानां सर्वेषां प्लुतहेतुत्वसामर्थ्यात् आदिशब्दोऽध्याह्रियते, षष्ठादिप्लुतहेत्वङ्कमध्य इति । षष्ठ एकोनविंशत्यङ्कः, सप्तमस्त्रयस्त्रिंशदङ्कः, अष्टमः षष्ठाङ्कः, नवमः षड्डुत्तरशताङ्काः, एवं दशमादयोऽपि द्रष्टव्याः । एवमेकोनविंशत्यादयो दक्षिणसंस्थाः । षष्ठादयस्ते सर्वेऽपि प्लुतहेतवः, तेषां मध्ये यः कश्चन प्रकृततालवशादन्त्यत्वेन कल्पितः । तस्मात् **प्राचि** पुरातने वामस्थे **सप्तमे, तदभावे तु षष्ठाङ्के** अन्त्यापेक्षया षष्ठाङ्के, **अन्त्याङ्कमध्यतः** अन्त्याङ्कमध्ये पातिते सति, **यः शेषः**, अन्त्याङ्कशेषः ; **सः प्लुताल्लभ्यत इति** । अयमर्थः—अत्रोद्दिष्टभेदे प्लुतो दृश्यते । अन्त्ये वा, मध्ये वा, आदौ वा, तत्रैवं विज्ञेयम् । प्लुतप्रस्तारे तावत्प्रथमभेद एव प्लुतो नान्यस्मिन् भेदे । तस्मिन्नेवोद्दिष्टे तत्रान्त्यस्य प्लुतहेतोरेकोनविंशत्यङ्कस्य मध्ये तदपेक्षया सप्तमस्य प्राचोऽङ्कस्याप्यभावात् षष्ठ एकाङ्के पातिते सत्यष्टादशावशिष्टाः, ते प्लुताल्लभ्या भवन्ति । तैर्हीनोऽन्त्यशेष एकः ; तस्मिन् पूरणसंख्याया ज्ञानमयं प्रथमो भेद इत्येतदुद्दिष्टोत्तरम् । **लब्धहीनान्त्यशेषत** इत्यादिपक्षद्वयस्य साधारणमित्यवगन्तव्यम् ।

यथा द्रुतवर्धितप्लुतप्रस्तारे द्रुतात्मके भेद उद्दिष्टे तत्र प्लुतहेतुषु मध्येऽन्त्यस्य त्रयस्त्रिंशदङ्कस्य मध्ये । ततः प्राचि सप्तम एकाङ्के पातिते सति द्वात्रि-

शदङ्कोऽवशिष्टः प्लुताल्लभ्यः। तेन हीनेऽन्त्यशेष एकस्मिन् पूरणसंख्याया ज्ञानमयं प्रथम इत्येतदुद्दिष्टोत्तरम्। तस्मिन्नेन प्रस्तारे प्लुतद्रुतात्मके भेद उद्दिष्टे तत्र द्रुतस्यान्त्यत्वात् अन्त्यं त्रयस्त्रिंशदङ्कं मुक्त्वा प्लुतस्योपान्त्यत्वात् उपान्त्य एकोनविंशत्यङ्के तदपेक्षया प्राचि षष्ठ एकाङ्के पातिते सति येऽवशिष्टाः दश, ते प्लुताल्लभ्या भवन्ति। तैर्हीनस्यान्त्यस्य त्रयस्त्रिंशदङ्कस्य शेषे पञ्चदशाङ्के पूरणसंख्याया ज्ञानमयं पञ्चदशो भेद इत्येतदुद्दिष्टोत्तरम्। तथा लघुप्लुतप्रस्तारे प्लुतलघ्वात्मके भेद उद्दिष्टे तत्र लघ्वोरन्त्यत्वात् तेनान्त्ये प्लुतहेतौ षष्ठाङ्के पतितः तत्पूर्वस्त्रयस्त्रिंशदङ्को लब्धः। अथोपान्त्येन प्लुतेन प्लुतहेतावेकोनविंशत्यङ्के, ततः प्राचि षष्ठ एकाङ्के पातिते सत्यष्टादशावशिष्टा लब्धाः। एवं लघुप्लुताभ्यां लब्ध एकपञ्चाशदङ्के तेन हीनस्यान्त्यस्य षष्ठाङ्कस्य शेषे नवाङ्के पूरणसंख्याया ज्ञानमयं नवमो भेद इत्येतदुद्दिष्टोत्तरम्।

तथात्रैव प्रस्तारे द्रुतप्लुतद्रुतात्मके भेदे उद्दिष्टे तत्र द्रुतस्यान्त्यत्वात् अन्त्यं षष्ठाङ्कं मुक्त्वा प्लुतास्योपान्त्यत्वेन उपान्त्ये त्रयस्त्रिंशदङ्के ततः प्राचि सप्तम एकाङ्के पातिते सति द्वात्रिंशदङ्कोऽवशिष्टः प्लुताल्लभ्यते। तेन हीनस्यान्त्यस्य षष्ठाङ्कस्य शेषेऽष्टाविंशत्यङ्के पूरणसंख्याया ज्ञानमयमष्टाविंशतितम इत्येतदुद्दिष्टोत्तरम्। तथा तत्रैव प्रस्तारे प्लुतद्रुतद्वयात्मके भेद उद्दिष्टे द्रुतद्वयस्यान्त्यत्वादन्त्योपान्त्यौ षष्ठाङ्कत्रयस्त्रिंशदङ्कौ विहायैकोनविंशत्यङ्के मध्ये, ततः प्राचि षष्ठ एकाङ्के पातिते सत्यवशिष्टोऽष्टादशाङ्कः प्लुताल्लब्धः। तेन हीनस्यान्त्यषष्ठाङ्कस्य शेषे द्विचत्वारिंशदङ्के पूरणसंख्याया ज्ञानमयं द्विचत्वारिंशत्तम इत्येतदुद्दिष्टोत्तरम्। तत्रैव प्रस्तारे द्रुतद्वयप्लुतात्मक उद्दिष्टे भेदे प्लुतस्यान्त्यत्वात् अन्त्ये षष्टयङ्के ततः प्राचि सप्तमेऽङ्के पातिते सत्यवशिष्टोऽष्टपञ्चाशदङ्कः प्लुताल्लब्धः। तेन हीनस्यान्त्यस्य षष्टयङ्कस्य शेषे द्व्यङ्के पूरणसंख्याया ज्ञानमयं द्वितीय

इत्येतदुद्दिष्टोत्तरम् । तत्रैव प्रस्तारे लघुप्लुतात्मके भेदे उद्दिष्टे पूर्ववत् द्व्यङ्कोऽवशिष्टः। अत्रोद्दिष्टस्थितेनोपान्त्येन लघुना नष्टे तल्लघुलाभहेतावेकाङ्के पातिते सति पुनरेकस्मिन्नवशिष्टे प्रथमोऽयं भेद इत्युत्तरम्। एवमुत्तरोत्तरेष्वप्यङ्केषु प्लुतयुक्तभेदो द्रष्टव्यः। प्लुतयुक्तभेदविषयत्वादेवास्योत्तरस्याव्यापकत्वम्।

ननु चानन्तरोदाहृतलघुप्लुतात्मके भेदे प्लुतस्यान्त्यत्वात् यद्वेति पक्षान्तराश्रयणेनान्त्यषष्टयङ्कमध्ये तदादिप्राचि सप्तमे द्व्यङ्के पातिते सति शेषत्वेनाष्टपञ्चाशदङ्कः प्लुताल्लब्धः। अथ लघुना पातितोऽङ्को लभ्यः। तत्रान्त्यशेषद्वये गुरुहेतोस्तृतीयत्वेन पतितात् षडङ्कात्पूर्वस्य त्र्यङ्कस्यापतितत्वेन नष्टे द्रुतः कथं न लब्धः। अत्र द्व्यङ्कैकाङ्कयोरेकतरस्य पातसंभवात् लघुना को लभ्यत इति संदेहः। तत्रैकाङ्के पातित एकस्यावशिष्टत्वात्प्रथमोऽयं भेद इत्युद्दिष्टोत्तरमिष्टं सिध्यति। द्व्यङ्केषु पातितेषु शेषाभावात् तन्न सिध्यत्येव। अत्र कथं निर्णय इति चेत्? उच्यते—प्रथमं तावत् नष्टो नष्टाङ्कभिन्नाङ्कशेषक्रमेण पूर्वाङ्केषु पातितेषु यावन्तः पातिताः तेभ्यस्तावन्तो द्रुता लभ्या एव। द्रुतस्य लाभानन्तरं वा आदित एव वा असहायपतिताल्लघुः। सान्तरपतितात्पृथग्लघुः। निरन्तरपतिताद् गुरुः। गुरुहेतोस्तृतीयात्पतितात्प्लुतो लभ्यत इत्युक्तमेव।

अत्रायं विशेषो विज्ञेयः—प्रथममपतितात् द्रुतो लभ्यत एव। पतितादनन्तरमपतितात्तु सर्वत्र द्रुतो न लभ्यते। किंतु द्रुतहेतुना अन्यथा वा यत्रोत्तरेणापतितेन सहितः पातितो लघुहेतुर्भवति, तत्र पतितानन्तरमपतितादपि पूर्वाङ्काद् द्रुतो न लभ्यते। एवं पतितादनन्तरमपतितात्तु सर्वत्र प्लुतो न लभ्यते। यत्र त्वपतितेन पूर्वेण सहितः पतितो लघुहेतुर्भवति, तत्र तस्मादपतितादपि द्रुतोन लभ्यत एव। ततः पूर्वादपतितात्तु द्रुतो लभ्यत एव। तस्मात् यत्र लघुर्लभ्यते तत्राङ्कद्वयं निवर्तते, यत्र गुरुर्लभ्यते तत्राङ्कचतुष्टयं निवर्तते, यत्र प्लुतो लभ्यते तत्राङ्कषट्कं निवर्तत इति न्यायस्य व्यापकत्वमुत्तरेणा-

कृतार्थेन सहितात्तदसंभवे, 'अकृतार्थेन पूर्वेण' इति वदता ग्रन्थकारेणैव सूचितम्। तस्मात् प्रकृते त्र्यङ्कादपतितादपि द्रुतलाभो नास्त्येव। पतितादपि द्व्यङ्काल्लघुलाभोऽपि नास्त्येव। द्वयोरपि प्लुतप्रापकाङ्कषट्कान्तर्भूतत्वेन निवृत्तत्वात्, इति प्रकृतभेदस्थो लघुर्नष्टेऽप्येकाङ्केन लब्ध इत्युद्दिष्टेऽप्यनेन लघुनैकाङ्क एव पतितो लभ्यत इति सर्वमवदातम् ॥ -२३०–२३३- ॥

इत्युद्दिष्टम्

(सु०) उद्दिष्टं निरूपयति—ईदृग्रूप इति। अत्र; प्रकृते तालप्रस्तारे, ईदृग्रूप इति? भेदस्वरूपः कतिधा किं संख्यापूरण इति रूपमुद्दिश्य संख्याप्रश्नः कृतश्चेत्, ईदृशः प्रश्न उद्दिष्टमित्युच्यते। तत्र नष्टवत संख्याङ्क-संततिं लिखेत्। एवं लिखितेषु तेषु नष्टपरिज्ञाने यैः पतितैः उद्दिष्टस्थापिताः प्लुतादयो लभ्यन्ते, ते प्लुतादयस्तानेवाङ्कान् लभन्ते। प्लुतस्यान्येनापि प्रकारेणाङ्कलाभमाह—ये इति। द्वितीयापेक्षया ये प्लुतहेतवोऽङ्काः तेषां मध्ये अन्त्याङ्कात् सप्तमे पूर्वाङ्के तस्याभावे तु षष्ठाङ्के अन्त्याङ्कमध्यात पातिते सति यः शेषः स प्लुताल्लभ्यते। लब्धैरङ्कैः किं कर्तव्यमित्यपेक्षायामाह—लब्ध हीनेति। लब्धैरङ्कैः विहीनः योऽन्त्याङ्कस्य शेषः, तस्मात् पूरणसंख्यायाः प्रथमद्वितीयादिसंख्यायाः ज्ञानमुद्दिष्टप्रश्नस्योत्तरम्। अत्र षड्द्रुतप्रस्तारे दृष्टान्तं दर्शयामः—तत्र प्लुतरूपो भेदः किं संख्यापूरण इति प्रश्ने एकाङ्कषडङ्कद्व्यङ्केषु पतितेषु नष्टैः प्लुतो लभ्यते। ततस्तेषां मेलनेन अष्टादश लब्धाः। द्वितीय-पक्षे तु—अन्त्याङ्कात् एकोनविंशत्यङ्कात् सप्तमस्याङ्कस्य पूर्वस्याभावात्। षष्ठाङ्क अन्त्यमध्ये पातिते अष्टादश लब्धाः। अयं तु प्लुतपक्षः। एवं लब्धाङ्कहीने अन्त्येऽङ्के एको लब्धः, ततश्च प्लुतरूपः प्रथमो भेदः। एवं द्रुतो गुरुश्च द्रुतश्च कतिधा भेद इति प्रश्ने, षडङ्के त्र्यङ्के च पतिते नष्टे द्रुतद्वय-मध्ये गुरुर्लभ्यते। ततश्च नव लब्धाः, नव हीने अन्त्याङ्के, एकोनविंशतौ दशावशिष्टाः। ततश्च दशमः, एवं सति प्लुतत्रये द्वितीयो भेद इति ज्ञेयम् ॥ -२३०–२३३- ॥

इत्युद्दिष्टम्

**परे कृतार्थे ग्राह्यः स्यादकृतार्थः पुरातनः ।**
**पतिताद् गुरुलाभः स्यात्सह प्राचा तदा परा ॥ ३८१ ॥**
**चतुरङ्गी निवर्तेत पतिते पञ्चमेऽप्यथ ।**
**गुरुः प्लुती भवेत्प्राचा सह चैषा निवर्तते ॥ ३८२ ॥**
**रूपाप्तौ प्रापकाङ्केभ्यः शेषेष्वेष पुनर्विधिः ।**
**गुरुलाभे त्वपातार्हः पञ्चमः शेषतां व्रजेत् ॥ ३८३ ॥**
**अङ्काभावे तु गृह्यन्ते लघवस्तालपूर्तये ।**

इति द्रुतमेर्वध:पङ्क्तिसमकोष्ठनष्टम्

पञ्चमस्य वा शेषाङ्कानन्तर्भावे सतीत्यर्थः । **परो यद्यकृतार्थः स्यादिति ।** तृतीयात्परस्य विषमकोष्ठस्थस्याकृतार्थत्वे । **यदीति** संभावना । तस्य कचित्कृतार्थत्वमपि संभवतीत्यर्थः । **सह तेनेति ।** अकृतार्थेन सह पाते लघुर्लभ्यते । **अथ चेदिति ।** अथ परावुभावकृतार्थौ चेत्, ततस्ताभ्यां स्वं विनैवैष लभ्यत इत्यर्थः । ततस्तर्हि ताभ्यामकृतार्थाभ्यां पराभ्यामेव, **स्वं विना ;** स्वशब्देनात्र तृतीयपञ्चमावुच्येते । तृतीयं वा पञ्चमं वा विनेत्यर्थः । एवं लघुर्लभ्यते । **परे कृतार्थ इति ।** परस्मिन् कृतार्थे सत्यकृतार्थः पुरातनो ग्राह्यः स्यात् । **पतिताद्गुरुलाभ इति ।** तृतीयात्पञ्चमाद्वा पतिताद्गुरुलाभः स्यात् । **सह प्राचेति ।** तदा गुरुलाभकाले प्राचा सह पतिताङ्कपूर्वेणाङ्केन सहिता परा चतुरङ्गी । चतुर्णामङ्कानां समाहारः । निवर्तेत गुरुलाभहेतुत्वेन कृतार्थत्वादित्यर्थः । **पतिते पञ्चमेऽप्यथेति ।** अथ तृतीयपातानन्तरं पञ्चमेऽपि पतिते सति गुरुः प्लुती भवेत् । **प्राचा सह चैषा निवर्तत इति ।** प्राचा षष्ठाङ्केन सहैषा च परा षडङ्गीत्यर्थः । निवर्तते प्लुतहेतुत्वेन कृतार्थो भवतीत्यर्थः । **रूपाप्ताविति ।** प्रापकाङ्केभ्यो लघ्वादिस्वरूपलाभे सति

यदि शेषाङ्काः संभवेयुः, तदा शेषेषु तेष्वङ्केष्वेष एव विधिः पुनः कार्यः। गुरुलाभे सत्यपातार्हः पञ्चमः शेषतां व्रजेत्; पञ्चममारभ्य प्राक्तनाः शेषा भवन्तीत्यर्थः। एवं प्लुतलाभे सप्तमः शेषतां व्रजेदिति द्रष्टव्यम्। **अङ्काभावे त्विति।** शेषाङ्काभावे तु तालपूर्तये लघवो गृह्यन्ते ग्राह्या इत्यर्थः॥ -३७८-३८३- ॥

इति द्रुतमेर्वधःपङ्क्तिसमकोष्ठनष्टम्

(सु०) द्रुतमेर्वधः पङ्क्तेः समकोष्ठेषु नष्टमाह—संख्यैषामिति। एषां द्रुतहीनादिभेदानां संख्या पूर्वोक्तरीतितः पूर्वोक्तप्रकारेण, यस्मात् मेरुकोष्ठाङ्कात् लभ्यते; तत्र, तस्यां संख्यायां नष्टाङ्कं पातयेत्। अथ; अनन्तरम्, शेषतः; शिष्टे अन्त्याङ्के तृतीयपञ्चमोपान्त्यौ; तृतीयपञ्चमावङ्कौ उपान्त्यौ, अन्त्यान्ते यदा अङ्को न पतति, तदा लघुर्लभ्यते। यदि पर अकृतार्थः स्यात्, तेन सह लघुः कर्तव्यः। अथ; अनन्तरम्, उभौ अकृतार्थौ चेत्, ततः तर्हि ताभ्याम्, अकृतार्थाभ्यामङ्काभ्यामेव, स्वं विना; तृतीयं वा पञ्चमं वा विनेत्यर्थः। एष लघुः, लभ्यते। पेरे कृतार्थे इति। परे, परस्मिन् कृतार्थे सति, अकृतार्थः पुरातनो ग्राह्यः स्यात्। पतिताद् गुरुलाभ इति। पतितात् अङ्कात् प्राचा पूर्वेणाङ्केन सह गुरुः लभ्यते। तदा परा अग्रे स्थिता चतुरङ्की; चतुर्णामङ्कानां समाहारः, निवर्तेत गुरुलाभहेतुत्वेन कृतार्थत्वादित्यर्थः। अथ, तृतीयपातानन्तरम्, पञ्चमेऽपि पतिते सति, स एव गुरुः प्लुती भवेत्। प्राचा पूर्वेणाङ्केन सह एषा पङ्क्तिः निवर्तते अङ्कनिवृत्तिर्भवति। रूपाप्तौ; रूपस्य आप्तौ सत्यां, प्रापकाङ्केभ्यः; गुर्वादिप्रापका येऽङ्काः तेभ्यः, शेषेषु एष एव पुनर्विधिः कर्तव्यः। गुरुलाभे तु सति अपातार्हः पञ्चमः शेषो भवति। तत आरभ्य तृतीयपञ्चमौ उपान्त्यावित्यादि विधिः, विधानं कार्यमित्यर्थः। अङ्काभावे; अङ्कानामभावे तु, तालपूर्तये; तालपूरणार्थं लघवो गृह्यन्ते ग्राह्या इत्यर्थः।

उद्दिष्टे तु गुरोर्लभ्यस्तृतीयोऽन्त्यात्पुरातनः ॥ ३८४ ॥
प्राग्वच्चतुर्निवृत्तिः स्यात्तृतीयः पञ्चमस्तथा ।
प्लुताल्लभ्यौ निवृत्तिस्तु षण्णामथ पुनर्विधिः ॥ ३८५ ॥
लघोरङ्को न लभ्येत निवृत्तिस्त्वङ्कयोर्द्वयोः ।
लब्धाङ्कयोगहीनेऽन्त्ये शेषादुद्दिष्टबोधनम् ॥ ३८६ ॥

इति द्रुतमेर्वधःपङ्क्तिसमकोष्ठोद्दिष्टम्

इति द्रुतमेरुप्रथमपङ्क्तिसमकोष्ठनष्टोद्दिष्टे

अत्र परिज्ञानार्थमुदाहरणं दर्शयामः—अष्टद्रुतप्रस्तारे द्रुतहीनाः सप्त भेदा भवन्ति । तत्र प्रथमो भेदः कीदृगिति नष्टप्रश्ने, एकः सप्तसु पात्यते । अवशिष्टेषु षट्सु तृतीयपञ्चमौ पतिते, 'गुरुः प्लुती भवेत्' इति न्यायेन स एव गुरुः प्लुतो भवति । तालपूरणार्थमेको लघुर्ग्राह्यः । एवं लघुः प्लुतश्च प्रथमो भेदः । एवं द्वितीयभेदे पृष्टे द्व्यङ्के अन्त्यमध्ये पातिते सति, अवशिष्टेषु पञ्चसु तृतीये चतुरङ्के पतिते गुरुर्लब्धः, पञ्चमो द्व्यङ्कः शेषतां प्राप्तः । ततोऽवशिष्टे एकस्मात् तृतीये पतिते पुनरपि गुरुलाभ इत्यादि ज्ञेयम् ॥ -३७८–३८३- ॥

इति द्रुतमेर्वधःपङ्क्तिसमकोष्ठनष्टम्

(क०) अथ तत्कोष्ठोद्दिष्टमाह—**उद्दिष्टे त्वित्यादि** । उद्दिष्टे भेदेऽन्त्यत्वेन यदि गुरुर्दृश्यते, तस्माद्गुरोरन्त्यादङ्कात् **पुरातनः** तृतीयोऽङ्को भवतीत्यर्थः । **प्राग्वत्** नष्टोक्तप्रकारेण **चतुर्निवृत्तिः** चतुर्णामङ्कानां निवृत्तिर्भवेत् । उद्दिष्टे यदि प्लुतो दृश्यते, तस्मात्प्लुतात्तृतीयः, **तथा पञ्चमश्च** प्राप्यते । तृनीयपञ्चमौ **प्लुताल्लभ्यौ** भवतः । **निवृत्तिस्तु षण्णामिति** । षडङ्का निवर्तन्त इत्यर्थः । **अथ पुनर्विधिरिति** । निवृत्तिव्यतिरेकाङ्कसद्भावे पुनर्विधिः कार्यः । उद्दिष्टभेदे यदि लघुर्दृश्यते ; तस्माल्लघोरङ्को न लभ्यते ।

**समस्तनष्टवन्नष्टं विषमे कोष्ठके भवेत् ।**
**द्रुते लब्धे ततः पूर्वैरङ्कैः स्यात्समकोष्ठवत् ॥ ३८७ ॥**

इत्याद्यपङ्क्तिविषमकोष्ठनष्टम्

निवृत्तिस्त्वङ्कयोर्द्वयोरिति । लघुदर्शनादङ्कद्वयं निवर्तनीयमित्यर्थः । लघ्वङ्कयोगृहीतेऽन्त्ये शेषादुद्दिष्टबोधनमिति सर्वोद्दिष्टवद्द्रष्टव्यम् ॥ -३८४–३८६ ॥

इति द्रुतमेर्वधःपङ्क्तिसमकोष्ठोद्दिष्टम्

(सु०) उद्दिष्टं निरूपयति— **उद्दिष्टे त्विति** । गुरोरन्त्यात् प्रथमं तृतीयोऽङ्को लभ्यते । पूर्वं चतुर्णामङ्कानां निवृत्तिः, प्लुतात् तृतीयः पञ्चमश्चाङ्को लभ्यते, ततः षण्णामङ्कानां निवृत्तिः । अधः पुनरेवं प्रकारः, लघोस्त्वङ्को न लभ्यते । द्वयोरङ्कयोर्निवृत्तिः, लब्धमङ्कमन्त्यात्पातयित्वा, शेषात् अवशिष्टात् उद्दिष्टपरिज्ञानम् । अत्रैवं दृष्टान्तः—अष्टद्रुतप्रस्तारे द्रुतद्वयं गुरुर्लघुश्च द्रुतहीनेषु कथितो भेद इति । अन्त्यात् तृतीयश्चतुरङ्को लब्धः । चतुरङ्कोऽन्त्ये मध्ये च पातिते त्रयोऽवशिष्टाः । ततश्च तृतीयो भेद इत्युत्तरम् ॥ -३८४–३८६ ॥

इति द्रुतमेर्वधःपङ्क्तिसमकोष्ठोद्दिष्टम्

(क०) अथ द्रुतमेरुविषमकोष्ठे नष्टं लक्षयति— **समस्तनष्टवदिति** । 'पातयेत्पूर्वपूर्वाङ्कं तत्र स्वपतिता द्रुताः' इत्यादि सर्वमनुसंधेयम् । विशेषमाह— **द्रुते लब्ध इति । समकोष्ठवदिति** । द्रुतलाभानन्तरम्, 'तृतीयपञ्चमोपान्त्यावपाते लभ्यते लघुः' इत्यादि सर्वमनुसंधेयमित्यर्थः ॥ ३८७ ॥

इति द्रुतमेर्वधःपङ्क्तिसमकोष्ठोद्दिष्टम्

(सु०) प्रथमपङ्क्तिविषमकोष्ठे नष्टमाह—**समस्तेति** । सर्वसाधारणपूर्वोक्तनष्टवत् विषमे कोष्ठके नष्टं ज्ञातव्यम् । अयं तु विशेषः—द्रुते लब्धे सत्यवशिष्टैः पूर्वैरङ्कैः समकोष्ठवत् विधानम् । यथा सप्तद्रुतप्रस्तारे प्रथमो भेदः कीदृगिति प्रश्ने, अन्त्ये द्वादशाङ्कमध्ये एकस्मिन् पातिते अवशिष्टेष्वेकादशसु चतुरङ्कपञ्चाङ्कौ पातितौ; '**निरन्तरे त्वस्मिन्**' इति न्यायेन गुरुर्लब्धः ।

**समस्तोद्दिष्टवत्प्रोक्तमुद्दिष्टमिह सूरिभिः ।**
**द्रुताङ्कानन्तरं कार्यं विधानं समकोष्ठवत् ॥ ३८८ ॥**

इति प्रथमपङ्क्तिविषमकोष्ठोद्दिष्टम्

इत्यधस्तिर्यक्पङ्क्तिनष्टोद्दिष्टे

ततो गुरुहेतोस्तृतीयेऽङ्के द्व्यङ्केऽवशिष्टे द्वये पतिते सति, स एव गुरुः प्लुतो भवति। एवं च द्रुतः प्लुतश्च प्रथमो भेदः। एवं दशमो भेदः कीदृगिति प्रश्ने, दशसु पातितेषु अवशिष्टे द्वये चतुरङ्कस्य अपातात् द्रुतो लब्धः। द्रुते लब्धे सति समकोष्ठवद्विधानम्। ततश्चतुरङ्कात् तृतीये पतिते गुरुर्लभ्यते, पतितात् द्रुतलाभः स्यादिति। ततस्तालपूर्त्यर्थं लघुः, एवं लघुर्गुरुर्द्रुतश्च सप्तद्रुतप्रस्तारे; एकद्रुते दश इत्यादिज्ञेयम् ॥ ३८७ ॥

इत्याद्यपङ्क्तिविषमकोष्ठनष्टम्

अथ तत्कोष्ठोद्दिष्टं लक्षयति—**समस्तोद्दिष्टवदिति**। 'यैरङ्कैः पतितैर्नष्टः' इत्याद्यनुसंधेयम्। विशेषमाह—**द्रुताङ्कानन्तरमिति**। द्रुताङ्कपरिज्ञानानन्तरम्। **समकोष्ठवदिति**। 'उद्दिष्टे तु गुरोर्लभ्यस्तृतीयोऽन्त्यात्पुरातनः' इत्याद्यनुसंधेयम् ॥ ३८८ ॥

इति द्रुतमेवधःपङ्क्तिविषमकोष्ठोद्दिष्टम्

इति द्रुतमेवधःपङ्क्तिनष्टोद्दिष्टम्

(सु०) प्रथमपङ्क्तिविषमकोष्ठोद्दिष्टमाह—समस्तेति। इह; विषमकोष्ठे; उद्दिष्टं सर्वसाधारणम्। समस्तोद्दिष्टवत्; पूर्वोक्तोद्दिष्टवत्; 'यैरङ्कैः पतितैर्नष्टः' इत्यादिरनुसंधेयम्। परं तु द्रुताङ्कानन्तरं समकोष्ठवत् विधानम्। यथा द्रुतो लघुर्गुरुश्च सप्तद्रुतप्रस्तारे एको द्रुतः प्लुतश्च कतिधा भेद इति प्रश्ने, चतुरङ्के द्व्यद्वये च पतिते एवंविधभेदस्य समस्तोद्दिष्टस्य लभ्यमानत्वात् अष्टौ लब्धाः। तेष्वन्त्येषु पातितेषु चतुर्णामवशिष्टत्वात् चतुर्थो भेदः। एवं विषमकोष्ठोद्दिष्टं ज्ञेयम् ॥ ३८८॥

इति प्रथमपङ्क्तिविषमकोष्ठोद्दिष्टम्

कोष्ठे समोर्ध्वपङ्क्तिस्थे परासामधिको भवेत् ।
द्वितीयाधस्तनः पात्यस्तत्र त्वपतिताद् द्रुतः ॥ ३८९ ॥
पतिताल्लः पात्यपातानन्तर्येऽल्पो महान्भवेत् ।
रूपपूर्तौ निवर्तन्ते पूर्ववत्स्वीयपङ्क्तिगाः ॥ ३९० ॥
अधःसमवदन्यत्स्यान्निवृत्तौ तु पुनर्विधिः ।
यस्मात्स यस्यामूर्ध्वायां पङ्क्तौ सा विषमा यदि ॥ ३९१ ॥
विधिर्विषमकोष्ठोक्तः समा चेत्तद्द्वयं मतः ।
विषमोर्ध्वश्रेणिसंस्थे कोष्ठेऽधोविषमोदितः ॥ ३९२ ॥

इति द्रुतमेरुपरपङ्क्तिनष्टम्

(क०) अथ द्रुतमेरोः परपङ्क्तिनष्टं लक्षयति—**कोष्ठ इत्यादिना** । परासां पङ्क्तीनां समोर्ध्वपङ्क्तिकोष्ठे द्वितीयाधस्तनाङ्कैरधिकः पात्यो भवेत् । तत्र तेष्वङ्केषु मध्येऽपतितादङ्काद् द्रुतो लभ्यो भवेत् । **पतिताल्लः** ; लघुर्लभ्यो भवेत् । **पात्यपातानन्तर्ये इति** । पात्ययोरङ्कयोः पातस्य आनन्तर्ये निरन्तरयोः पाते सतीत्यर्थः । अल्पो लघुर्महान् गुरुर्भवेदित्यर्थः । **रूपपूर्तौ** ; लघ्वादिस्वरूपप्राप्तौ सत्यां स्वीयपङ्क्तिगा अङ्काः पूर्ववदधःपङ्क्ताविव । **निवर्तन्त इति** । लघुप्राप्तावङ्कद्वयं, गुरुप्राप्तावङ्कचतुष्टयं, प्लुतप्राप्तावङ्कषट्कं च निवर्तते । पुनर्विधौ न गण्यत इति यावत् । **अन्यत्** अवशिष्टम् । **अधः-समवत्** ; अधःपङ्क्तौ समकोष्ठवद्द्रष्टव्यम् । **निवृत्तौ तु** ; रूपहेत्वङ्कनिवृत्तौ तु रूपान्तरप्राप्तये **पुनर्विधिः** कार्यः । **यस्यामूर्ध्वायां पङ्क्तौ यस्मात्** अङ्कात्, **स** विधिर्भवेत्, **सा** अधःपङ्क्तिः **विषमा** विषमसंख्याका **यदि** भवति चेत्, विषमकोष्ठोक्तोऽधःपङ्क्तिः विषमकोष्ठोक्तो विधिः कार्यः । **समा** चेत्समसंख्याका चेत्, तत्तद्द्वयमिदानीमुक्तो विधिः कार्यः ॥ ३८९–३९२ ॥

इति द्रुतमेरुपरपङ्क्तिनष्टम्

यैरङ्कैः परितैर्नष्टैर्लभ्यन्ते ये प्लुतादयः ।
तेभ्य उद्दिष्टसंस्थेभ्यस्तदङ्कावाप्तिरिष्यते ॥ ३९३ ॥
द्रुतहीनाद्यकोष्ठासु पङ्क्तिषूर्ध्वासु यो लघुः ।
तस्मादुद्दिष्टरूपस्थान्नाङ्कः कश्चिदवाप्यते ॥ ३९४ ॥

(सु०) अथान्यासां पङ्क्तीनां नष्टमाह—कोष्ठ इति। समोर्ध्वपङ्क्तिस्थ इति; द्वितीयचतुर्थादिः, तत्र स्थिते; परासाम्; अन्यासां पङ्क्तीनाम्; कोष्ठे द्वितीयाङ्कात् अधस्तनः, अधिकः; उपान्त्यः, तृतीयपञ्चमावित्यादि अधस्तनवत्। एवंच अपतितात् द्रुतो लभ्यते, ततः पतितात् लघुर्लभ्यते। उपान्त्यानां पतितयोः, आनन्तर्यनैरन्तर्यन्यायेन अष्टौ महान् भवेत्। लघुर्गुरुश्च प्लुत इति। रूपपूर्तौ; रूपस्य लघ्वादिस्वरूपस्य, पूर्तौ परिपूरणे सति, स्वीयपङ्क्तिगा या अङ्काः पूर्ववत् अधःपङ्क्तिवत् निवर्तन्ते। लघावङ्कद्वयम्; गुरावङ्कचतुष्टयम्; प्लुते अङ्कषट्कमिति। अन्यत्सर्वमधःपङ्क्तिसमकोष्ठनष्टवत्। अङ्कनिवृत्तौ तु पुनर्विधानम्। परं तु स पुनर्विधिः यस्मात्, तस्मात् कोष्ठकात् कर्तव्यः, स कोष्ठकः यस्यां पङ्क्तौ विद्यते सा पङ्क्तिः यदि विषमा, विषमकोष्ठोक्तो विधिः, यदि समा चेत्, अयमेव विधिः विषमासु ऊर्ध्वश्रेणीषु विद्यमाने कोष्ठे अधःपङ्क्तिविषमकोष्ठनष्टपरिज्ञानवद्विधिः कर्तव्यः। यथा षड्द्रुतप्रस्तारे नव भेदाः संभवन्ति। तत्र प्रथमो भेदः कीदृगिति प्रश्ने, नवसंख्यायामेकाङ्के पातिते, अवशिष्टेष्वष्टसु द्वितीयाधस्तनः पञ्चाङ्कः तृतीयाङ्कश्च पातितः; पूर्वपतितात् लघुर्जातः। उपान्त्यपातानन्तर्यात् स एव लघुः महान् गुरुर्जातः। ततश्च द्रुतद्वयं गुरुश्च प्रथमो भेद इति ॥३८९–३९२॥

इति द्रुतमेरुपरपङ्क्तिनष्टम्

(क०) अथ द्रुतमेरुपरपङ्क्त्युद्दिष्टं लक्षयति—यैरङ्कैरित्यादिना। द्रुतहीनाद्यकोष्ठास्विति। द्रुतेन हीना द्रुतहीना आद्यकोष्ठा यासां तास्तथोक्ताः, तासूर्ध्वासु पङ्क्तिषु। यो लघुरिति। उद्दिष्टभेदस्थ इत्यर्थः।

लब्धाङ्कन्यूनितान्त्याङ्कशेषादुद्दिष्टवेदनम् ।

इति द्रुतमेरुपरपङ्क्त्युद्दिष्टम्

इति द्रुतमेरुनष्टोद्दिष्टे

लघुमेरावधःपङ्क्तेर्नष्टाङ्केनान्त्यशेषतः ॥ ३९५ ॥
पूर्वेषां पात्यमानानामपाते पूर्ववद्द्रुतः ।
पतितात्सह पूर्वाभ्यां परेण च गुरुर्भवेत् ॥ ३९६ ॥

उद्दिष्टरूपस्थात्तस्माल्लघोः कश्चिदङ्कः । न प्राप्यत इति । नष्टे तस्य लघोरपतिताङ्कलब्धत्वादिति भावः । सुगममन्यत् ॥ ३९३–३९४- ॥

इति द्रुतमेरुपरपङ्क्त्युद्दिष्टम्

इति द्रुतमेरुनष्टोद्दिष्टे

(सु०) अथ द्रुतमेरुपरपङ्क्त्युद्दिष्टमाह—यैरङ्कैरिति । यैरङ्कैः पतितैः नष्टैः ये प्लुतादयो लभ्यन्ते ; तेभ्यश्च ते अङ्काः लभ्यन्ते । समासु पङ्क्तिषु विशेषमाह—द्रुतहीनेति । द्रुतहीनः आद्यकोष्ठो यासां ताः, ऊर्ध्वासु पङ्क्तिषु समास्वित्यर्थः । तासु यो लघुः, तस्मात् तत्र कोऽप्यङ्कः प्राप्यते, लब्धाङ्क अन्ते पातयित्वा अवशिष्टात् उद्दिष्टसंख्याज्ञानम् । यथा षड्द्रुतप्रस्तारे द्रुतद्वयं गुरुश्च कतिधा भेद इति प्रश्ने द्वितीयाधस्तनस्य पञ्चाङ्कस्य तृतीयस्याङ्कस्य च पातनात् गुरोर्लब्धत्वात् अष्टौ लब्धाः, अष्टानां नवमाद्ये पातितत्वात् एकोऽवशिष्टः प्रथमो भेद इत्युत्तरम् ॥ ३९३, ३९४- ॥

इति द्रुतमेरुनष्टोद्दिष्टे

(क०) अथ लघुमेर्वधःपङ्क्तिनष्टं लक्षयति—लघुमेरवित्यादिना । पूर्वेषामिति । नष्टाङ्कोनादन्त्यात्पूर्वेषां द्वितीयादीनामित्यर्थः । पात्यमानानां तेषां मध्ये । अपाते ; एकद्व्यादीनामङ्कानामपाते । पूर्ववत् ; पूर्वनष्टवद्द्रुतः । तत्र त्वपतिताद्द्रुत इति । अपतिताद्द्रुतो लभ्यत इत्यर्थः । द्वाभ्यामपति-

**पतिते वृत्तगुर्वङ्कानन्तरे गः प्लुती भवेत् ।**
**एवं नष्टस्य बोधः स्यादित्युक्तं सूरिशार्ङ्गिणा ॥ ३९७ ॥**

इति लघुमेर्वधःपङ्क्तिनष्टम्

ताभ्यां द्वौ द्रुतौ, त्रिभ्यस्त्रयो द्रुता इत्यादि द्रष्टव्यम् । **पतितात्सह पूर्वाभ्यां परेण च गुरुर्भवेदिति** । अत्र तु पतितादङ्काद्गुरुर्लभ्यो भवति । किंविधात् ? पूर्वाभ्यां परेण च सहितात् । एतेन च 'गुरुलाभे चतुरङ्की निवर्तते' इत्युक्तं भवति । अस्यां पङ्क्तौ लघुहीनानामेवोपक्रान्तत्वात्पतितादपि न लघुर्लभ्यते । किंतु गुरुरेव लभ्यत इत्यत्र विशेषः । **वृत्तगुर्वङ्कानन्तर इति** । वृत्तो निष्पन्नो गुरुर्येभ्यः, तैर्वृत्तगुरवः, ते च तेऽङ्काः, तेभ्योऽनन्तरे संनिहिते गुरुहेतुभ्यश्चतुर्भ्योऽङ्केभ्यः पूर्वस्मिन्नित्यर्थः । तस्मिन् पतिते सति, **गः** गुरुः प्लुती भवेत् । स एव गुरुः प्लुतः कर्तव्य इत्यर्थः ॥ -३९५–३९७ ॥

इति लघुमेर्वधःपङ्क्तिनष्टम्

(सु०) लघुमेरुनष्टं लक्षयति—लघुमेराविति । अधःपङ्क्तेः नष्टाङ्केन ऊनः योऽन्त्योऽङ्कः, तस्य शेषतः शेषे, पूर्वेषामङ्कानां पात्यमानानां मध्ये अपतितात् अङ्कात् द्रुतो लभ्यते । पतितात् पूर्वाभ्यां द्वाभ्यामङ्काभ्यां, **परेण एकेनाङ्केन** च सह गुरुर्भवति । **वृत्तगुर्वङ्कानन्तर** इति ; वृत्तो निष्पन्नो गुरुः येभ्यस्ते वृत्तगुरवः, ते च तेऽङ्काः, तेभ्योऽनन्तरे संनिहिते ; गः गुरुः, **प्लुती भवेत्** । षड्द्रुतप्रस्तारे लघुहीनाः पञ्च भेदाः । तत्र प्रथमो भेदः कीदृगिति प्रश्ने पञ्चाङ्कमध्ये एकाङ्के पातिते सति, अवशिष्टेषु चतुर्षु पूर्वः त्र्यङ्कः पतितः, चतुर्गुरौ जाते, अनन्तरे एकाङ्के च पतिते गुरुः प्लुतो जातः । षड्द्रुतप्रस्तारे लघुहीनेषु प्लुतः प्रथमो भेद इति ॥ -३९९–३९७ ॥

इति लघुमेर्वधःपङ्क्तिनष्टम्

नष्टे तु परपङ्क्तीनां पातयेत्प्रातिलोम्यतः ।
द्वितीयं च तृतीयाधस्तनमङ्कं च पञ्चमम् ॥ ३९८ ॥
परेषु च निवृत्तेषु शेषेष्वेष पुनर्विधिः ।
समस्तनष्टवच्चात्र द्रुतादेः प्राप्तिरिष्यते ॥ ३९९ ॥
किंतु लब्धे लघौ शेषेष्वाद्याधस्तनतः क्रिया ।
सोऽधस्तनः स्वपङ्क्तिस्थविधिमेवं प्रवर्तयेत् ॥ ४०० ॥
शेषेऽङ्काश्रितपङ्क्त्यङ्काभावे तु लघवो मताः ।
अधस्तनश्रेणिसंख्या नष्टस्यैष विधिः स्मृतः ॥ ४०१ ॥

इति लघुमेरुनष्टम्

(क०) अथ लघुमेरुपरपङ्क्तीनां नष्टमाह—**नष्टे त्वित्यादिना। प्रातिलोम्यतः पातयेदिति**। अत्र प्रातिलोम्यशब्देन द्वितीयतृतीयाधस्तनपञ्चमाङ्केषु पात्येषु क्वचिदनुपपत्त्या तृतीयाङ्कपातनम्। किंच 'समस्तनष्टवच्चात्र द्रुतादेः प्राप्तिरिष्यते, इति शेषेष्वाद्याधस्तनतः क्रियेति, सोऽधस्तनः स्वपङ्क्तिस्थविधिमेवं प्रवर्तयेदिति चातिदेक्ष्यमाणेष्वर्थेषु क्वचिदनुपपत्त्या अन्यथाकरणं च विवक्षितम्। तत्र कानुपपत्तिरिति चेत्; उच्यते—प्रस्तुतैकलध्वादिभेदनियमभङ्ग एवानुपपत्तिः, सा मा भूदिति प्रातिलोम्याश्रयणं कर्तव्यमित्यर्थः। **आद्याधस्तनत इति**। आद्यायां तिर्यक्पङ्क्तौ स्थितात् लघुहेतोरधस्तन इत्यर्थः। अत्र आद्यग्रहणाभावे तृतीयादितिर्यक्पङ्क्तिषु द्वितीयादितिर्यक्पङ्क्तिस्थोऽप्यधस्तनया न प्राप्नोति। अतः कर्तव्यमाद्यग्रहणम्। **शेषेऽङ्काश्रितपङ्क्त्यङ्काभावे तु लघवो मता इति**। अङ्काश्रितपङ्क्त्यङ्काभावे पातयोग्यैरङ्कैराश्रितश्चासौ पङ्क्त्यङ्कश्च तत्तन्नष्टभेदोचितपङ्क्तौ तत्तत्तालापेक्षया अन्त्याङ्क इति यावत्। तस्याङ्कस्याभावे तु शेषे। तत्तन्नष्टभेदस्वरूपलेखने वामसंस्थत्वेन प्रवृत्ते सति चरमभाग इत्यर्थः।

**गुरुमेरोरधःपङ्क्तौ नष्टं सकलनष्टवत् ।**
**प्लुतलाभस्तु गुरुवत्,**

इति गुरुमेर्वधःपङ्क्तिनष्टम्

**लघवो मता इति ।** तत्तद्भेदानुगुण्येनैकद्व्यादयो लघवो ग्राह्या इत्यर्थः । इममेवार्थं स्वष्टीकर्तुमुक्तम्, 'अधस्तनश्रेणिसंख्या' इति लघव इत्यस्य विशेषणम् । नष्टाङ्कश्रिताङ्केऽधस्तनी श्रेणिरेका चेद्; एको लघुर्ग्राह्यः, द्वे चेद्द्वौ, तिस्रश्चेत्त्रय इत्यादि द्रष्टव्यम् ॥ ३९८–४०१ ॥

इति लघुमेरुपरपङ्क्तिनष्टम्

(सु०) लघुमेरौ परपङ्क्तीनां नष्टमाह—**नष्टे त्विति ।** पतितनष्टाङ्कावशेषे प्रातिलोम्यतः पूर्वपूर्वद्वितीयतृतीयस्याधस्तनं पञ्चमाङ्कं पातयेत् । रूपपूर्तौ पूर्ववत् । अङ्कनिवृत्तौ जातायां पुनरप्येष एव विधिः कार्यः । द्रुतादेः प्राप्तिस्तु समस्तनष्टवत् । किं त्वयं विशेषः—लघौ लब्धे शेषेषु अवशिष्टेषु य आद्यः, तस्य अधःस्थितादङ्कात् विधिः; सोऽधःस्थितावङ्कः, स्वपङ्क्तिस्थविधिं; स्वपङ्क्तौ योऽङ्को विहितः, तमेव प्रवर्तयेत् । **अङ्काश्रितपङ्क्त्यङ्काभावे तु;** अधस्तनश्रेण्यो यावत्यः, तावत्संख्याका लघवो ज्ञातव्याः । यथा षड्द्रुतप्रस्तारे एकलघवः सप्त भेदाः; तेषु प्रथमो भेदः कीदृगिति प्रश्ने अन्त्यसप्ताङ्कमध्ये एकाङ्के पातिते अवशिष्टेषु षट्सु द्वितीयः चतुरङ्कः, तृतीयाधस्तनो द्व्यङ्कश्च पातिते, निरन्तरपतितत्वात् गुरुः, अङ्काभावे लघुः, ततश्च लघुर्गुरुश्च प्रथमो भेद इति ॥ ३९८–४०१ ॥

इति लघुमेरुपरपङ्क्तिनष्टम्

(क०) अथ गुरुमेर्वधःपङ्क्तिनष्टमाह—**गुरुमेरोरित्यादिना । प्लुतलाभस्तु गुरुवदिति ।** यथा लघुमेरोरधःपङ्क्तौ पतिताद्गुरुर्लब्धः, तथा गुरुमेरोरधःपङ्क्तौ निरन्तरपतिताभ्यां प्लुतो लभ्यत इत्यर्थः ॥४०१-॥

इति गुरुमेर्वधःपङ्क्तिनष्टम्

परपङ्क्तिष्वथोच्यते ॥ ४०२ ॥

तृतीयाधस्तनस्थाने तृतीयोऽङ्कोऽत्र पात्यते ।

स्थाने तु पञ्चमस्याधः पञ्चमो लघुवद्गुरौ ॥ ४०३ ॥

लब्धेऽधोव्रजनं[1] शेषाल्लघुवद्गुरुलम्भनम् ।

लघुमेरुवदन्यत्तु नष्टे स्यात्परपङ्क्तिषु ॥ ४०४ ॥

इति गुरुमेरुनष्टम्

(सु०) गुरुमेर्वधःपङ्क्तिनष्टमाह—गुरुमेरोरिति । गुरुमेरोः अधः-पङ्क्तौ सकलनष्टवत् नष्टं कार्यम् । प्लुतलाभस्तु गुरुवदिति । यथा लघुमेरोः अधःपङ्क्तौ पतितात् गुरुर्लब्धः, तथा गुरुमेरोः अधःपङ्क्तौ निरन्तर-पतिताभ्यां प्लुतो लभ्यत इति । यथा षड्द्रुतप्रस्तारे गुरुहीनाश्चतुर्दश भेदाः, तत्र प्रथमभेदे पृष्टे अन्त्याङ्कमध्ये एकाङ्के पातिते, अवशिष्टेषु त्रयोदशसु पूर्वोऽष्टाङ्कः पञ्चाङ्कश्च पतितौ गुरौ लब्धव्ये, प्लुतो गुरुर्भवेदित्यनेन प्लुतः प्राप्तिरिति ॥ ४०१- ॥

इति गुरुमेर्वधःपङ्क्तिनष्टम्

(क०) अथ गुरुमेरुपरपङ्क्तिषु नष्टमाह—**परपङ्क्तिष्विति । लघुवद्गुरौ लब्ध** इति । लघुमेरौ परपङ्क्तिषु लघौ लब्धे यथा आद्याध-स्तनतः क्रिया कृता, तथात्र गुरौ लब्धे सति । **शेषादधोव्रजनमिति ।** शेषादिति ल्यब्लोपे पञ्चमी । शेषमधिष्ठाय आद्याधस्तनतः क्रिया कर्तव्येत्यर्थः । **लघुवद्गुरुलम्भनमिति ।** लघुमेरोरपरपङ्क्तिषु पतितात् यथा लघुप्राप्तिः, तथात्र पतिताद्गुरुप्राप्तिरित्यर्थः । शिष्टं लघुमेरुवद्द्रष्टव्य-मित्याह—**लघुमेरुवदिति** ॥ -४०२–४०४ ॥

इति गुरुमेरुनष्टम् । इति गुरुमेरुपरपङ्क्तिनष्टम्

[1] अधोगमनमिति सुधाकरपाठः.

**समस्तनष्टवन्नष्टं प्लुतमेरावुदाहृतम् ।**

इति प्लुतमेरुनष्टम्

**विशेषः कथ्यते त्वेष द्वितीयादिषु पङ्क्तिषु ॥ ४०५ ॥**
**अधो गच्छेत्प्लुते पूर्णे गुरुमेरौ गुराविव ।**

(सु०) गुरुमेरोः परपङ्क्तिनष्टमाह—**परपङ्क्तिष्विति** । लघुमेरुनष्टवत् सर्वम् । किंतु लघुमेरौ तृतीयस्याधस्तनोऽङ्कः पात्यते । अत्र तस्य स्थाने तृतीयोऽङ्कः पात्यते । पञ्चमस्य स्थाने पञ्चमस्याधस्तनाङ्कः पात्यः । लघुमेरौ लवौ लब्धे यथा अधोगमनम्; तथात्र गुरुमेरौ गुरौ लब्धे अधोगमनं शेषात् विधानम् । अङ्काभावेऽपि यथा अधस्तनश्रेणिसंख्या लवः लघुमेरौ प्राप्यन्ते, तथात्र गुरवः प्राप्यन्त इति । यथा षड्द्रुतप्रस्तारे एकगुरवः पञ्चभेदाः, तत्र प्रथमे भेदे पृष्टे अन्त्याङ्कमध्ये एकाङ्कपतिते, अवशिष्टेषु चतुर्षु पूर्वो द्व्यङ्कः, एकाङ्कश्च पतिते गुरुर्लब्धः, लब्धे गुरौ आद्यात् त्रिषट्द्रुतादङ्कादारभ्य क्रियायां क्रियमाणायामेकाङ्के लब्धे पतिते लघुर्लब्धः । ततश्च लघुर्गुरुश्च प्रथमो भेद इति ॥ -४०२–४०४ ॥

इति गुरुमेरुनष्टम् । इति गुरुमेरुपरपङ्क्तिनष्टम्

(क०) अथ प्लुतमेरुनष्टं लक्षयति—**समस्तनष्टवदित्यादिना** । प्लुतमेरोरधःपङ्क्तौ नष्टं सर्वनष्टवद्द्रष्टव्यमित्यर्थः ॥ ४०४- ॥

इति प्लुतमेरुनष्टम्

(सु०) प्लुतमेरुनष्टं निरूपयति—**समस्तेति** । साधारणनष्टवत् प्लुतमेरुनष्टं ज्ञातव्यम् ॥ ४०४- ॥

इति प्लुतमेरुनष्टम्

(क०) द्वितीयादिषु परपङ्क्तिषु विशेषं दर्शयति—**अधो गच्छेदित्यादिना** । **गुरुमेरौ गुराविवेति** । गुरुमेरौ गुरौ लब्धे यथा

द्रुतो लघुर्गुरुर्वान्त्यैरङ्कैर्लब्धः प्लुती भवेत् ॥ ४०६ ॥
तदङ्काधस्तनैः सार्धमङ्कषट्कमतीत्य च ।
अधःपङ्क्तौ स्थितैरङ्कैः शेषैरेष पुनर्विधिः ॥ ४०७ ॥
पङ्क्तौ तु प्लुतहीनायां नान्तिमः प्लुततां व्रजेत् ।

इति प्लुतमेरुपरपङ्क्तिनष्टम्

अधोगमनमुक्तं तथात्र प्लुते पूर्णे लब्धे सतीत्यर्थः । **अधो गच्छेदिति ।** आद्याधस्तनतः क्रियां कुर्यादित्यर्थः । अथ प्लुते पूर्ण इत्येतदावृत्त्या अपूर्ण इति पदं विभज्य व्याख्येयम् । प्लुतेऽपूर्णेऽलब्धे सति अन्त्याङ्केन लब्धो द्रुतो लघुर्गुरुर्वा **प्लुती भवेदिति**; प्लुतः कर्तव्य इत्यर्थः । अथवा प्लुतो भवेदित्यनेनैव पूर्वं प्लुतेन लब्ध इति गम्यते । **पङ्क्तौ तु प्लुतहीनाया-मिति ।** आद्याधस्तनपङ्क्तावित्यर्थः । **नान्तिमः प्लुततां व्रजेदिति ।** अन्तिमोऽङ्कलब्धो द्रुतादिः प्लुतो न भवतीत्यर्थः ॥ -४०५–४०७- ॥

इति प्लुतमेरुपरपङ्क्तिनष्टम्

(सु०) द्वितीयादिषु परपङ्क्तिषु विशेषमाह—शेष इति । अधोगच्छे-दिति । प्लुते पूर्णे सति अधोगच्छेत् अधःपङ्क्तिमारभ्य विधानं कुर्यादिति । यथा गुरुमेरौ गुरौ लब्धे अधःपङ्क्तितः क्रिया **अन्त्यैरङ्कैः** लघुर्वा गुरुर्वा लब्धः प्लुतो भवेत् । ततः तस्य अङ्कस्य अधःस्थितैः अङ्कैः सह अङ्कषट्कम-तीत्य प्लुतो भवतीति संबन्धः । शेषैः स्थितैः अङ्कैः अधःपङ्क्तौ तु पुनर्विधिः; तत्र प्लुतहीनायां सर्वाधःपङ्क्तौ अन्तिमः प्लुतो न भवति । यथा अष्टद्रुत-प्रस्तारे पञ्च एकप्लुताः, तत्र प्रथमे भेदे पृष्टे एकाङ्कहीन अन्त्याङ्क अवशिष्टेषु चतुर्षु पूर्वौ द्व्यङ्कः एकाङ्कश्च पतिते, निरन्तरपतितात् द्रुतः अन्त्यैरङ्कैः लब्धत्वात् षड्भिरङ्कैः गुरोः प्लुतत्वं, ततोऽधःपङ्क्तौ पुनर्विधाने क्रियमाणे एकाङ्के पतिते लघुः, ततो लघुः प्लुतश्च प्रथमो भेद इति ॥ ४०६–४०७ ॥

इति प्लुतमेरुपरपङ्क्तिनष्टम्

**सर्वोद्दिष्टवदुद्दिष्टं लघुमेर्वादिषु त्रिषु ॥ ४०८ ॥**

इति लघुमेर्वादिमेरुत्रयोद्दिष्टम्

इति श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोढलदेवनन्दननिःशङ्क-शार्ङ्गदेवविरचिते संगीतरत्नाकरे पञ्चमस्तालध्यायः ॥ ५ ॥

(क०) लघुमेर्वादिमेरुत्रयोद्दिष्टमाह—**सर्वोद्दिष्टवदिति** । 'यैरङ्कैः पतितैर्नष्टः' इत्यत्र यदुक्तं तदेव सर्वत्रानुसंधेयमित्यर्थः ॥ -४०८ ॥

इति लघुमेर्वादिमेरुत्रयोद्दिष्टम्

एवं व्याकुर्वता सम्यङ्मार्गदेशीविभागतः ।
यस्तालप्रत्ययः कल्लिनाथेन निरणायि सः ॥

इति श्रीमदभिनवभरताचार्यरायवयकारतोडरमल्लश्रीलक्ष्मणाचार्यनन्दनचतुर-कल्लिनाथविरचिते संगीतरत्नाकरकलानिधौ पञ्चमोऽध्यायः ॥ ५ ॥

(सु०) लघ्वादिमेरूणामुद्दिष्टमाह—सर्वेति । सर्वसाधारणोद्दिष्टवत् लघ्वादिमेरुषूद्दिष्टं ज्ञातव्यम् ॥ -४०८ ॥

इति लघुमेर्वादिमेरुत्रयोद्दिष्टम्

इति श्रीमदन्ध्रमण्डलाधीश्वरप्रतिगण्डभैरवश्रीअनपोतनरेन्द्रनन्दन-भुजबलभीमश्रीसिंहभूपालविरचितायां संगीतरत्नाकरटीकायां सुधाकराख्यायां पञ्चमस्तालाध्यायः समाप्तः ॥

ॐ

शिवाभ्यां नमः

श्री-निःशङ्कशार्ङ्गदेव-प्रणीतः

# संगीतरत्नाकरः

चतुरकल्लिनाथ-विरचितया कलानिध्याख्यटीकया सिंहभूपाल-
विरचितया संगीतसुधाकराख्यटीकया च समेतः

## षष्ठो वाद्याध्यायः

ततं येनावनद्धं च भुवनं निजमायया ।
आनन्दघनमध्येमि तं ब्रह्मसुषिरे हरम् ॥ १ ॥
चित्रा वाचः प्रवर्तन्ते धातुवृत्तिविचित्रिताः ।
यतस्तं नौमि विस्तारतत्त्वौघानुगतं शिवम् ॥ २ ॥

(क०) अथ गीतोपयोगित्वेन तदनन्तरोद्दिष्टस्य वाद्यस्य प्रकरणमारभमाणस्तावदादौ समुचितेष्टदेवतां स्मृत्वा स्तौति—ततं येनेत्यादिना श्लोकद्वयेन । येन; परमेश्वरेण कर्त्रा; निजमायया करणभूतया, भुवनं ततं विस्तारितम् । अवनद्धं च बद्धं च । आनन्दघनम्; निरतिशयानन्दस्वरूपम् । तम्; हरम् । ब्रह्मसुषिरे; हृत्पङ्कजे, हृत्पङ्कजस्य ब्रह्मसुषिरत्वं

प्रागेव पिण्डोत्पत्तिप्रकरणे 'चेतनस्थानम्' इत्यत्र प्रतिपादितम्। **अध्येमि**; स्मरामीति संबन्धः। अत्र ततावनद्धघनसुषिरशब्दैर्वक्ष्यमाणा वाद्यभेदा ध्वन्यन्ते। **चित्रा वाच इति**। **धातुवृत्तिविचित्रिता इति**। धातवो भूवादयः, वृत्तयः समासा वा, अभिधागौण्यादयो वा। धातुभिर्वृत्तिभिश्च विचित्रिताः चित्रा वाचः। विविधानि वाक्यानि वेदादीनि यतः शिवात् प्रवर्तन्ते। तेन कारणेन कर्तृत्वेन वा प्रवक्तृत्वेन वा कारणभूतादित्यर्थः। **विस्तारतत्त्वौघानुगतमिति**। विस्तारवान् विस्तारः, तत्त्वानां महदादीनाम्, ओघः समूहः। विस्तारश्चासौ तत्त्वौघश्च, तेनानुगतम्। तदुत्पत्तिस्थितिलयाधिष्ठानत्वात्तमनुगतो वा। तच्छब्दात्; "तत्सृष्ट्वा तदेवानुप्राविशत्" (तै० उ० २-६) इति श्रुतेः। तं शिवं नौमीति संबन्धः। अत्र धात्वादिभिः शब्दैर्वक्ष्यमाणा वाद्यविधयो ध्वन्यन्ते ॥ १, २ ॥

(सु०) एवं पञ्चमाध्याये सपरिकरं गीतमुक्तम्। अतो वक्ष्यमाणयोर्वाद्यनृत्तयोर्मध्ये वाद्यानुगान्नृत्ताद्वाद्यस्य प्रधानत्वाद्गीतानुगामित्वाच्च गीताभिव्यक्तिहेतुत्वाच्च वीणाद्यैर्गीतानन्तरं वाद्यं विवक्षुर्मङ्गलमाचरन्नभिधेयमभिव्यनक्ति—**ततमिति**। तम्; शिवं हरम् अध्येमि स्मरामि। "इक् स्मरणे" (धा० अ० १०४७) इत्यनेनाधिपूर्वस्येकः स्मरणार्थत्वात्। कुत्र स्मरामि? **ब्रह्मसुषिरे**; ब्रह्मरन्ध्रे; तद्ध्युपासनस्थानं परमेश्वरस्य। कथं भूतम्? आनन्दघनम्; आनन्देन घनं व्याप्तम्। अथवा आनन्दः सुखरूपश्चासौ घनः कूटस्थश्च तथाविधं तम्, कम्? येन भुवनं जगत् ततं व्याप्तम्। अवनद्धम् अन्तरपि स्यूतम्। ननु कथं तस्य नियामकस्य व्याप्त्यादिः संभवति? अत आह—**निजमाययेति**। मायिका एवैते धर्माः, न तु तात्त्विकाः। "आनन्दो विषयानुभवो नित्यत्वमिति सन्ति धर्माः" इति पञ्चपादिकाचार्यवचनात्। पक्षे अहं वाद्यम् अध्येमि स्मरामि। अभिधातुमभिलषामीत्यर्थः। शिवं; कल्याणरूपम्, येन; वाद्येन, ततं वीणादिकम्, अवनद्धम् मुरजादिकं च प्रसिद्धमिति शेषः। आनन्ददायकं घनं कांस्यतालादिकं च, सुषिरं वंशादिकं वाद्यम्। निजमायया; निजप्रपञ्चेन, ब्रह्म,

गीतं चतुर्विधाद्वाद्याज्जायते चोपरज्यते ।
मीयते च ततोऽस्माभिर्वाद्यमत्र निगद्यते ॥ ३ ॥
ततं सुषिरं चावनद्धं घनमिति स्मृतम् ।
चतुर्धा तत्र पूर्वाभ्यां श्रुत्यादिद्वारतो भवेत् ॥ ४ ॥
गीतं ततोऽवनद्धेन रज्यते मीयते घनात् ।

बृहत् विस्तृतमित्यर्थः । मङ्गलाचरणबाहुल्यस्य श्रेयोबाहुल्यहेतुत्वात्पुनरपि मङ्गलमाचरति—चित्रा इति । तं शिवं नौमि स्तौमि च । विस्तारेण तत्त्वेषु प्रकृत्यादिषु चतुर्विंशतौ अनुगतमनुस्यूतम् । ततश्च चित्रा विचित्रिता वाचः वेदरूपाः प्रवर्तन्ते । धातवः सप्त त्वगादयः, तेषां वृत्तिर्व्यापारविशेषः, तेन विचित्रिताः । अथवा धातवः कफादयः, तद्वृत्त्या विचित्रिता इति । पक्षे शिवं कल्याणरूपं वाद्यं नौमि । विस्तीर्णनादभेदत्वात्, 'विस्तीर्णनादभेदत्वात् विस्तारो धातुरुच्यते' इति वक्ष्यमाणो विस्तारः, तत्त्वमोघश्च गीतानुगवाद्यभेदौ वक्ष्यमाणौ, तदनुगतम् । यतः वाद्यात् विचित्रिता वाचो वाद्याक्षराणि प्रवर्तन्ते । अथवा चित्रा वृत्तिर्वक्ष्यमाणस्य वाचः शब्दाः, किंभूताः ? धातुवृत्तिविचित्रिताः ; 'ये प्रहारविशेषोत्थाः स्वरास्ते धातवो मताः ।' 'वृत्तिर्गुणप्रधानत्वरूपा व्यवहृतिर्मता ।' इति च वक्ष्यमाणः । तैः विचित्रिता इति संबन्धः ॥ १, २ ॥

(क०) अत्र गीतप्रकरणानन्तरं वाद्यप्रतिपादने सोपपत्तिकां सङ्गतिं दर्शयति—**गीतं चतुर्विधादित्यादिना** । **तत्र पूर्वाभ्यामिति** । **तत्र**; सुषिरावनद्धघनेषु मध्ये, **पूर्वाभ्यां** ततसुषिराभ्याम् । **श्रुत्यादिद्वारत इति** । अत्रादिशब्देन स्वरमूर्च्छनाक्रमतानालंकारजातिगीतयो गृह्यन्ते । श्रुत्यादय एव द्वारं मुखं तस्मात् गीतं भवेत्, संगीतमुत्पद्यत इत्यर्थः । **ततः**; अनन्तरमुक्तं गीतम् **अवनद्धेन रज्यते** । तत्र तत्र नादसाम्यं यथा भवति तथा ध्वननेन रक्तातिशययुक्तं क्रियत इत्यर्थः । **घनात् मीयत इति** । घन-

[1]वाद्यतन्त्रीततं वाद्यं सुषिरं मतम् ॥ ५ ॥
चर्मावनद्धवदनमवनद्धं तु वाद्यते ।
घनो मूर्तिः साभिघाताद्वाद्यते यत्र तद्धनम् ॥ ६ ॥

वाद्यात् लघ्वादिक्रियया संमितं क्रियत इत्यर्थः । एवं चतुर्विधानामपि वाद्यानां गीत एवोपकारकत्वमवगन्तव्यम् ॥ ३, ४- ॥

(सु०) एवं मङ्गलाचरणं विधाय पूर्वाध्यायैः सह संबन्धमाह—गीतमिति । चतुर्विधात्; ततादिलक्षणात् वाद्यात् गीतं जन्यते उत्पाद्यते, उपरज्यते; रञ्जकं च क्रियते; मीयते निगद्यते च । यतः यस्मात्कारणात् । अत्र गीतानन्तरं वाद्यं निगद्यते उच्यत इति । अविशेषेण जनोपरञ्जने मानान्युक्तानि । कस्माद्वाद्यात् किं जायत इत्यपेक्षायामाह—ततमिति । ततवाद्यं चतुर्विधम् । ततं, सुषिरम्; अवनद्धं, घनमिति । तत्र पूर्वाभ्यां ततसुषिराभ्यां श्रुतिस्वरादिद्वारेण गीतं भवेत् उत्पाद्यते तद्गीतमवनद्धेन रज्यते अनुरज्यते; घनात् मीयते गण्यत इति ॥ ३, ४- ॥

(क०) ततादीनां सामान्यलक्षणमाह—वाद्यतन्त्रीत्यादिना । वाद्या वादनीया तन्त्री यस्मिंस्तद्वाद्यतन्त्रीति ततवाद्यस्य लक्षणम् । सुषिरं छिद्रमस्यास्तीति सुषिरमिति सुषिरवाद्यस्य लक्षणम् । चर्मावनद्धवदनमित्यवनद्धवाद्यस्य लक्षणम् । घन इत्यस्य व्याख्यानं मूर्तिरिति । सा; मूर्तिः । यत्राभिघाताद्वाद्यत इति । यत्र; यस्मिन् गीतादौ विषये, अभिघातात् परस्परपीडनाद्धेतोः वाद्यते ध्वन्यते तद्धनमिति, मूर्तिरेव घनमित्यर्थः ॥ ५, ६॥

(सु०) ततादिलक्षणमाह – ततमिति । तन्त्र्या ततं विस्तारितं ततमित्युच्यते । सुषिरं सच्छिद्रं वंशादि । चर्मणा अवनद्ध पिहितं वदनं मुखं यस्य

[1] ततं तन्त्रीततं वाद्यमिति सुधाकरपाठः

ततं वीणा द्विधा सा च श्रुतिस्वरविवेचनात् ।
तत्र श्रीशार्ङ्गदेवेन श्रुतिवीणोदिता पुरा ॥ ७ ॥
वक्ष्यते स्वरवीणात्र तस्यामपि विचक्षणाः ।
अङ्कित्वा स्वरदेशानां भागानुद्भिन्दते श्रुतीः ॥ ८ ॥
तद्भेदास्त्वेकतन्त्री स्यान्नकुलश्च त्रितन्त्रिका ।
चित्रा वीणा विपञ्ची च ततः स्यान्मत्तकोकिला ॥ ९ ॥
आलापिनी किंनरी च पिनाकीसंज्ञिता परा ।
निःशङ्कवीणेत्याद्याश्च शार्ङ्गदेवेन कीर्तिताः ॥ १० ॥

तदवनद्धम् । घनो मूर्तिरुच्यते । तन्त्री चर्मादिहीनं कांस्यादिघटितमित्यर्थः । सा मूर्तिः अभिघातात् यत्र ध्वन्यते वाद्यते तद्घनमिति ॥ -९, ६ ॥

(क०) तत्र तद्भेदान् दर्शयितुमाह— ततं वीणेत्यादिना । श्रुतिवीणोदिता पुरेति । स्वरगताध्याय इत्यर्थः । तस्यामपि; स्वरवीणायामपि; विचक्षणाः; सूक्ष्मबुद्धयः; स्वरदेशानाम्; दण्डादिषु षड्जादिस्वरप्रदेशानाम्; भागान्; चतुःसंख्याकादिकान्; अङ्कित्वा; तत्तच्छ्रुतीनां न्यूनाधिकभावो यथा न भवति तथा चिह्नितान्कृत्वा; श्रुतीः; उद्भिन्दते तीव्रादिकाः श्रुतीः प्रादुर्भावयन्ति । श्रुतिवीणायां तु स्वराः स्वत एव प्रादुर्भवन्ति ॥ ७, ८ ॥

(सु०) तद्भेदानाह--ततमिति । वीणा ततमुच्यते । सा द्विधा; श्रुतिवीणा, स्वरवीणा चेति । तत्र श्रुतिवीणा पूर्वमुक्ता श्रुतिनिरूपणावसरे सारणी प्रस्तावे । स्वरवीणा अधुना वक्ष्यते । तस्यामपि; स्वरवीणायाम्; विचक्षणाः; संगीतमर्मज्ञाः; स्वरदेशानाम्; स्वरप्रदेशानां, भागान्; अवयवान्, अङ्कित्वा; संज्ञान् कृत्वा, श्रुतीः उद्भिन्दते; श्रुत्युदयप्रकारं कुर्वन्तीत्यर्थः ॥ ७–८ ॥

(क०) अथ स्वरवीणाभेदानुद्दिशति—तद्भेदास्त्वित्यादिना ।

वंशः पावः पाविका च मुरली मधुकर्यपि ।
काहलातुण्डुकिन्यौ च चुक्का शृङ्गमतः परम् ॥ ११ ॥
शङ्खादयश्च वाद्यस्य सुषिरस्य भिदा मताः ।
पटहो मर्दलश्चाथ हुडुक्का करटा घटः ॥ १२ ॥
घडसो ढवसो ढक्का कुडुक्का कुडुवा तथा ।
रुञ्जा डमरुको डक्का मण्डिडक्का च डक्कुली ॥ १३ ॥
सेल्लुका झल्लरी भाणस्त्रिवली दुन्दुभिस्तथा ।
भेरीनिःसाणतुम्बक्यो भेदाः स्युरवनद्धगाः ॥ १४ ॥
तालोऽथ कांस्यतालः स्याद्घण्टा च क्षुद्रघण्टिका ।
जयघण्टा ततः कम्रा शुक्तिपट्टादयस्तथा ॥ १५ ॥
प्रभेदा घनवाद्यस्य प्रोक्ताः सोढलसूनुना ।

**निःशङ्कवीणेत्याद्याश्चेत्यत्र** आद्यशब्देन देशान्तरे सुप्रसिद्धा चान्यापि स्वरवीणा गृह्यते । **निःशङ्कवीणेति** स्वनामकरणेन अप्रसिद्धामप्यन्यां स्वबुद्ध्या निर्माय तस्याः स्वेच्छया संज्ञां कुर्यादिति गम्यते । एवं सुषिरादिष्वपि द्रष्टव्यम् ॥ ९, १० ॥

(सु०) स्वरवीणाभेदानाह—तद्भेदा इति । तस्याः स्वरवीणाया भेदा एकतन्त्रीनकुलादयो ज्ञातव्याः ॥ ९, १० ॥

(क०) सुषिरादिभेदानुद्दिशति—वंशः पाव इत्यादिना॥ ११–१५-॥

(सु०) सुषिरवाद्यभेदानाह -- वंश इति । वंशादयः सुषिरभेदाः । अवनद्धभेदानाह—पटह इति । पटहमर्दलादयो भेदा अवनद्धगाः अवनद्धवाद्यसंबन्धिनः । घनभेदानाह—ताल इति । कांस्यतालादयो घनवाद्यभेदाः शार्ङ्गदेवेनोक्ताः ॥ ११–१५- ॥

शुष्कं गीतानुगं नृत्तानुगमन्यद् द्वयानुगम् ॥ १६ ॥
चतुर्धेति मतं वाद्यं तत्र शुष्कं तदुच्यते ।
यद्विना गीतनृत्ताभ्यां तद्गोष्टीत्युच्यते बुधैः ॥ १७ ॥
ततः परं तु त्रितयं भवेदन्वर्थनामकम् ।
वाद्यं दक्षाध्वरध्वंसोद्वेगत्यागाय शंभुना ॥ १८ ॥
चक्रे कौतुकतो नन्दिस्वातितुम्बुरुनारदैः ।
अभिषेके नरेन्द्राणां यात्रायामुत्सवे तथा ॥ १९ ॥
मङ्गलेषु च सर्वेषु विवाहोपनयादिषु ।
उत्पाते संभ्रमे युद्धे नाटके वीररौद्रिणि ॥ २० ॥
सर्वातोद्यानि वाद्यन्ते कानिचित्स्वल्पमङ्गले ।
विश्रान्तौ रङ्गसंस्थानां गायतां नृत्यतामपि ॥ २१ ॥
एतान्युत्साहकारीणि वीराणां मङ्गलाय च ।
कुर्वन्ति हृदयस्फूर्तिं दुःखमुन्मूलयन्ति च ॥ २२ ॥

(क०) स्वरूपतश्चतुर्भेदभिन्नस्य वाद्यस्य प्रयोगभेदेन पुनश्चातुर्विध्यं दर्शयति—शुष्कमित्यादिना ॥ १६, १७- ॥

(सु०) वाद्यस्य पुनश्चातुर्विध्यमाह—शुष्कमिति । वाद्यं चतुर्विधं भवति । शुष्कं, गीतानुगं, नृत्तानुगं, गीतनृत्तानुगमिति । तत्र गीतनृत्ताभ्यां विना स्वतन्त्रं यद्वाद्यते तच्छुष्कम्; तच्च लोकैर्गोष्टीत्युच्यते । गीतानुगादित्रयं सार्थकनामकम् । गीतानुगम्; यद् गीतमनुगच्छति तद्गीतानुगम् । नृत्तानुगम्; यत् नृत्तमनुसरति तन्नृत्तानुगम् । द्वयानुगम्; यद् गीतं नृत्तं चानुसरति तद् द्वयानुगमिति ॥ १६–१७- ॥

(क०) वाद्यस्येश्वरकर्तृकत्वं दर्शयति—**वाद्यं दक्षाध्वरेत्यादिना** । **शंभुना** प्रयोजकेन, **नन्दिस्वात्यादिभिः** प्रयोज्यैः चक्रे कारितमित्यर्थः ।

गीतनृत्तगतन्यूनप्रच्छादनपटून्यपि ।
वाद्यान्यतस्ततादीनि,
तत्रादौ ब्रूमहे वयम् ॥ २३ ॥
तस्य वादनभेदांश्च विविधाः करसारणाः ।
सुषिरं पटहं तस्य पाटांस्तद्रचनास्तथा ॥ २४ ॥

वाद्यप्रयोगस्य कालविशेषानाह—**अभिषेक इत्यादि । गीतनृत्तेति ।** गीतनृत्तगतन्यूनप्रच्छादनपटून्यपीति ; अत्रापिशब्देन वाद्यप्रतिपादने प्रयोजनमिदमपि दर्शयति । तत्प्रयोजनं गीतनृत्तगतन्यूनताप्रच्छादनम् । अत्र न्यूनशब्दो धर्मपरत्वेन नेयः । यतस्तत्र पटूनि अतः ततादीनि वाद्यानीति संबन्धः । वाद्यानि वादनीयानीत्यर्थः ॥ १८–२३ ॥

(सु०) वाद्योत्पत्तिमाह—**वाद्यमिति । दक्षयागध्वंसेन यो जात उद्वेगः** अस्वास्थ्यं तदुपशान्तये शंभुना यद् वाद्यं चक्रे व्यधायि । स्वात्यादिभिर्गणैः अनन्दि सम्यक्कृतमित्यर्थ , वाद्यवादनसमयानाह—**अभिषेक इति । उत्पाते ;** भूतावेशादिबाधासु, संभ्रमे ; देवतामहोत्सवादिषु राजाभिषेकादिषु सर्वाणि वाद्यानि वाद्यन्ते । अल्पे मङ्गले कानिचित् लोकस्थितिमनतिक्रम्य अल्पान्येव वादनीयानीत्यर्थः । रङ्गसंस्थानां नर्तकानां गायतां च कुशीलवादीनां विश्रान्तौ च स्वल्पान्येव वाद्यानि वादनीयानीत्यर्थः । वाद्यानि स्तुवन्नुपयोगमाह – एतानीति । पटहादिवाद्यानि संग्रामे वीराणामुत्साहमुत्पादयन्ति । प्रहारादिदुःखं नाशयन्ति । ततादीनि तु वाद्यानि गीतादिगतं न्यूनत्वं तत्साम्यात्प्रच्छादयन्ति ॥ -१८–२३ ॥

(क०) तत्र श्रुतिस्वरविवेकनिदर्शकतया गीतोत्पादकमिति प्रथमोद्दिष्टं ततवाद्यमारभ्याध्याये क्रमेण प्रतिपाद्यानर्थानुद्दिशति—**तत्रादौ ब्रूमहे वयमित्यादिना । तस्य वादनभेदांश्चेत्यादिभिश्च** यथाक्रमं ब्रूमहे इति

पाटप्रभववाद्यानि प्रबन्धान्वाद्यसंश्रयान् ।
मर्दलाख्यं ततो वाद्यं भेदान्मार्दलिकस्य च ॥ २५ ॥
गुणान्दोषांश्च तद्वृन्दं स्वरूपस्य च लक्षणम् ।
हुडुक्काद्यवनद्धानां स्वस्वपाटसमन्वितम् ॥ २६ ॥
घनस्य च गुणान्दोषान् वाद्यवादकसंगतान् ।
हस्तयोश्च गुणानत्र वाद्याध्याये यथाक्रमम् ॥ २७ ॥
अङ्गुष्ठपर्वदैर्घ्यं स्यादङ्गुलं द्वादशाङ्गुलम् ।
वितस्तिस्तद्द्वयं हस्तो वाद्यभाण्डमितौ भवेत् ॥ २८ ॥
ग्रन्थिव्रणभिदा हीनः श्लक्ष्णः खदिरदारुजः ।
सुवृत्तः सरलो दण्डो वितस्तिपरिधिर्भवेत् ॥ २९ ॥
त्रिहस्तदैर्घ्यस्तावच्च सुषिरं दधदन्तरा ।
सार्धाङ्गुलपरीणाहमूर्ध्वाधो वदने तथा ॥ ३० ॥
कनिष्ठाङ्गुलिमानं वाभग्नं रन्ध्रत्रयं दधत् ।
त्रेताग्निसंस्थितं यद्वा द्वे रन्ध्रे तर्जनीमिते ॥ ३१ ॥
एकमेव त्वधः शङ्कुस्थाने सार्धाङ्गुलायतम् ।

क्रियाकारकसंबन्धो द्रष्टव्यः । वाद्यानां स्वरूपनिरूपणार्थमङ्गुलादिपरिमाणविशेषान् लक्षयति—अङ्गुष्ठपर्वेत्यादिना ॥ -२३–२८ ॥

(सु०) अस्मिन्नध्याये अभिधेयान् पदार्थान् संगृह्णाति— तत्रादाविति । परिभाषालक्षणमाह—अङ्गुष्ठेति वाद्यभाण्डादीनां दण्डादीनां च मितौ माने अङ्गुष्ठपर्वदैर्घ्यमङ्गुलं ज्ञातव्यम् । तथाविधैः द्वादशिभिरङ्गुलैर्वितस्तिः, वितस्तिद्वयं हस्त इति ॥ -२३-२८ ॥

(क०) अथैकतन्त्र्यां वीणायां दण्डादिलक्षणकथनपूर्वकनिर्माणप्रकारं तत्पवित्रतां चोक्त्वा तद्वादनप्रकारं वामदक्षिणोभयहस्तभेदांस्तदुद्भववाद्यभेदांश्च

दधानः ककुभं सारं खादिरं वान्यदारुजम् ॥ ३२ ॥
तिर्यक्संस्थेन दैर्घ्येणाष्टाङ्गुलं त्र्यङ्गुलायतम् ।
अङ्गुलाधिकपार्श्वं च मध्ये कूर्मोन्नताकृतौ ॥ ३३ ॥
स्थितेन पत्रिकाधारगर्तेन च समन्वितम् ।
गर्तमध्ये च रन्ध्रेण योन्याकारेण संयुतम् ॥ ३४ ॥
रन्ध्रे तस्य निविष्टेन रन्ध्रास्थौल्येन शङ्कुना ।
अन्वितां पत्रिकां मिश्रलोहजां द्व्यङ्गुलायताम् ॥ ३५ ॥
चतुरङ्गुलदैर्घ्यां च मध्ये कूर्मोन्नतां बहिः ।
निम्नमध्यं मनागन्तर्धारयन्तमधः पुनः ॥ ३६ ॥
द्विदण्डिकं शङ्कुनाष्टाङ्गुलदैर्घ्ययुजा तथा ।
वृत्तेन त्र्यङ्गुलस्थूलोत्तरार्धश्लक्ष्णमूर्तिना ॥ ३७ ॥
कूर्मपृष्ठोन्नतं मध्यमुत्तरार्धस्य बिभ्रता ।
दण्डवक्त्रमितस्थौल्याधरभागयुतेन च ॥ ३८ ॥
दण्डवक्त्रप्रविष्टाधोभागेन च विराजितम् ।
एवंविधस्य दण्डस्योर्ध्वाग्रात्सप्तदशाङ्गुले ॥ ३९ ॥
अधोभागेऽक्षिसदृशं विधाय विवरद्वयम् ।
एकद्वित्रिगुणां तन्त्रीं क्षिप्त्वा रन्ध्रे परत्र तु ॥ ४० ॥
तन्त्रीप्रान्तान्तरे क्षिप्त्वा प्रोतं तद् द्विगुणे ततः ।
द्विगुणाकर्षणात्कर्षेत्पुनरेवं समाचरेत् ॥ ४१ ॥

दर्शयति—'ग्रन्थिव्रणभिदा हीनः' इत्यारभ्य 'घोषकश्चैकतन्त्रिका' इत्यन्तेन ग्रन्थसंदर्भेण ॥ २९–१०९ ॥

(सु०) एकतन्त्र्या वीणाया लक्षणमाह—ग्रन्थीति । ग्रन्थिः अर्बुदमिव

**षष्ट्यङ्गुलपरीणाहं सुपक्वं वर्तुलं च यत्।**
**तुम्बस्योत्सेधतस्तस्य वदनं द्वादशाङ्गुलम् ॥ ४२ ॥**

प्रभेदः कुटिलत्वं ताभ्यां हीनः, श्लक्ष्णो मसृणः, सुवृत्तो वर्तुलः, सरलो दीर्घः, वितस्तिः परिधिर्यस्य; एवंविधः खदिरकाष्ठोत्पन्नो दण्डो भवेत्। हस्त दैर्घ्यं यस्य तावद्धस्तत्रयप्रमाणं सुषिरं छिद्रमन्तरा मध्ये दधत् धारयत्; ष ङ्गुलपरीणाहमिति सुषिरविशेषणम्। ऊर्ध्वमधश्च वदने मुखद्वयं दधा संबन्धः। अभग्नमस्फुटितं रन्ध्रत्रयं कनिष्ठाङ्गुलिप्रमाणं त्रेताग्निवत् संस्थि दधत्; अथवा रन्ध्रद्वयं तर्जनीप्रमाणकं शङ्कुस्थाने अधस्तादेकं रन्ध्रं सार्धाङ्गुलिप्रमाणकं दधत् दण्डो भवेदिति संबन्धः। ककुभं वैणिकप्रसिद्धं दधानः, आरैः सह वर्तमानं सारं, खादिरकाष्ठजम्, अन्यकाष्ठजं वा तिर्यक्संस्थितेन पार्श्वस्थेन दैर्घ्येण अष्टाङ्गुलम्, अङ्गुलत्रयविस्तृतम्, अङ्गुलात् किंचिदधिकपार्श्वं सार्धाङ्गुलपार्श्वं सपादाङ्गुलपार्श्वं वा कूर्मवत् उन्नता आकृतिर्यस्य; एवंविधे मध्ये स्थितेन पत्रिकाया आधारभूतेन गर्तेन च समन्वितम्; गर्तस्य मध्ये च योन्याकारेण रन्ध्रेण संयुक्तेन शङ्कुना युक्तां पत्रिकां धारयन्तम्। कीदृशेन शङ्कुना? तस्य ककुभस्य रन्ध्रे निविष्टेन रन्ध्रे स्थितेन रन्ध्रस्य अस्थौल्यमल्यं यस्य; कथंभूतां पत्रिकाम्? कांस्यादिमिश्रेण लोहेन घटितां द्व्यङ्गुलायतां चतुरङ्गुलदीर्घां च मध्ये कूर्मवत् उन्नतां मनाक् किंचित् अन्तर्निम्नमध्यम्, एवंविधां पत्रिकां बहिर्धारयन्तं ककुभमिति संबन्धः। अथोत्तरार्धस्य मध्यं बिभ्रता शङ्कुना विराजितमष्टाङ्गुलं दैर्घ्यं यस्य शङ्कोः तथाविधेन वृत्तेन वर्तुलेन द्व्यङ्गुलस्थूलमुत्तरार्धं यस्य, श्लक्ष्णा मूर्तिर्यस्य, कथंभूतमुत्तरार्धस्य मध्यम्? कूर्मपृष्ठवत् उन्नतमिति। दण्डमुखवत् प्रमाणं स्थौल्यं यस्यैवंविधेन अधरभागेन युतेन शङ्कुना, दण्डस्य वक्त्रे प्रविष्ट अधोभागो यस्य; एवं विधेन शङ्कुना विराजितं ककुभं दधानो दण्डो भवेत्। एवंविधस्येति। एवंविधस्य दण्डस्य अधोभागे नेत्रसदृशं विवरद्वयं विधाय; परत्र रन्ध्रे तु एकद्वित्रिगुणाम्; एकगुणां द्विगुणां त्रिगुणां वा तन्त्रीं निक्षिप्य, द्विगुणाकर्षणात् तन्त्रीं कर्षेत् आकर्षयेदिति संबन्धः ॥ २९-४१ ॥

वृत्तस्थानस्थया नाभ्याधोमुख्या मध्यरन्ध्रया ।
त्र्यङ्गुलायतया युक्तं पृष्ठसंश्लिष्टपूर्वया ॥ ४३ ॥
तुम्बकं मध्यरन्ध्रं स्यात्कर्परं नालिकेरजम् ।
अन्तस्थरन्ध्रसंलग्नं पृष्ठमध्येन रन्ध्रिणा ॥ ४४ ॥
तं दधद्रन्ध्रमध्येऽथ तन्त्रीप्रान्ते निवेश्य तौ ।
संवेष्ट्य कीलकेऽन्तस्थे कीलकं भ्रामयेन्मुहुः ॥ ४५ ॥
तावद्यावद् दृढो बन्धस्तुम्बकस्यैव जायते ।
एवं तुम्बकमुत्तानं दण्डे तज्ज्ञैर्निबध्यते ॥ ४६ ॥
दोरकं नागपाशेन द्विगुणेनान्वितं ततः ।
सुबलश्लक्ष्णसूत्रोत्थं दण्डे तुम्बोर्ध्वदेशतः ॥ ४७ ॥
संवेष्ट्य नागपाशेऽस्मिन् बद्धप्रान्तां दृढां घनाम् ।
श्लक्ष्णां स्नायुमयीं तन्त्रीं कृष्ट्वा संपीड्य पत्रिकाम् ॥ ४८ ॥
तन्त्र्या संवेष्ट्य ककुभं निबध्नीयाद् दृढं ततः ।
वैणवी यवविस्तारा तन्त्री द्व्यङ्गुलदैर्घ्यभाक् ॥ ४९ ॥
तन्त्रीपत्रिकयोरन्तर्जीवा नादस्य सिद्धये ।
संदिग्धपत्रिका तन्त्रीश्लेषं क्षेप्या कलावता ॥ ५० ॥

(सु०) षष्ठ्यङ्गुलेति । तुम्बमलांबुम्, षष्ठ्यङ्गुलं सुपक्वं वर्तुलं च यद्भवेत्, तस्य वदनम् उत्सेधतः उत्सेधात् द्वादशाङ्गुलं कुर्यात् । तत्तुम्बकं नाभ्या संयुक्तं नालिकेरजं कर्परं दधत् स्यात् । कथंभूतया नाभ्या ? वृत्तस्थाने फलकसंबन्धस्थाने स्थितया, अधोमुखं यस्याः, तथाविधया मध्ये रन्ध्रसंयुक्तया त्र्यङ्गुलेन आयामेन युक्तया तुम्बस्य पृष्ठे संश्लिष्टं पूर्वं यस्या इति । कथंभूतं कर्परम् ? अन्तः सच्छिद्रं रन्ध्रयुक्तं च, रन्ध्रं मध्येन दधदिति संबन्धः । तस्य रन्ध्रस्य मध्ये तन्त्रीप्रान्ते निवेश्य अन्तस्थे कीलके संवेष्ट्य तं कीलकं मुहुस्तावद् भ्रामयेत्, यावत्तुम्बस्य बन्धो दृढो जायते । एवमिति । एवं पूर्वोक्तप्रकारेण

या पक्ववेणुवल्कोत्था दोरिका त्रिवृता शुभा ।
कनिष्ठाङ्गुलिविस्तारा द्वादशाङ्गुलदैर्घ्यभाक् ॥ ५१ ॥
सुवृत्ता मसृणा तुम्बादधस्तादङ्गुलत्रये ।
दण्डे संवेष्टयेन्मन्द्रस्वरस्थानोपलक्षिकाम् ॥ ५२ ॥
यत्राभिदधिरे धीरास्तां वीणामेकतन्त्रिकाम् ।
प्रकृतिः सर्ववीणानामेषा श्रीशार्ङ्गिणोदिता ॥ ५३ ॥
दर्शनस्पर्शने चास्या भोगस्वर्गापवर्गदे ।
पुनीतो विप्रहत्यादिपातकैः पतितं जनम् ॥ ५४ ॥
दण्डः शंभुरुमा तन्त्री ककुभः कमलापतिः ।
इन्दिरा पत्रिका ब्रह्मा तुम्बं नाभिः सरस्वती ॥ ५५ ॥
दोरको वासुकिर्जीवा सुधांशुः सारिका रविः ।
सर्वदेवमयी तस्माद्वीणेयं सर्वमङ्गला ॥ ५६ ॥
अधस्तुम्बमधोवक्त्रमूर्ध्वं तन्त्री यथा भवेत् ।

उत्तानं तुम्बं तज्ज्ञैः वैणिकैः दण्डे निबध्यते । ततः अनन्तरं सुबलेन श्लक्ष्णेन सूत्रोत्थं दोरकं द्विगुणेन नागपाशेन अन्वितं तुम्बोर्ध्वप्रदेशे दण्डे संवेष्ट्य अस्मिन् नागपाशे बद्धप्रान्ते यस्यैवंविधा स्नायुमयीं तन्त्रीं कृष्ट्वा आकृष्य पत्रिकां च संवेष्ट्य दृढं ककुभं तया तन्त्र्या निबध्नीयादिति संबन्धः । ततः अनन्तरं वेणुरचिता यवमात्रायामा द्व्यङ्गुलदीर्घा वर्तुला तन्त्री स्यात् । ततः तुम्बादधोभागे दण्डे संवेष्टयेत्; मन्द्राणां स्वराणां स्थानोपलक्षणाय । एवंविधं लक्षणं यस्या विद्यते तां वीणामेकतन्त्रीमित्याहुः । इयं सर्वासां वीणानां प्रकृतिः । अन्यास्वनुक्तं लक्षणमेतस्या गृहीतव्यमित्यर्थः ॥ ४२–९३ ॥

(सु०) एकतन्त्रीं वीणां स्तौति—दर्शनेति । वीणावादनविन्यासमाह—अध इति । अधोमुखं तुम्बम् अधस्तात् द्विधा भवति । तन्त्री चोर्ध्वं भवेत् ।

तथास्या दोरिकादेशं वामस्कन्धे निधाय च ॥ ५७ ॥
ककुभं दक्षिणस्याङ्घ्रेः पार्ष्ण्या संधाय यत्नतः ।
न्यस्तां पृष्ठे कनिष्ठाया वामहस्तस्य कम्रिकाम् ॥ ५८ ॥
सारणात्सारणेत्युक्तामनामाङ्गुलिवेष्टिताम् ।
आकुञ्चन्मध्यमापार्श्वलग्नां तर्जनिकाग्रतः ॥ ५९ ॥
निपीड्योरःस्थलासन्नां तन्त्रीमधिनिधाय च ।
ऊर्ध्वाधः सारयेन्नादसिद्ध्यै हस्तं तु दक्षिणम् ॥ ६० ॥
त्यक्त्वा वितस्तिं जीवातस्तन्त्रीं विन्यस्य सारयेत् ।
अन्यत्रोपरिवाद्यान्तं नोर्ध्वं वक्षःस्थलान्नयेत् ॥ ६१ ॥
कम्रिका तत्क्रिया चोक्ता सारणा सा चतुर्विधा ।
उत्क्षिप्ता संनिविष्टाख्योभयी स्यात्कम्पितेत्यपि ॥ ६२ ॥
श्लिष्टा तन्त्रीं यदोत्प्लुत्य निपतेत्सारणान्मुहुः ।
तदोत्क्षिप्ता संनिविष्टा स्पृष्ट्वैव सारणे भवेत् ॥ ६३ ॥
क्रमादेतद्द्वयाभ्यासादुभयी सारणा मता ।
स्वरस्थाने कम्पनेन कम्पिता कम्रिकोच्यते ॥ ६४ ॥

तथा दोरिकादेशं वामे स्कन्धे स्थापयित्वा ककुभं च दक्षिणचरणस्य पार्ष्णे यत्नतोऽपसारयित्वा वामहस्तस्य कनिष्ठायाः पृष्ठे न्यस्तां स्थापितां कम्रिकां वेणुदण्डां सारणात् अध उर्ध्वं प्रसारणात् सारणाशब्दाभिधेयमनामिकं किंचिदङ्गुलिवेष्टितामाकुञ्चन्त्या मध्यमायाः पार्श्वे लग्नां तर्जनिकाग्रेण निपीड्य तन्त्र्याः समीपे निधाय कम्रामूर्ध्वाधः सारयेदिति संबन्धः । दक्षिणं तु हस्तं जीवातो वितस्तिं त्यक्त्वा तन्त्र्यां विन्यस्य स्थापयित्वा सारयेत् । तं दक्षिणहस्तमुपरि वाद्यादन्यत्र न वक्षःस्थलादूर्ध्वं नयेदिति ॥ ५४–६१ ॥

(सु०) सारणाभेदानाह—कम्रिकेति । वादनवेणुदण्डरूपं कम्रिका

**घातः पातश्च संलेखस्तथोल्लेखावलेखकौ ।**
**भ्रमरः संधितच्छिन्नौ नवमी नखकर्तरी ॥ ६५ ॥**
**व्यापारा दक्षिणस्येति पाणेर्वामस्य तु द्वयम् ।**
**स्फुरितः खसितश्चेति करयोरुभयोस्त्वमी ॥ ६६ ॥**
**घोषो रेफोऽथ बिन्दुः स्यात्कर्तरी चार्धकर्तरी ।**
**निष्कोटिताख्यः स्खलितः शुकवक्त्रश्च मूर्च्छना ॥ ६७ ॥**
**तलहस्तोऽर्धचन्द्रश्च प्रसारः कुहरोऽपरः ।**
**त्रयोदशेति सर्वेऽमी स्युश्चतुर्विंशतिर्युताः ॥ ६८ ॥**
**करनामान्यपीमानि मन्वते वाद्यवेदिनः ।**
**घातः स्यान्मध्यमाक्रान्ततर्जन्या तन्त्रिकाहतिः ॥ ६९ ॥**

इति घातः (१)

तस्याः क्रिया च सारणेत्युच्यते । सा सारणा चतुर्विधा; उत्क्षिप्ता, संनिविष्टा, उभयी, कम्पितेति । एतासां लक्षणमाह—श्लिष्टेति । यदा कम्रा तन्त्र्या श्लिष्टा सती तन्त्रीमुद्धृत्य पूर्वस्थानं विमुच्य दूरं गत्वा मुहुः वारं वारं सरेत् सारणान्निपतेत् अधोगच्छेत्; तदा उत्क्षिप्तेत्युच्यते । तन्त्रीं स्पृष्ट्वा विमुच्यैव कम्रायाः सारणात् संनिविष्टा ; द्वयाभ्यासात् क्रमात् अस्पृष्ट्वा स्पृष्ट्वा सारणाभ्यासात् उभयी ; स्वरस्थाने कम्पनात् कम्पितेति । वीणावादने करव्यापारमाह—घात इति । घातादयो नव व्यापाराः दक्षिणहस्तस्य ; स्फुरितखसितौ द्वौ व्यापारौ वामहस्तस्य । घोषादयस्त्रयोदश व्यापाराः द्वयोर्हस्तयोः, सर्वे मिलिता व्यापाराः चतुर्विंशतिः । न केवलमेतानि हस्तव्यापारनामानि, अपि तु हस्तनामान्यपीति वाद्यवेदिन आहुः ॥ ६२–६८- ॥

(सु०) एतेषां क्रमाल्लक्षणमाह—घातः स्यादिति । मध्यमाङ्गुल्या श्लिष्टया तर्जन्या तन्त्रिकाया आघातो घात इत्युच्यते ; इति घातः (१) । केवलं तर्जन्या रहतिः पातः ; इति पातः (२) । तया तर्जन्या अन्तर्मध्ये आहतिः

घातः केवलया पातः,

इति पातः (२)

संलेखोऽन्तस्तया हतिः ।

इति संलेखः (३)

अन्तर्मध्यमया घातमुल्लेखं संप्रचक्षिरे ॥ ७० ॥

इत्युल्लेखः (४)

अवलेखो मध्यमया स्यात्तन्त्रीताडनं बहिः ।

इत्यवलेखः (५)

अङ्गुल्यान्येऽन्ययाप्याहुरुल्लेखं चावलेखकम् ॥ ७१ ॥
सर्वाभिस्तिसृभिस्ताभ्यामथवेति च ते जगुः ।
अन्तर्बहिर्मुखौ घातौ तयोस्ते ब्रुवते क्रमात् ॥ ७२ ॥

इति मतान्तरेणोल्लेखावलेखौ

भ्रमरोऽन्तःक्रमाच्छीघ्रं चतुरङ्गुलिताडनम् ।

इति भ्रमरः (६)

मध्यमानामिकाभ्यां तु बहिर्घातोऽत्र संधितः ॥ ७३ ॥

इति संधितः (७)

तर्जनीपार्श्वलग्नायास्तन्त्र्या बहिरनामया ।
हननं छिन्नमाचष्टे श्रीमत्सोढलनन्दनः ॥ ७४ ॥

इति च्छिन्नः (८)

संलेखः ; इति संलेखः (३)। मध्यमया अङ्गुल्या तद्धति अन्तर्मध्ये घातमुल्लेखः ; इत्युल्लेखः (४) । मध्यमया बहिस्तन्त्र्यास्ताडनमवलेखः ; इत्यवलेखः (५)। मतान्तरमाह—अङ्गुल्येति । अन्योन्यसंश्लिष्टया अङ्गुल्या उल्लेखोवलेखकौ कार्याविलत्न्ये आचार्या आहुः । अथवेति । त एव विकल्पेन सर्वाभिरङ्गुलीभिः तिसृभिर्द्वाभ्यां वा उल्लेखावलेखकौ कार्याविल्याहुः । तयोः उल्लेखावलेखयोः क्रमात् अन्तर्बहिर्मुखौ घातौ, उल्लेखे अन्तर्मुखः, अवलेखे बहिर्मुख इत्यन्ये आचार्या

**क्रमाद् द्रुतं नखैर्घातश्चतुर्भिर्नखकर्तरी ।**

इति नखकर्तरी (९)

इति नव दक्षिणहस्तव्यापाराः

**स्फुरिते कम्पिता तन्त्रीपृष्ठलग्नेव सारणा ॥ ७५ ॥**

इति स्फुरितः (१)

**मुहुः सारणया तन्त्रीघर्षणं खसितो मतः ।**

इति खसितः (२)

इति वामहस्तव्यापारद्वयम्

**तन्त्री लग्नाङ्गुष्ठपार्श्वा कर्तरीवच्च हन्यते ॥ ७६ ॥**

**कनिष्ठासारणाभ्यां वा यत्रासौ घोष उच्यते ।**

इति घोषः (१)

**दक्षिणानामया यत्र तन्त्रीरन्तर्निहन्यते ॥ ७७ ॥**

**वामस्य मध्यमाङ्गुल्या बहिस्तं रेफमूचिरे ।**

इति रेफः (२)

ब्रुवते; इत्यवलेखः (५) तन्त्र्या अन्तश्चतसृभिरङ्गुलीभिः क्रमात् शीघ्रं ताडनं भ्रमरः; इति भ्रमरः (६) मध्यमानामिकाभ्यामङ्गुलीभ्यां तन्त्र्या बहिर्घातः संधितः; इति संधितः (७) तर्जन्याः पार्श्वे श्लिष्टायाः तन्त्र्या अनामिकया बहिः घातः हननं च्छिन्नः; इति छिन्नः (८) चतुर्भिः अङ्गुलीभिः क्रमात् नखैः घातः नखकर्तरी; इति नखकर्तरी (९) इति नव दक्षिणहस्त-व्यापाराः ॥ -६९–७४- ॥

(सु०) वामहस्तव्यापारद्वयं लक्षयति—स्फुरित इति । तन्त्र्या पृष्ठे लग्ना सारणा कम्पिता इव यत्र स स्फुरितः; इति स्फुरितः (१) सारणया मुहुः पुनः पुनः, यत्र तन्त्र्याः घर्षणं सः खसितः; इति खसितः (२) इति वामहस्तव्यापारद्वयम् । त्रयोदशविधमुभयहस्तव्यापारं लक्षयति—तन्त्रीति । यत्र तन्त्री हि; लग्नाङ्गुष्ठपार्श्वा; लग्नमङ्गुष्ठपार्श्वं यस्याम्, एवंविधा

अनामया बहिस्तन्त्रीघाताज्जातो यदा ध्वनिः ॥ ७८ ॥
तर्जन्या धार्यते बिन्दुर्निःशङ्केनोदितस्तदा ।

इति बिन्दुः (३)

अङ्गुलीभिश्चतसृभिः क्रमेण करयोर्द्वयोः ॥ ७९ ॥
बहिस्तन्त्रीहतिस्तूर्णं कर्तरी कीर्तिता बुधैः ।

इति कर्तरी (४)

दक्षिणः कर्तरीं कुर्याद्वामहस्तस्तु तन्त्रिकाम् ॥ ८० ॥
यत्र सारणया हन्ति प्राहुस्तामर्धकर्तरीम् ।

इत्यर्धकर्तरी (५)

उत्सृष्टसारणां यत्र हन्ति तन्त्रीं प्रदेशिनी ॥ ८१ ॥
निष्कोटिताभिधं पाणिममुं वाद्यविदो विदुः ।

इति निष्कोटितः (६)

उत्क्षिप्तया सारणया वामस्तन्त्रीं द्रुतं यदा ॥ ८२ ॥
निहन्ति कर्तरीतुल्यो दक्षिणः स्खलितस्तदा ।

इति स्खलितः (७)

कर्तरीवत् कनिष्ठया सारणया कम्रया वा हन्यते स घोषः; इति घोषः (१) दक्षिणानामया; दक्षिणहस्तस्य या अनामिका तया तन्त्री अन्तः निहन्यते, वामस्य; वामहस्तस्य मध्यमाङ्गुल्या बहिश्च निहन्यते तं रेफमित्याहुः; इति रेफः (२) अनामया; अनामिकया अङ्गुल्या बहिः तन्त्र्या घातात् जातो ध्वनिः यदा तर्जन्याधार्य स्थिते सति, एवं क्रियते तदा बिन्दुः; इति बिन्दुः (३) द्वयोः करयोः हस्तयोः चतसृभिः अङ्गुलीभिः तन्त्र्या बहिः तूर्णं शीघ्रं, तन्त्रीहतिः, तन्त्र्या घातः कर्तरी स्यात्; इति कर्तरी (४) दक्षिणः दक्षिणहस्तः, यत्र पूर्वोक्तां कर्तरीं करोति, वामस्तु सारणया कम्रया तन्त्रिकां हन्ति, ताम् अर्धकर्तरीत्याहुः; इत्यर्धकर्तरी (५) यत्र प्रदेशिनी तर्जनी उत्सृष्टसारणां,

तन्त्रीकर्षोऽङ्गुष्ठतर्जन्यग्राभ्यां शुकवक्त्रकः ॥ ८३ ॥

इति शुकवक्त्रकः (८)

उद्वेष्टपरिवर्ताभ्यां तन्त्र्या भ्राम्यति दक्षिणे ।
स्वरस्थाने द्रुतं कम्रासारणं मूर्च्छना मता ॥ ८४ ॥

इति मूर्च्छना (९)

तलेन दक्षिणो हस्तस्तन्त्रीं हन्तीतरः पुनः ।
प्रदेशिन्या स्पृशेद्यत्र तलहस्तो भवेदसौ ॥ ८५ ॥

इति तलहस्तः (१०)

स्पर्शोऽङ्गुष्ठकनिष्ठाभ्यामर्धचन्द्रोऽभिधीयते ।

इत्यर्धचन्द्रः (११)

चतुरङ्गुलिसंघाते कुञ्चिताङ्गुष्ठके तले ॥ ८६ ॥
कनिष्ठातर्जनीपार्श्वस्पर्शस्तन्त्र्याः प्रसारकः ।

इति प्रसारकः (१२)

करस्य किंचित्साङ्गुष्ठसकलाङ्गुलिकुञ्चने ॥ ८७ ॥
कनिष्ठाङ्गुष्ठसंस्पर्शस्तन्त्र्याः स्यात्कुहरः करः ।

इति कुहरः (१३)

इति त्रयोदशोभयहस्तव्यापाराः

सारणां त्यक्त्वा तन्त्रीं हन्ति, अमुं पाणिं निष्कोटिताभिधमिति वाद्यविद आहुः ; इति निष्कोटितः (६) यत्र वामः वामहस्तः, उत्क्षिप्तया सारणया कम्रया यदा तन्त्रीं द्रुतं हन्ति, दक्षिणः, दक्षिणहस्तः कर्तरीतुल्यः कर्तरीहस्तसदृशः तदा स्खलितः ; इति स्खलितः (७) अङ्गुष्ठतर्जन्योरग्राभ्यां तन्त्र्या कर्षः आकर्षणं यत्र तं शुकवक्त्रमित्याहुः ; इति शुकवक्त्रकः (८) दक्षिणे ; दक्षिणहस्ते तन्त्र्या उद्वेष्टपरिवर्ताभ्यां वामदक्षिणगामित्वेन भ्राम्यति सति, स्वरस्थाने द्रुतं कम्रायाः सारणं मूर्च्छना भवति ; इति मूर्च्छन

एतद्धस्तसमायोगाद्वादनं वाद्यमुच्यते ॥ ८८ ॥
छन्दो धारा कैकुटी च कङ्कालं वस्तु च द्रुतम् ।
गजलीलं दण्डकं चोपरिवाद्यमतः परम् ॥ ८९ ॥
वाद्यं पक्षिरुतं चेति दशधा परिकीर्तितम् ।
खसितस्फुरितौ यत्र क्रियेते बहुधा करौ ॥ ९० ॥
तारं च स्पृश्यते स स्याच्छन्दो यतिमनोहरः ।

इति च्छन्दः (१)

स्खलितो मूर्च्छना चाथ कर्तरीरेफसंयुतौ ॥ ९१ ॥
उल्लेखरेफौ यत्रास्तां धारां ब्रूते हरप्रियः ।

इति धारा (२)

(९) दक्षिणहस्ततलेन तन्त्रीं हन्ति, इतरः वामहस्तः पुनः प्रदेशिन्या तर्जन्या तन्त्रीं यत्र स्पृशेत् असौ तलहस्तो भवेत्; इति तलहस्तः (१०) अङ्गुष्ठ-कनिष्ठाभ्यां तन्त्र्या स्पर्शः अर्धचन्द्रः इत्यर्धचन्द्रः (११) अर्धचन्द्रतले कुञ्चिताङ्गुष्ठके सति, चतसृष्वङ्गुलीषु कनिष्ठातर्जन्योः पार्श्वाभ्यां तन्त्र्या स्पर्शः प्रसारः; इति प्रसारकः (१२) करस्य; हस्तस्य अङ्गुष्ठसहिता-स्वङ्गुलीषु, किंचित् अल्पमाकुञ्चितासु तन्त्र्याम् कनिष्ठाया अङ्गुष्ठेन च स्पर्शः कुहरः; इति कुहरः (१३) इति त्रयोदशोभयहस्तव्यापाराः॥-७९-८७-॥

(सु०) पूर्वोक्तं वाद्यं लक्षणपूर्वकं विभजते—एतदिति । एतेषां पूर्वोक्तानां हस्तव्यापाराणां घातादीनां समायोगात् मेलनात् यद्वादनं तद्वाद्यमित्युच्यते । तस्य छन्द आदयः पक्षिरुतान्ता दश भेदाः । तान् क्रमेण लक्षयति—खसितेति । यत्र खसितस्फुरितौ पूर्वोक्तौ करौ बहुधा मुहुर्मुहुः क्रियेते, तारस्थानं च स्पृश्यते स छन्दः; इति च्छन्दः (१) उल्लेखरेफौ, पूर्वोक्तौ उल्लेखादि-करसंयुक्तौ, कर्तरीरेफसंयुतौ; कर्तर्यादिरेफसंयुतौ च, अथ मूर्च्छना स्खलितश्च यत्र आस्तां तां धारामिति हरप्रियः ब्रूते; इति धारा (२) शुकवक्त्रादयः

शुकवक्त्रः स्फुरितको घोषः स्यादर्धकर्तरी ॥ ९२ ॥
क्रमादेते करा यत्र तामाहुः कैकुटीं बुधाः ।

इति कैकुटी (३)

स्फुरितैर्मूर्च्छनासंज्ञैः कर्तरीत्रितयेन च ॥ ९३ ॥
युक्तं करैः क्रमादेभिः कङ्कालं कथितं बुधैः ।

इति कङ्कालम् (४)

स्पष्टतारमुपेतं यत्कर्तर्या खसितेन च ॥ ९४ ॥
कुहरेणाथ तद्वाद्यं वस्तु वस्तुविदो विदुः ।

इति वस्तु (५)

कर्तरीखसितौ यत्र क्रमेण कुहरः करः ॥ ९५ ॥
रेफभ्रमरघोषाश्च तद् द्रुतं ब्रुवते बुधाः ।

इति द्रुतम् (६)

बहुधा मूर्च्छना हस्ताः स्फुरिताः कर्तरी ततः ॥ ९६ ॥
खसितो यत्र तत्प्राहुर्गजलीलं कलाविदः ।

इति गजलीलम् (७)

स्खलितो मूर्च्छनाख्यश्च कर्तरीरेफसंयुतः ॥ ९७ ॥
खसितो यत्र वाद्यज्ञा दण्डकं तद्बभाषिरे ।

इति दण्डकम् (८)

कराः क्रमात् यत्र क्रियन्ते सा कैकुटी; इति कैकुटी (३) स्फुरितमूर्च्छना नखकर्तरीकर्तर्यर्धकर्तरीभिर्युक्तं कङ्कालः; इति कङ्कालः (४) यत्र वाद्ये स्पष्टं तारस्थानोपेतं, कर्तरीखसितकुहराश्च क्रियन्ते तद् वाद्यं वस्त्विति वाद्यवेदिन आहुः; इति वस्तु (५) यत्र क्रमेण कर्तर्यादयः कराः क्रियन्ते तद् द्रुतम्; इति द्रुतम् (६) यत्र मूर्च्छना हस्ताः बहुधाः बहवः, ततः अनन्तरम्; स्फुरित-कर्तरीखसिताः, तत् कलावेदिनः गजलीलमिति प्राहुः; इति गजलीलम्

ऊर्ध्वाधोगौ क्रमाद्धस्तौ रेफकर्तरिकाह्वयौ ॥ ९८ ॥
निष्कोटिते तले हस्ते द्वावप्युपरिवाद्यके ।

इत्युपरिवाद्यकम् (९)

समस्तहस्तवाद्यं तु वाद्यं पक्षिरुतं मतम् ॥ ९९ ॥

इति पक्षिरुतम् (१०)

इति दशविधं वाद्यम्

सकलं निष्कलं चेति द्विविधं वाद्यमुच्यते ।
तन्त्रीसंलग्नजीवातः स्थूलो यत्र ध्वनिर्भवेत् ॥ १०० ॥
तदुक्तं सकलं वाद्यमपरे त्वन्यथा जगुः ।
आधोरिकां पत्रिकां चेत्तर्जनीस्पर्शवर्जितम् ॥ १०१ ॥
सार्यते कम्रिकावाद्यं तदाहुः सकलाभिधम् ।
अपनीय कलां कम्रामधो नैषाददेशतः ॥ १०२ ॥

(७) स्खलितादयः कराः क्रमेण यत्र क्रियन्ते तद् दण्डकम्; इति दण्डकम्
(८) हस्तौ, द्वौ हस्तौ क्रमात् ऊर्ध्वाधोगौ; दक्षिणहस्त ऊर्ध्वप्रचारवान्, वामहस्त अधः प्रचारवान्; ततः अनन्तरं दक्षिणो रेफः, वामः कर्तरी; ततो दक्षिणो निष्कोटितः, वामस्तलहस्तः, तदुपरिवाद्यकम्; इत्युपरिवाद्यकम्
(९) समस्तानां घातादीनां हस्तानां वाद्यं पक्षिरुतम्; इति पक्षिरुतम्
(१०) इति दशविधं वाद्यम् ॥ -८८–९९ ॥

(सु०) अन्यथा वाद्यभेदानाह—सकलमिति । सकलनिष्कलभेदेन वाद्यं द्विविधम् । तत्र सकलं लक्षयति—तन्त्रीति । तन्त्र्या संलग्नया जीवा वीणावादकप्रसिद्धा, तद्धेतुकः स्थूलो नादो यत्र भवति तत् सकलं वाद्यम् । मतान्तरेण अन्यथा लक्षयति—अपर इति । आधोरिका पत्रिका च यत्र तर्जन्या न स्पृश्यते, कम्रिका च सार्यते तद् वाद्यं सकलमिति । निष्कलवाद्यं लक्षयति—अपनीयेति । अधः नैषाददेशतः निषादप्रदेशात्, कलां कलासंज्ञिकाम्,

न नयेत्तर्जनीस्पर्शं तन्त्र्याश्चेन्निष्कलं तदा ।
सूक्ष्मश्चात्र भवेन्नादः सारणामत्र केचन ॥ १०३ ॥
आमध्यमस्वरस्थानं सारणायां प्रपेदिरे ।
अवोचदिति निःशङ्कः शिष्याभ्यासाय वादनम् ॥ १०४ ॥
श्रुत्यादिक्रमतो गीतनिष्पत्तौ त्विदमादिशेत् ।
वक्ष्यामः स्वररन्ध्राणां यद्वंशेऽष्टादशाङ्गुले ॥ १०५ ॥
प्रथमे सप्तके स्थानं वीणायामपि तन्मतम् ।
स्वराणां किंतु वैणानामधराधरतारता ॥ १०६ ॥
मध्यमे सप्तके स्थानं ततः स्याद् द्विगुणान्तरम् ।
तृतीये सप्तके स्थानं ततोऽपि द्विगुणान्तरम् ॥ १०७ ॥

कम्राम् अपनीय अपसार्येत तन्त्र्यां तर्जनीस्पर्शं न नयेत् न प्रापयेत् यदि, तदा निष्कलं वाद्यमिति । अत्र; निष्कले वाद्ये सूक्ष्मो नादो भवेदिति, केचन आचार्याः सारणायां कम्रायां, आमध्यमस्वरस्थानं; मध्यमस्वरस्थानपर्यन्तं सारणक्रियां प्रपेदिरे अङ्गयकार्षुः ॥ १००–१०३- ॥

(सु०) वाद्यनिरूपणप्रयोजनमाह—अवोचदिति । इदं वादनं शार्ङ्गदेवः शिष्याभ्यासार्थमवोचत् । श्रुत्यादिक्रमेण गीतनिष्पत्तौ इदं वक्ष्यमाणमकथयत् । वक्ष्यमाणमेवाह—वक्ष्याम इति । द्वादशाङ्गुले वंशे प्रथमसप्तके यद् रन्ध्राणां स्थानं वक्ष्यामः तदेव स्वराणां स्थानं वीणायामपि ज्ञातव्यम् । किं त्वयं विशेषः—वीणासंबन्धिनां स्वराणामधराधराणां तारत्वम्; वेणुवाद्यानामधराधराणां मन्द्रत्वमिति । मध्यम इति । वीणायां मध्यमे सप्तके स्वराणां स्थानम्; ततः अष्टादशाङ्गुलवंशात् द्विगुणान्तरं कार्यम् । तृतीये सप्तके मध्यमसप्तकात् द्विगुणान्तरं स्वराणां स्थानम् । अङ्क्यते चिह्न्यते अमूनि स्वरस्थानानि स्वराणां स्थानानि सुखबुद्ध्यै सुखबोधार्थमुपयुज्यन्ते । स्वरदेशानां यथास्वं श्रुति-संख्याया विभागात् श्रुतिस्थानस्य धीर्ज्ञानम् । चतुःश्रुतीनां स्वराणां स्थानं

अङ्केत च स्वरस्थानान्यमूनि सुखबुद्धये ।
यथास्वं स्वरभेदानां विभागाच्छ्रुतिदेशधीः॥ १०८ ॥
स्याद्ग्रामम्मूर्च्छनादीनामुद्बोधः सुकरस्ततः ।
एषोऽपि जनकः प्रोक्ता घोषकश्चैकतन्त्रिका ॥ १०९ ॥
तन्त्रीद्वयेन नकुलः स्यादन्वर्था त्रितन्त्रिका ।
तन्त्रीभिः सप्तभिश्चित्रा विपञ्ची नवभिर्मता ॥ ११० ॥
कोणाङ्गुलीवादनीया चित्रा तद्वद्विपञ्चिका ।
क्रमादन्येऽङ्गुलीकोणव्यवस्थामूचिरे तयोः ॥ १११ ॥
चित्रायामङ्गुलीमात्रं विपञ्च्यामुभयं परे ।
तन्त्रीणामेकविंशत्या कीर्तिता मत्तकोकिला ॥ ११२ ॥
मुख्येयं सर्ववीणानां त्रिस्थानैः सप्तभिः स्वरैः ।
संपन्नत्वात्तदन्यास्तु तस्याः प्रत्यङ्गमीरिताः ।
करणैश्चित्रयन्त्यस्तास्तस्याः स्युरुपरञ्जिकाः ॥ ११३ ॥

चतुर्धा विभजेत् । त्रिश्रुतीनां त्रिधा, द्विश्रुतीनां द्विधेति । एवं श्रुतिपरिज्ञाने ग्राममूर्च्छनातानकूटतानालंकारादीनामुत्कृष्टो बोधः सुगमः । एषोऽपि वीणा-जनको घोषः एकतन्त्रीति चोच्यते ॥ -१०४–१०९ ॥

इत्येकतन्त्रीवीणालक्षणम्

(क०) नकुलादीनां लक्षणान्यपि स्पष्टार्थानि । तत्र त्रितन्त्रिकैव लोके जन्त्रशब्देनोच्यते । मत्तकोकिलैव लोके स्वरमण्डलमित्युच्यते । **मुख्येयमित्यादि** । इयं ; मत्तकोकिला सर्ववीणानां मुख्या प्रकृतिरित्यर्थः । तत्र हेतुः—**त्रिस्थानैः सप्तभिः स्वरैः संपन्नत्वादिति** । **त्रिस्थानैः**, मन्द्रमध्यताराख्यस्थानत्रयोद्भूतैरित्यर्थः । **तदन्यास्त्वित्ति** । **मत्तकोकिलातो**

**रूपं कृतप्रतिकृतं प्रतिभेदस्ततः परम् ।**
**स्याद्रूपशेषमोघश्च प्रतिशुष्केति षड्विधम् ॥ ११४ ॥**
**करणं तस्य वक्ष्यामि लक्ष्मोदाहरणैः समम् ॥ ११५ ॥**
**मुख्यवीणाप्रयुक्तस्य गुर्वादेर्भञ्जनेन यत् ।**
**युगपद्वादनं रूपं विपञ्च्यादिषु तद्यथा ॥ ११६ ॥**

व्यतिरिक्ता वीणास्तु, **तस्याः**; मत्तकोकिलायाः । **प्रत्यङ्गमीरिता इति** । विकृतय इत्यर्थः । **करणैश्चित्रयन्त्य इति** । करणानि अनन्तरं वक्ष्यमाणानि रूपादीनि । **तस्याः स्युरुपञ्जिका इति**; तदनुवादित्वादित्यर्थः ॥ -१०९–११३ ॥

(सु०) नकुलादिलक्षणमाह—**तन्त्रीति** । द्वाभ्यां तन्त्रीभ्यां युक्तो नकुलः । त्रितन्त्रिका; अन्वर्था, त्रिभिस्तन्त्रीभिर्युक्ता त्रितन्त्रिका; सप्तभिः तन्त्रीभिः **चित्रा**; नवभिः तन्त्रीभिः **विपञ्ची** इति । एतासां मध्ये चित्रा विपञ्ची च कोणेन वीणावादनेन वैणवादिना अङ्गुलीभिश्च वादनीया । मतान्तरमाह—**क्रमादिति** । **अन्ये**; केचित्, **तयोः**; चित्राविपञ्च्योः, **अङ्गुलिकोणव्यवस्थाम्**; अङ्गुलिकोणे व्यवस्थाम् ऊचिरे, चित्रा अङ्गुलीभिः, विपञ्ची कोणेनेति । **परे**; अन्ये तु, **चित्रायाम्** अङ्गुलीमात्रम्; **विपञ्च्याम्**; अङ्गुलीभिः **कोणेन च वादनीयेत्याहुः** । **एकविंशत्या** एकविंशतिसंख्याभिः तन्त्रीभिः **मत्तकोकिला** । **इयं**; मत्तकोकिला, **सर्ववीणानां**; सर्वासां वीणानां मध्ये मुख्या, त्रिस्थानस्थैः सप्तभिः स्वरयुक्तत्वात् । **अन्याः**; नकुलादयस्तु मत्तकोकिलाया **अङ्गम्** । ताश्च वक्ष्यमाणलक्षणैः **करणैः**, तां मत्तकोकिलां चित्रयन्त्यः तस्या उपरञ्जिकाः उपरञ्जनहेतवः ॥ -१०९–११३ ॥

(क०) रूपादीनां करणानां लक्षणान्याह—**रूपमिति** । **मुख्यवीणाप्रयुक्तस्येति** । तान्यपि स्पष्टार्थानि ॥ ११४–१२३- ॥

वाद्यते गुरुमुख्यायां यदा द्वे लघुनी तदा ।
विपञ्च्यादौ यदा त्वस्या लस्तदान्यासु दद्वयम् ॥ ११७ ॥

इति रूपम् (१)

एतत्कृतप्रतिकृतं पश्चात्प्रत्यङ्गवादने ॥ ११८ ॥

इति कृतप्रतिकृतम् (२)

रूपक्रियाविपर्यासात्प्रतिभेदो भवेद्यथा ।
वाद्यते लद्वयं तज्ज्ञैर्मत्तकोकिलया यदा ॥ ११९ ॥
गुरुस्तदा विपञ्च्यादिवीणादिरिति तद्विधिः ।

इति प्रतिभेदः (३)

यदा विदारीविच्छेदं कुरुते मुख्यवैणिकः ॥ १२० ॥
तदान्यासां वादनं यद्रूपशेषं तदुच्यते ।

इति रूपशेषम् (४)

यदा विलम्बितलयं प्रयुङ्क्ते मुख्यवैणिकः ॥ १२१ ॥

(सु०) करणैश्चित्रयन्त्य इत्युक्तम्, तत्र कानि करणानीत्यपेक्षायां विभागपूर्वकं करणानि लक्षयति—रूपमिति । रूपादिभेदेन करणं षड्विधम् । तेषां क्रमेण लक्षणमाह—मुख्येति । मुख्यवीणाप्रयुक्तस्य ; मुख्यायां वीणायां प्रयुक्तो यो गुर्वादिः गुरुः प्रयुक्तः लघुर्वा तस्य भञ्जनेन शकलीकरणेन विपञ्च्यादिषु वीणासु युगपद्वादनं रूपम् । तदेव उदाहरणेन दर्शयति—तद्यथेति । तदेव रूपं पश्चात् प्रत्यङ्गवादने सर्वस्मिन्नपि गुर्वादौ वादिते सति स कृतप्रतिकृतम् ; इति कृतप्रतिकृतम् (२) पूर्वोक्तरूपक्रियया वैपरीत्ये प्रतिभेदः ; तमेव विवृत्य दर्शयति—यथेति । मुख्यो वैणिकः मत्तकोकिलया यदा लद्वयं लयद्वयं वाद्यते, तदा विपञ्च्यादिवीणाभिः तद्विधिः गुरुः क्रियते स प्रतिभेदः ; इति प्रतिभेदः (३) यदा मुख्यवैणिकः मत्तकोकिलाया वादयिता विदारीणां यदा विच्छेदं करोति, तदा अन्यासां विपञ्च्यादीनां वादनं रूपशेषः ; इति रूपशेषः

तथैवातिद्रुतलयं करचातुर्ययोगतः ।
वैपश्चिकाद्याः कुर्युश्चेदोघमाचक्षते तदा ॥ १२२ ॥

इत्योघः (५)

अंशसंवाद्यन्यतरस्वरव्यञ्जिकया यदा ।
तन्त्र्यैकयैव करणं स्यान्मुख्यामुख्यवीणयोः ॥ १२३ ॥
प्रतिशुष्कां तदाचष्ट शार्ङ्गदेवो विदांवरः ।

इति प्रतिशुष्का (६)

इति षट् करणानि

पुष्णन्ति वीणावाद्यं ये रक्तिं दधति चातुलाम् ॥ १२४ ॥
कुर्वन्त्यदुष्टपुष्टिं च तान्धातूनधुना ब्रुवे ।
ये प्रहारविशेषोत्थाः स्वरास्ते धातवो मताः ॥ १२५ ॥
विस्तारकरणाविद्धव्यञ्जनाश्चेति धातवः ।
चतुर्धा तेषु विस्तारश्चतुर्धा बोधितो बुधैः ॥ १२६ ॥
विस्तारजश्च संघातजोऽथ स्यात्समवायजः ।

(४) यदा मुख्यवैणिकः विलम्बितलयप्रयोगं दर्शयति, तथैव अमुख्या विपञ्च्यादिवादकाः, करचातुर्ययोगतः; हस्तवैदग्ध्यात् द्रुतलयं कुर्युः तदा ओघ; इत्योघः (५) मुख्यामुख्यवीणयोः; मुख्यवीणायां मत्तकोकिलायां, अमुख्यवीणायां विपञ्च्यादौ च अंशं संवादिनं च स्वरं विहाय, अन्यतरस्वर-व्यञ्जिकया एकयैव तन्त्र्या करणं स्यात्, तदा प्रतिशुष्का; इति प्रतिशुष्का (६) ॥ -११४-१२३- ॥

इति षट् करणानि

(क०) धातून् लक्षयितुमादौ तत्प्रयोजनमाह—पुष्णन्तीत्यादि । धातुस्वरूपमाह—ये प्रहारेत्यादि ॥ -१२४-१३४- ॥

अनुबन्धश्चेति चतुर्भेदः संघातजो भवेत् ॥ १२७ ॥
द्विरुत्तरो द्विरधरोऽप्यधराद्युत्तरान्तकः ।
उत्तराद्यधरान्तश्चेत्यष्टधा समवायजः ॥ १२८ ॥
त्रिरुत्तरस्त्रिरधरोऽथ द्विरुत्तरपूर्वकः ।
अधरान्तो द्विरधरोत्तरान्तश्चोत्तरादिकात् ॥ १२९ ॥
परो द्विरधरोऽथ स्यादधरादिर्द्विरुत्तरः ।
मध्योत्तरद्विरधरोऽधरमध्यद्विरुत्तरः ॥ १३० ॥
एवं चतुर्दशविधो विस्तारः शार्ङ्गिणोदितः ।
करणस्य तु भेदाः स्यू रिभितोच्चयसंज्ञकौ ॥ १३१ ॥
तथा नीरटितो ह्रादोऽनुबन्ध इति पञ्च ते ।
क्षेपः प्लुतोऽतिपातश्चातिकीर्णोऽप्यनुबन्धकः ॥ १३२ ॥
इत्याविद्धे पञ्च भेदा दश तु व्यञ्जने मताः ।
पुष्पं कलं तलं बिन्दू रेफो निस्वनितं ततः ॥ १३३ ॥
निष्कोटितमथोन्मृष्टमवमृष्टनिबन्धनौ ।
इति सर्वे चतुस्त्रिंशन्मिलिता धातवो मताः ॥ १३४ ॥

(सु०) धातून् प्रयोजनपूर्वकं वक्तुं प्रतिजानीते—पुष्णन्तीति। ये वीणायाः पूर्वोक्तं वाद्यं पुष्टं कुर्वन्ति, रक्तिं रञ्जकत्वं च दधति कुर्वन्ति; अदुष्टां दोषरहितां पुष्टिं नादं च ये धातवः कुर्वन्ति, अधुना तान् ब्रुवे कथयामि। धातून् लक्षयित्वा विभजते—य इति। ये प्रहारविशेषेण उत्थाः उदिताः स्वराः, ते धातवः चतुर्धाः; विस्तारः, करणः; आविद्धः, व्यञ्जनश्चेति। विस्तारोऽपि चतुर्धा, विस्तारजः, संघातजः, समवायजः, अनुबन्धजश्चेति। संघातजोऽपि द्विरुत्तरादिभेदेन चतुर्विधः; समवायजस्तु त्रिरुत्तरादिभेदेनाष्टविधः। एवं चतुर्दशविधो विस्तारधातुः। करणधातौ रिभितादयः पञ्च भेदाः। आविद्धौ क्षेपादयः

विस्तीर्णनादभेदत्वाद्विस्तारो धातुरुच्यते ।
प्रहारलाघवात्कृत्वा स्वरानेकीकृतानिव ॥ १३५ ॥
वैचित्र्यात्क्वापि विश्रान्तः स्वरो विस्तारजो भवेत् ।
एकविस्तारसंज्ञं तमपरे सूरयो जगुः ॥ १३६ ॥
अलंकारत्वमप्यस्य निःशङ्को निरदीधरत् ।

इति विस्तारजः

पञ्च भेदाः। व्यञ्जनस्य पुनः पुष्पादयो दश भेदाः। एवं सर्वे मिलित्वा चतुस्त्रिंशद्भेदा भवन्ति ॥- १२४–१३४ ॥

(क०) विस्तारधातुलक्षणमाह—**विस्तीर्णनादभेदत्वादिति** । विस्तीर्णश्चासौ नादभेदश्चेति कर्मधारयः। नादभेदस्य विस्तीर्णत्वं नाम अयममुकः स्वर इति विविक्तत्वेन ज्ञानविषयत्वं द्रष्टव्यम्। **प्रहारलाघवादिति**। वादने हस्तलाधवादित्यर्थः। **एकविस्तारसंज्ञमिति**। एकस्यैव स्वरस्य विविक्तत्वादिति भावः। **अलंकारत्वमपीति**। अस्य विस्तारजस्य न केवलं स्वररूपत्वम्, किंतु विशिष्टवर्णसंदर्भस्वरूपत्वमपीत्यर्थः। एवमेकप्रहारभवो विस्तारजः। द्विप्रहारभवः संघातजः। त्रिप्रकारभवः समवायजः। यथायोगमेतद्भेदमिश्रणोद्भवोऽनुबन्धो नामान्वर्थो धातुरिति द्रष्टव्यम् ॥ १३५, १३६- ॥

(सु०) तत्र विस्तारधातुभेदं लक्षयति—**विस्तीर्णेति**। विस्तीर्णो नादभेदो यस्य स तथाविधः, तस्य भावस्तत्त्वम्, तस्मात् विस्तारो धातुः प्रहाराणां लाघवात् शीघ्रकरणात् एकीभूतानेव स्वरान् कृत्वा क्वापि स्वरवैचित्र्यात् विश्रान्तिः विस्तारजो धातुः। अन्ये त्वेतमेकविस्तारमित्याहुः। शार्ङ्गदेवस्तु एतस्य अलंकारसंज्ञत्वमपि निरदीधरत् निर्धारयति स्म॥१३५,१३६-॥

अत्रोत्तराधरौ ज्ञेयौ मन्द्रतारौ स्वरौ क्रमात् ॥ १३७ ॥
उत्तराधरघातौ हि तयोर्निष्पादकाविह ।
संघातजे ये चत्वारस्तथाष्टौ समवायजे ॥ १३८ ॥
भेदास्तेऽन्वर्थनामानस्तल्लक्ष्मोक्तिरनर्थिका ।
तथापि बालबोधाय तान्वयं विवृणीमहे ॥ १३९ ॥
मन्द्रस्वरद्विरुच्चाराद्धातुरत्र द्विरुत्तरः ।

इति द्विरुत्तरः (१)

तारस्थाने द्विराघाताद्धातुर्द्विरधरो भवेत् ॥ १४० ॥

इति द्विरधरः (२)

यस्त्वादितारो मन्द्रान्तः सोऽधराद्युत्तरान्तकः ।

इत्यधराद्युत्तरान्तकः (३)

आदौ मन्द्रस्ततस्तार उत्तराद्यधरान्तके ॥ १४१ ॥

इत्युत्तराद्यधारन्तकः (४)

एते संघातजे भेदा द्विःप्रहारभवे मताः ।

इति संघातजस्य भेदचतुष्टयम्

(क०) **अत्रोत्तराधराविति**। अत्र, वीणायाम्, उत्तरस्वरो मन्द्रः, अधरस्वरस्तार इत्यनेन वैपरीत्यं दर्शितं भवति। शरीरे हि अधरो मन्द्रः, उत्तरस्तार इति द्रष्टव्यम्। तत्रोपपत्तिमाह—**उत्तराधरघातौ हीति**। **हि**; यस्मात्कारणात् उत्तरतन्त्रीघातो मन्द्रस्वरस्य निष्पादकः, अधरतन्त्रीघातस्तारस्वरस्येत्यर्थः ॥- १३७–१४१- ॥

(सु०) **अत्रेति**। अत्र उत्तरो मन्द्रः, अधरस्तारः; अत्र उत्तरधातुर्मन्द्रनिष्पादकः, अधरधातुस्तारनिष्पादक इति। संघातज इति। संघातजे ये

मन्द्रस्वरद्विराघाताद्धातुमाहुस्त्रिरुत्तरम् ॥ १४२ ॥

इति त्रिरुत्तरः (१)

त्रिस्तारस्वरघातेन धातुस्त्रिरधरो भवेत् ।

इति त्रिरधरः (२)

द्विरुत्तराधरान्तो द्विर्मन्द्रस्तारान्तगो भवेत् ॥ १४३ ॥

इति द्विरुत्तराधरान्तः (३)

तारस्थानं द्विःप्रहृत्य विदध्यान्मन्द्रमन्ततः ।

यदा तदा द्विरधरोत्तरान्तो धातुरुच्यते ॥ १४४ ॥

इति द्विरधरोत्तरान्तः (४)

उत्तरादिद्विरधरे मन्द्रतारो द्विरिष्यते ।

इत्युत्तरादिद्विरधरः (५)

सकृत्तारोऽथ मन्द्रो द्विरधरादिद्विरुत्तरे ॥ १४५ ॥

इत्यधरादिद्विरुत्तरः (६)

चत्वारो भेदा उक्ताः, समवाये चाष्टौ, तेषामन्वर्थनामत्वे प्रसिद्धत्वेऽपि बालबोधार्थं लक्षणं कथयाम इति । मन्द्रस्वराणां द्विरुच्चारणात् **द्विरुत्तरो धातुः** इति द्विरुत्तरः (१); तारस्थाने द्विराघातात् द्विरुच्चारणात् **द्विरधरः** इति द्विरधरः (२); आदौ तारमुच्चार्य अन्ते मन्द्रोच्चारणम् **अधराद्युत्तरान्तकः** इत्यधराद्युत्तरान्तकः (३); आदौ मन्द्रमुच्चार्य पश्चात्तारोच्चारणम् **उत्तराद्यधरान्तकः** इत्युत्तराद्यधरान्तकः (४); एते द्विःप्रहारभवे संघातजे चत्वारो भेदाः ॥ -१३७–१४१- ॥

(सु०) मन्द्रेति । मन्द्रस्वराणां त्रिवारमुच्चारणात् **त्रिरुत्तरो** धातुः, इति त्रिरुत्तरः (१); त्रिवारं तारस्वराभिघातात् **त्रिरधरः**, इति त्रिरधरः (२); द्विमन्द्रस्वराघाते सकृत्तारे घाते **द्विरुत्तराधरान्तः**, इति द्विरुत्तराधरान्तः (३); तारस्थानं द्विः प्रहृत्य मन्द्रस्य सकृद्घाते **द्विरधरोत्तरान्तः**, इति द्विरधरोत्तरान्तः (४); मन्द्रं सकृदुच्चार्य तारश्च द्विरुच्चारणे **उत्तरादिद्विरधरः**, इत्युत्तरादिद्विरधरः

मध्योत्तरद्विरधरे तारौ मध्यस्थमन्द्रकौ ।

इति मध्योत्तरद्विरधरः (७)

मन्द्राद्यन्तो भवेत्तारोऽधरमध्यद्विरुत्तरे ॥ १४६ ॥

इत्यधरमध्यद्विरुत्तरः (८)

त्रिप्रहारभवे भेदाः स्युरिमे समवायजे ।

इत्यष्टौ समवायजभेदाः

सजातीयविजातीयभेदसंमिश्रणोद्भवः ॥ १४७ ॥
अनुबन्धाभिधो धातुः शार्ङ्गदेवेन कीर्तितः ।

इत्यनुबन्धः (९)

इति चतुर्दश विस्तारजधातुभेदाः

लघुगुर्वात्मकैर्घातैः करणाविद्धयोः क्रिया ॥ १४८ ॥
करणोऽल्पगुरुस्तत्र तद्भेदाँल्लक्षयेऽधुना ।

(५); सकृत्तारमाहत्य द्विर्मन्द्रघाते अधरादिद्विरुत्तरः, इत्यधरादिद्विरुत्तरः (६); मध्यस्थो मन्द्रो ययोः, एवंविधौ तारौ उच्चारयेत् तारमध्यमन्द्रतारा उच्चार्यन्ते चेत्; तदा मध्योत्तरद्विरधरः, इति मध्योत्तराद्विरधरः (७); मन्द्रद्वयमध्यगत-तारोच्चारणे अधरमध्यद्विरुत्तरः, इत्यधरमध्यद्विरुत्तरः (८); त्रिप्रहारोद्भवे समवायज एतेऽष्टौ भेदाः। अनुबन्धस्तु सुगमः ॥ -१४२–१४७- ॥

इति चतुर्दश विस्तारजधातुभेदाः

(सु०) लघ्विति। लघुगुरुस्वरूपैः घातैः करणाविद्धयोः धात्वोः क्रिया; तयोर्मध्ये अल्पगुरुः करणः। तस्य पञ्च भेदान् क्रमेण लक्षयति—तद्भेदानिति। आदौ द्वौ लघू अन्ते गुरुः तदा रिभितः, इति रिभितः (१); आदौ चत्वारो

रिभितो द्वौ लघू गान्तौ

इति रिभितः (१)

चतुर्लोऽन्तगुरुच्चयः ॥ १४९ ॥

इत्युच्चयः (२)

षड्लोऽन्तगुर्नीरटितः

इति नीरटितः (३)

ह्रादोऽष्टलघुरन्तगः ।

इति ह्रादः (४)

करणस्यानुबन्धस्तु स्याद्विस्तारानुबन्धवत् ॥ १५० ॥

इत्यनुबन्धः (५)

इति पञ्च करणधातुभेदाः

भूरिगुर्गुरुहीनो वाविद्धोऽस्य विद्वतेर्भिदाः ।
क्षेपो लघुगुरुभ्यां स्यात्

इति क्षेपः (१)

(क०) करणस्यानुबन्धस्तु स्याद्विस्तारानुबन्धवदिति ; यथायोगं रिभितादिभेदमिश्रणोद्भव इत्यतिदेशार्थः ॥ -१४८–१५० ॥

इति पञ्च करणधातुभेदाः

लघवः, अन्ते गुरुश्चेत्, उच्चयः, इत्युच्चयः (२) । आदौ षड् लघवः, अन्ते गुरुश्चेत्, नीरटितः, इति नीरटितः (३) । आदावष्टौ लघवः, अन्ते गुरुश्चेत्, ह्रादः, इति ह्रादः (४) विस्तारानुबन्धवत् करणस्यानुबन्धः (५) ; सजातीय-विजातीयभेदसंमिश्रणाज्ज्ञातव्यः ॥- १४८–१५० ॥

इति पञ्च करणधातुभेदाः

(सु०) आविद्धधातुभेदान् लक्षयति—भूरिगुरिति । बहुगुरुयुक्तो गुरु-

प्लुतो लघुगुरुर्भवेत् ॥ १५१ ॥

इति प्लुतः (२)

अतिपातो लगाभ्यां द्विः

इत्यतिपातः (३)

चतुर्वारं लगौ ततः ।

लघुर्यत्रातिकीर्णोऽसौ

इत्यतिकीर्णः (४)

अनुबन्धस्तु पूर्ववत् ॥ १५२ ॥

इत्यनुबन्धः (५)

द्वाभ्यां त्रिभिश्चतुर्भिश्च नवभिर्लघुभिः क्रमात् ।
क्षेपादयोऽत्र चत्वारो भवन्तीत्यपरेऽब्रुवन् ॥ १५३ ॥

इति पञ्चाविद्धधातुभेदाः

(क०) अनुबन्धस्तु पूर्ववदिति । आविद्धधात्वनुबन्धस्तु यथायोगं क्षेपादिभेदमिश्रणोद्भव इत्यर्थः ॥ १५१–१५३ ॥

इति पञ्चाविद्धधातुभेदाः

हीनो वा धातुराविद्धः । तस्य भेदान् लक्षयति—क्षेप इति । एको लघुः गुरुद्वयं च क्षेपः; इति क्षेपः (१); लघुगुरुलघुभिः प्लुतः; इति प्लुतः (२); द्विरुच्चारिताभ्यां लघुगुरुभ्यामतिपातः; इत्यतिपातः (३); चतुर्वारं लघुगुरू उच्चार्यान्ते लघुरतिकीर्णः; इत्यतिकीर्णः (४); सजातीयविजातीयसंमिश्रणादनुबन्धः; इत्यनुबन्धः पूर्ववत् । (५); आद्यानां चतुर्णां मतान्तरेणान्यथालक्षणमाह—द्वाभ्यामिति । द्वाभ्यां लघुभ्यां क्षेपः; त्रिभिर्लघुभिः प्लुतः; त्रिभिश्चतुर्भिर्लघुभिरतिपातः । नवभिर्लघुभिरतिकीर्ण इति केचिदाहुः ॥ १५१–१५३ ॥

इति पञ्चाविद्धधातुभेदाः

अङ्गुलीभेदमात्रेण व्यञ्जनस्तद्भिदां ब्रुवे ।
अङ्गुष्ठाभ्यां कनीयस्या तन्त्रीरेका निहन्यते ॥ १५४ ॥
युगपद्यत्र तत्पुष्पमभिलेषुः पुरातनाः ।

इति पुष्पम् (१)

एकस्वरं यदा नानास्थानकं तन्त्रिकाद्वयम् ॥ १५५ ॥
अङ्गुष्ठाभ्यामेककाले निहन्ति स्यात्कलं तदा ।

इति कलम् (२)

दक्षिणाङ्गुष्ठतो हन्ति वामाङ्गुष्ठनिपीडिताम् ॥ १५६ ॥
तन्त्रीं यत्र तदाचष्ट तलं सोढलनन्दनः ।

इति तलम् (३)

बिन्दुरेकत्र तन्त्र्यां स्यात्प्रहारो गुरुनादकृत् ॥ १५७ ॥

इति बिन्दुः (४)

रेफस्त्वेकस्वरो घातः क्रमात्सर्वाङ्गुलीकृतः ।

इति रेफः (५)

तलं कृत्वावरोहेण घातोऽनुस्वनितं मतम् ॥ १५८ ॥

इत्यनुस्वनितम् (६)

वामाङ्गुष्ठेन तूर्ध्वाधोघातो निष्कोटितं मतम् ।

इति निष्कोटितम् (७)

घातोऽतिमधुरध्वानस्तर्जन्योन्मृष्टमुच्यते ॥ १५९ ॥

इत्युन्मृष्टम् (८)

कनिष्ठया दक्षिणयाङ्गुष्ठाभ्यामप्यधः सरन् ।
हन्ति त्रिस्थानकं तन्त्रीत्रयमेकस्वरं पृथक् ॥ १६० ॥

(क०) व्यञ्जनधातूनाह—अङ्गुलीभेदमात्रेणेति । व्यञ्जनधातौ

यत्रावमृष्टमाचष्ट तद्यज्ञपुरमण्डनः ।

इत्यवमृष्टम् (९)

उक्तानुबन्धवद्बोध्यमनुबन्धस्य लक्षणम् ॥ १६१ ॥

नन्वेकलक्ष्मभेदोऽयं गण्यते किं पृथक्पृथक् ।

मैवं तद्धातुभेदानां बाहुल्यं यत्र दृश्यते ॥ १६२ ॥

विशिष्टो धातुना तेन सोऽनुबन्धो भिदां व्रजेत् ।

इत्यनुबन्धः

प्रहारसंख्यानियमो लघुगुरुनियमश्च न विवक्षित इत्यर्थः । **उक्तानुबन्धवद्बोध्यमनुबन्धस्य लक्षणमिति**; यथायोगं पुष्पादिभेदमिश्रणोद्भव इत्यर्थः । अत्रानुबन्धचतुष्टये द्वितीयाद्यनुबन्धलक्षणेषु पूर्वपूर्ववदित्यतिदेशात् चतुर्णामप्येकलक्षणत्वेन पृथग्गणनमयुक्तमित्याक्षिपति—**नन्विति** । तत्तद्धातुभेदानां पृथक्त्वे सत्येव पूर्वपूर्ववदित्यतिदेशस्य मिश्रणमात्रविषयत्वेन चतुर्णामपि भिन्नलक्षणत्वात् पृथग्गणनमुपपद्यत इति समाधत्ते—**मैवमिति** ॥ १५४–१६२- ॥

(सु०) व्यञ्जनधातुभेदानाह—**अङ्गुलीति** । अङ्गुलीनां भेदमात्रेण व्यञ्जनधातुः । तत्राङ्गुष्ठद्वयेन कनिष्ठया च यत्रैका तन्त्री निहन्यते तत् पुष्पम् (१); यदा नानास्थानकेन चावर्तमानमेकस्वरं तन्त्रिकाद्वयमेकस्मिन् काले अङ्गुष्ठाभ्यां वादको हन्ति चेत्, तदा कलमित्युच्यते (२); तथैव वामाङ्गुष्ठेन निपीड्य दक्षिणतस्तन्त्रीं यत्र हन्ति, तदा तलम् (३); एकस्यां तन्त्र्यां गुरुनादकारी प्रहारो बिन्दुः (४); एकस्मिन्नेव स्वरे क्रमात् सर्वाभिरङ्गुलीभिः कृतो घातो रेफः (५); पूर्वस्मिन् लक्षितं तलं कृत्वा अवरोहेण घातः **अनुस्वनितम्** (६); वामाङ्गुष्ठेन ऊर्ध्वमधश्च घातो **निष्कोटितम्** (७); तर्जन्या अतिमधुरनादकारी उन्मृष्टम् (८); दक्षिणकनिष्ठया अङ्गुष्ठाभ्यामधः सरन् गच्छन् स्थानत्रय एकस्वरं तन्त्रीत्रयं यत्र पृथक् हन्ति **तदवमृष्टम्** (९); इति

इत्येते धातवः प्रोक्ताः सर्ववाद्योपयोगिनः ॥ १६३ ॥
यथास्थानं प्रयोक्तव्यास्ते च वृत्तिसमाश्रयाः ।
तत्र जातिरुदात्ता स्याद्विस्तारे करणे घना ॥ १६४ ॥
आविद्धाधातौ रिभिता व्यञ्जने ललिता मता ।

इति चतुस्त्रिंशद्धातवः

यज्ञपुरग्रामवासी शार्ङ्गदेव आचष्ट । सजातीयविजातीयभेदसंमिश्रणादनुबन्धस्य लक्षणं पूर्ववद्बोध्यं ज्ञातव्यम् । आक्षिपति—नन्विति । अयमनुबन्धो भेद एकलक्षणयुक्त एव, किमिति पृथग्गण्यते? परिहरति—मैवमिति । येषां धातुभेदानां यत्राधिक्यं तेन धातुना विशिष्टोऽसौ भेदं प्राप्नोति ॥ १९४–१६२- ॥

(क०) धातुलक्षणमुपसंहरति—इत्येत इति । **सर्ववाद्योपयोगिन इति** । अत्र सर्वशब्दः संकुचद्वृत्तिः ततवाद्यविषयो द्रष्टव्यः । इतरेषु प्रहारविशेषोत्थसकलस्वरासंभवात् । **वृत्तिसमाश्रया इति** ; वृत्तयो वक्ष्यमाणाः चित्रादयः, तासामाश्रयभूता इति तत्पुरुषः । **यथास्थानं प्रयोक्तव्या इति** ; यस्मिन् रागे येन धातुना रक्तिविशेषो लभ्यते स तस्य स्थानं तदनतिवृत्त्येत्यर्थः । सुगममन्यत् ॥ -१६३, १६४- ॥

इति चतुस्त्रिंशद्धातवः

(सु०) उपसंहरति—इत्येत इति । एते वाद्योपयोगिनो धातवः प्रोक्ताः । एते वृत्तिसमाश्रयेण यथास्थानं रागतानादिसिध्यर्थं प्रयोक्तव्याः । वृत्तीरनुपदमेव लक्षयिष्यति । तत्रेति । एषु धातुषु मध्ये विस्तारे धातौ उदात्ता जातिः ; करणे धातौ घना जातिः ; आविद्धे धातौ रिभिता जातिः ; व्यञ्जने धातौ ललिता जातिरिति जातिलक्षणं नाम्नैव ज्ञातव्यम् । एवं चतुस्त्रिंशद्धातवः प्रतिपादिताः ॥ -१६३, १६४-॥

इति चतुस्त्रिंशद्धातवः

वृत्तिर्गुणप्रधानत्वरूपा व्यवहृतिर्मता ॥ १६५ ॥
चित्रा वृत्तिर्दक्षिणा च तिस्रः स्युरिति वृत्तयः ।
चित्रा वाद्यप्रधानत्वाद्गीतस्य गुणतोच्यते ॥ १६६ ॥
उभयोः समभावेन वृत्तिर्वृत्तिरुदाहृता ।
गीतप्रधानतावाद्यगुणता दक्षिणा मता ॥ १६७ ॥
द्रुतादिकाँल्लयानासां नियच्छन्ति क्रमात्परे ।
समां स्रोतोगतां तद्वद्गोपुच्छां च यतिं क्रमात् ॥ १६८॥
मागधीं संभाविताख्यां गीतिं च पृथुलां क्रमात् ।
ओघं चानुगतं तत्त्वं वाद्यान्येतान्यनुक्रमात् ॥ १६९ ॥
मार्गं चित्रं वार्तिकाख्यं दक्षिणाख्यं यथाक्रमम् ।
अनागतसमातीतान् ग्रहानिह च मन्वते ॥ १७० ॥

इति वृत्तित्रयम्

(क०) अथ धात्वाश्रितत्वेन प्रसक्ता वृत्तीः ससामान्यं लक्षयति—**वृत्तिर्गुणप्रधानेत्यादिना** । 'गुणप्रधानत्वरूपा व्यवहृतिः' इत्यत्र गुणप्रधानग्रहणसामर्थ्यात् गीतवाद्ययोर्व्यवहृतिरिति गम्यते । कथम्? प्रकृतत्वेन वाद्यस्यैवोपादान एकस्यैकदा गुणप्रधानभावायोगात् द्वयोरुपादानं कर्तव्यम् । तत्र प्रकृतसाहचर्येण गीतनृत्ते प्रसक्ते, तयोर्मध्ये नृत्तापेक्षया वाद्यं प्रति गीतस्यैवान्तरङ्गत्वात् तदेवोपादेयं भवति । तेन गीतवाद्ययोर्व्यवहृतिरित्यर्थः । चित्रादीनां विशेषलक्षणानि स्पष्टार्थानि । **द्रुतादिकानित्यादि** । चित्रायां द्रुतलयम्; वृत्तौ मध्यलयम्; दक्षिणायां विलम्बितलयं नियच्छन्ति नियमयन्ति । एवं यतिगीतवाद्यमार्गग्रहानपि क्रमेण योजयेत् ॥ -१६५–१७० ॥

इति वृत्तित्रयलक्षणम्

**तत्त्वं भवेदनुगतमोघश्चेति निरूपितम् ।**
**गीतानुगं त्रिप्रकारं वाद्यं तल्लक्ष्म कथ्यते ॥ १७१ ॥**
**लयं तालं विरामं च यतिं गीतिं तथाक्षरम् ।**
**वर्णग्रामविभागं च नानाजात्यंशकादिकम् ॥ १७२ ॥**
**व्यञ्जद्गीतगतं गीतमिलितं तत्त्वमुच्यते ।**

इति तत्त्वम्

**किंचिद्गीतानुहरणाद्वाद्यं त्वनुगतं मतम् ॥ १७३ ॥**
**यथा विरतिरन्यत्र स्थितिः स्थानान्तरेष्वपि ।**

(सु०) वृत्तिं लक्षणयति—**वृत्तिरिति** । गुणप्रधानत्वरूपो गीतवाद्ययोर्व्यवहारो वृत्तिरित्युच्यते । सा त्रिविधा—चित्रा, वृत्तिः; दक्षिणा चेति । एतासां लक्षणमाह—**चित्रेति** । वाद्यस्य प्राधान्यं गीतस्य गुणत्वमङ्गत्वं चित्रा वृत्तिः; उभयोर्गीतवाद्ययोः साम्यं वृत्तिसंज्ञिका वृत्तिः । गीतस्य प्राधान्यं वाद्यस्याङ्गत्वं दक्षिणा वृत्तिः । एतासु मतान्तरेण लक्षणादीन्निगमयति—**द्रुतादिकानिति** । एतासां चित्रादीनां वृत्तीनां क्रमात् द्रुतमध्यविलम्बिता लया इत्यपरे आचार्या नियममाहुः । चित्रायां समा यतिः; वृत्तौ स्रोतोगता; दक्षिणायां गोपुच्छेति । चित्रायां मागधी; वृत्तौ संभाविता; दक्षिणायां पृथुलेति । चित्रायामोघं वाद्यम्; वृत्तावनुगतम्; दक्षिणायां तत्त्वं वाद्यमिति । एतानि वाद्यान्यनुपदमेव लक्षयिष्यति । चित्रायां चित्रो मार्गः; वृत्तौ वार्तिकः; दक्षिणायां दक्षिण इति । चित्रायामनागतो ग्रहः; वृत्तौ समः; दक्षिणायामतीत इति ॥ -१६९–१७० ॥

इति वृत्तित्रयलक्षणम्

(क०) एवं वृत्तीनां प्रयोगनिरूपणे प्रसक्तानि तत्त्वादीनि वाद्यानि ससामान्यं लक्षयितुमाह—**तत्त्वं भवेदित्यादिना** । अत्र **गीतानुगमिति**

विलम्बिते गीतलये वैदग्ध्याद् द्रुतवादनम् ॥ १७४ ॥

इत्यनुगतम्

गीतस्यान्तेऽनुकर्तापि भागशश्चातुरीवशात् ।
निरन्तरैः पाणिघातैः समुदायानुकारितम् ॥ १७५ ॥
वादको दर्शयेद्वाद्ये यत्तौघं तं प्रचक्षते ।

इत्योघः

एकविंशतितन्त्रीस्थमेतद्धात्वादिवादनम् ॥ १७६ ॥
एकतन्त्र्यादिवीणासु यथायोगं प्रवर्तयेत् ।
एकतन्त्र्यां तु यत्प्रोक्तं तज्ज्ञेयं नकुलादिषु ॥ १७७ ॥
वेणावपि तदिच्छन्ति वेणुप्रावीण्यशालिनः ।

इति गीतानुगं वाद्यम्

तत्त्वादीनां त्रयाणां वाद्यानां सामान्यलक्षणम् । तेषां विशेषलक्षणानि स्पष्टार्थानि । तत्र विरामशब्दस्य अवसानार्थत्वात् लयाद्भेदो द्रष्टव्यः । तथा विरतिशब्दस्यापि ॥ १७१–१७७- ॥

इति गीतानुगवाद्यत्रयलक्षणम्

(सु०) वृत्तित्रयानुगतं वाद्यत्रयं लक्षयति—तत्त्वमिति । वाद्यं त्रिविधम्—तत्त्वम्, अनुगतम्, ओघश्चेति । एतेषां लक्षणं प्रतिज्ञाय क्रमशः कथयति—लयमिति । गीतिगतं लयतालादिकं व्यञ्जयत्प्रकटीकुर्वद्वाद्यं ततमित्युच्यते । गीतस्य किंचिदनुहरणादंशाभिव्यक्तेर्वाद्यमनुगतमित्युच्यते । अन्यत्र गीते यथा विरतिस्तथैवानुगते वाद्ये विरतिः स्थानान्तरे स्थितिः तथैव, किंतु गीतलये विलम्बिते सति तदनुगतं वाद्यं वैदग्ध्यात् चातुर्यात् द्रुतवादनं द्रुतलयेन वादनं यस्मिन्निति । यस्मिन् वाद्ये गीतस्य अनुकर्ता त्रयं गीतानुकारमनुकुर्वन्नपि

भेदान्निर्गीतवाद्यस्य वैणस्याथ प्रचक्ष्महे ॥ १७८ ॥
आश्रावणारम्भविधिर्वक्त्रपाणिस्ततः परम् ।
संखोटना चतुर्थी च पञ्चमी परिघट्टना ॥ १७९ ॥
मार्गासारितकं लीलाकृतमासारितत्रयम् ।
दशेति शुष्कवाद्यानि तल्लक्ष्म व्याहरेऽधुना ॥ १८० ॥
विस्तारधातुभेदानामादिमं द्विः प्रयुज्यते ।
द्वितीयं च प्रयुज्य द्विराद्यं भेदं द्वितीयकम् ॥ १८१ ॥
लीनाकृतिं द्विरुच्चार्य तद्वद्युग्मान्तराण्यपि ।
प्राक्प्राग्युग्मोत्तरादीनि प्रयुञ्जीत तदा भवेत् ॥ १८२ ॥
आश्रावणं शुष्कवाद्यमत्र त्वाह विशाखिलः ।
विस्तारधातुभेदानां प्रयोगे द्रुतरूपताम् ॥ १८३ ॥

तदेव चातुर्यात् भागशः समुदायानुकारितमवयवसंघातानुकारं, पाणिघातैः पाणिप्रहारैः दर्शयेत् स ओवः । एकेति । एतद्विस्तारधात्वादिवादनमेकविंशतितन्त्री या मत्तकोकिला, तत्र स्थितं ज्ञातव्यम् । एतदेकतन्त्र्यादिवीणासु यथासंभवं प्रवर्तयेत् कुर्यात् । एकतन्त्र्यां तु यद्वादनं प्रोक्तं तन्नकुलादिषु वक्ष्यमाणे वैणवे यथासंभवं योज्यम् ॥ १७१–१७७ ॥

इति गीतानुगवाद्यत्रयलक्षणम्

(क०) एवं गीतानुगवाद्यप्रसङ्गाद् बुद्ध्यारूढान् संगीतवाद्यभेदान् लक्षयितुमाह—**भेदान्निर्गीतवाद्यस्येत्यादिना** । अथ; अनन्तरम् । **वैणस्येति**; वीणायाः संबन्धी वैणः, तस्य । निर्गीतवाद्यस्य भेदानुद्दिशति—**आश्रावणेत्यादि** । **आसारितत्रयमिति** । ज्येष्ठं मध्यं कनिष्ठमित्यर्थः । निर्गीतवाद्यान्येव शुष्कवाद्यानीत्युच्यन्ते । विस्तारधातुभेदानां चतुर्दशानामादिमं विस्तारजं नाम भेदं द्विः; द्विवारं प्रयुज्य, द्वितीयं च द्विरुत्तराख्य-

**आद्यखण्डे यदाद्यौ द्वावेकादशचतुर्दशौ ।**
**वर्णः पञ्चदशस्तद्वच्चतुर्विंशो गुरुर्भवेत् ॥ १८४ ॥**
**लघवोऽष्टादशान्ये स्युरेवं खण्डे द्वितीयके ।**
**तृतीये तु तृतीयो गोऽष्टमपञ्चदशौ तथा ॥ १८५ ॥**

मपि द्विःप्रयुज्य, आद्यं भेदं विस्तारजं द्वितीयकं द्विरुत्तरं लीनाकृतिमन्तर्भूताकारं द्विरुच्चार्य, **तद्वद्युग्मान्तराण्यपि प्राक् प्रयुग्मोत्तरादीनीति ।** अयमर्थः—प्रथमद्वितीयभेदौ प्राग्युग्मम् । तदुत्तरः तृतीयो भेदः द्विरुत्तराख्यं स आदिर्येषां युग्मानां तानि तथोक्तानि । तृतीयचतुर्थौ द्वितीयं युग्मम् । एवं पञ्चमषष्ठौ तृतीयं युग्मम् । सप्तमाष्टमौ चतुर्थं युग्मम् । एवं सप्त युग्मानि प्रयुञ्जीत चेत्, तदा आश्रावणा नाम शुष्कवाद्यभेदो भवति । **विशाखिलो** नाम आचार्यः । **द्रुतरूपताम्** ; द्रुतलययुक्तस्वरूपताम् ॥ -१७८–१८३ ॥

(सु०) वाद्यभेदानाह—**भेदानिति** । **निर्गीतवाद्यस्य** ; गीतशून्यवाद्यस्य वीणासंबन्धिनो वाद्यभेदान् प्रचक्ष्महे कथयामः । तानेव भेदानाह—**आश्रावणेति** । आश्रावणादय आसारितान्ताः शुष्कस्य गीतानुगतवाद्यस्य भेदाः । तेषां लक्षणमाह—**विस्तारेति** । विस्तारधातोर्भेदानां पूर्वोक्तानां मध्ये आदिमं विस्तारजं द्विः द्विवारं प्रयुज्य द्वितीयं च द्विवारं प्रयुज्य आद्यं भेदं द्वितीयं च द्विवारं प्रयुज्य आद्यं भेदं द्वितीयभेदे लीना विलीना दक्षिणाकृतिर्यस्य तथाविधं द्विवारमुच्चार्य तद्वदेव युग्मान्तराणि द्वौ द्वौ भेदौ द्विरुत्तरादिको यदा प्रयुञ्जीत तदा आश्रावणेत्युच्यते । मतान्तरमाह—**शुष्केति** । विशाखिल आचार्यः आश्रावणं शुष्कवाद्यमाह । विस्तारधातुभेदानां द्रुतलययुक्तस्वरूपतां चाहेति संबन्धः ॥ -१७८–१८३ ॥

(क०) प्रसङ्गादाश्रावणायां ध्रुवां लक्षयति— **आद्यखण्ड इत्यादि** । **आद्यौ द्वाविति** । प्रथमद्वितीयावित्यर्थः । **लघवोऽष्टादशान्ये स्युरिति** ।

शेषा द्वादश लाः खण्डैस्त्रिभिरेवं ध्रुवा भवेत् ।
आश्रावणायां गेया सा सूरिभिः सिद्धिमीप्सुभिः ॥ १८६ ॥
वक्ष्यामहे मुनिमतादस्यां पातकलाविधिम् ।
द्वाविंशतिं कलाः केचित्केऽप्यष्टाविंशतिं कलाः ॥ १८७ ॥
अन्ये द्वात्रिंशतं प्राहुस्तत्रैवं तालयोजना ।
शम्यात्रयं ततस्तालास्त्रयोऽत्रानागतग्रहे ॥ १८८ ॥

परिशेषवचनेन **आद्यखण्डे** चतुर्विंशतिवर्णके तत्र प्रथमद्वितीयैकादशचतुर्दशपञ्चदशचतुर्विंशाः षड्गुरवः । इतरेऽष्टादश लघवः । **एवं खण्डे द्वितीयक** इति । तत्रापि वर्णसंख्या गुरुलघुसंनिवेशश्च आद्यखण्डवत्कर्तव्य इत्यर्थः । **तृतीये त्विति** । **तृतीये** खण्डे **तु तृतीयो गः,** तृतीयो वर्णो गुरुः कर्तव्यः । **अष्टमपञ्चदशौ तथेति** । गुरू कर्तव्यावित्यर्थः । **शेषा द्वादश ला** इत्यनेनास्य खण्डस्य पञ्चदशवर्णात्मकत्वं दर्शितं भवति । **सिद्धिमीप्सुभिरिति**; दृष्टादृष्टफलकाङ्क्षिभिरित्यर्थः ॥ १८४–१८६ ॥

(सु०) ध्रुवां लक्षयति—**आद्यखण्ड इति** । **आद्यखण्डे**; प्रथमखण्डे, आद्यौ द्वौ वर्णौ एकादशादयश्च वर्णा गुरवः । अन्ये द्वादश वर्णा लघवः । एवं त्रिभिः खण्डैर्ध्रुवा भवति । सा; ध्रुवा, आश्रावणायां सिद्धिमीप्सुभिः वाद्यसिद्धिमभिलषद्भिः गेया ॥ १८४–१८६ ॥

(क०) अस्यामाश्रावणायां पातकलाविधिमाह—**वक्ष्यामह इत्यादिना** । तत्र; द्वाविंशतिकलापक्षे । **शम्यात्रयमिति** । आद्यासु तिसृषु कलासु शम्यात्रयं योजयेत् । **ततस्तालास्त्रय इति** । ततः चतुर्थ्यादिषु तिसृषु कलासु त्रयः ताला योज्याः । **अनागतग्रह इति** । गीतादिकं किंचित्प्रथमं तालरहितमारभ्य अनन्तरमेताः षट्कलाः प्रयोक्तव्या इत्यर्थः ।

ततः समग्रहे शम्याद्वयं तालद्वयं तथा ।
ततोऽतीतग्रहे शम्यातालौ द्वादश ताः कलाः ॥ १८९ ॥
यथाक्षरस्योत्तरस्य षट्चतस्रस्तु युग्मजाः ।
कला द्वाविंशतावेवम्,
अथाष्टाविंशतौ विधिः ॥ १९० ॥
द्वादशात्र कलाः प्राग्वद् द्विकलोत्तरवत्ततः ।

ततः **समग्रह इत्यादि** । ततः ; सप्तम्यादिषु चतसृषु कलासु शम्याद्वयं च योजयेत् । **समग्रह इति** ; समकाल इत्यर्थः । **ततोऽतीतग्रह इत्यादि** । तत एकादशीद्वादश्योः कलयोः शम्यातालौ योजयेत् । **अतीतग्रह इति** ; गीतादेः पूर्वमेव तालस्य किंचित्प्रवृत्तावित्यर्थः । एवं द्वादश कलाः प्रयुज्य, अनन्तरम् ; **यथाक्षरस्योत्तरस्य षडिति** ; त्रयोदश्यादिषु अवशिष्टासु दशसु कलासु मध्य आद्यासु षट्सु संताशताशता योज्या इत्यर्थः । **चतस्रस्तु युग्मजा इति** । एकोनविंशाद्यासु चतसृषु संशताशाः प्रयोज्या इत्यर्थः । एवं कला द्वाविंशतौ पातकलाविधिः कर्तव्यः ॥ १८७–१९० ॥

(सु०) एतस्यां ध्रुवायां मुनेर्भरतस्य मतात् पातकलाविधिं ब्रूमः । द्वाविंशतिमिति । केचिदाचार्याः एतस्यां ध्रुवायां द्वाविंशतिं कलाः प्राहुः । केचिदष्टाविंशतिं कलाः ; अन्ये द्वात्रिंशतिरिति । शम्यात्रयमिति । अनागते ग्रहे ; त्रयः शम्याः, त्रयस्तालाः, समग्रहे ; द्वे शम्ये, द्वौ तालौ । ततः अनन्तरम्, अतीतग्रहे शम्याः, तालाश्च द्वादश । ताश्च कलाः ; यथाक्षरस्य ; षट्पितापुत्रकस्य । षड्युग्मजः, चचत्पुटात् जाताश्चतस्रः ॥ १८७–१९० ॥

(क०) अष्टाविंशतिकलापक्षे पातकलाविधिं दर्शयितुमाह—**अथाष्टाविंशतावित्यादि । द्वादशात्र कलाः प्राग्वदिति । प्राग्वदत्र**

कला द्वादश शेषास्तु स्युरेककलयुग्मवत् ॥ १९१ ॥
अथ द्वाविंशतिः प्राच्याः स्युश्चतुर्विंशतिः कलाः ।
द्वितीयपक्षवत्प्रान्ते त्वष्टौ द्विकलयुग्मवत् ॥ १९२ ॥
एषु त्रिष्वपि पक्षेषूत्तरश्चचत्पुटस्तथा ।
अतीतेन ग्रहेण स्याद्विदारीरथ कीर्तयेत् ॥ १९३ ॥
शम्यात्रयेण प्रथमा परा तालत्रयेण तु ।
शम्याद्वया तृतीया स्यात्तुर्या तालद्वयेन तु ॥ १९४ ॥
पञ्चमी शम्यातालाभ्यां षष्ठी स्यात्पञ्चपाणिना ।
चचत्पुटा सप्तमी स्यात्तास्तिस्रो मन्वते परे ॥ १९५ ॥

द्वाविंशतिकलापक्षवत्; आद्यासु द्वादशकलासु शम्यादयः पूर्वोक्ता द्वादश पातकला योज्याः । ततः; त्रयोदश्यादिषु कलासु । **द्विकलोत्तरवदिति** । निप्रता, शनिता, निशता, प्रनिसमिति द्वादश पातकला योज्याः । **शेषा इति** । पञ्चविंश्यादयः चतस्रः । **एककलयुग्मवदिति**; संशताशा योज्या इत्यर्थः । **अथ द्वाविंशतीत्यादि, प्राच्याः स्युश्चतुर्विंशतिः कला द्वितीयपक्षवदिति**; अष्टाविंशतिकलापक्ष इत्यर्थः । **प्रान्ते तु**; अष्टाविंशतिपञ्चविंशादयः, **अष्टौ द्विकलयुग्मवदिति**; निशनिताशप्रनिसाः प्रयोज्या इत्यर्थः ॥ -१९१–१९२ ॥

(सु०) अष्टाविंशतिकलापक्षे पातकलाविधिमाह—**अष्टाविंशताविति** । **द्वादशेति** । अत्र अष्टाविंशतिकलायां ध्रुवायां द्वादश कलाः प्राग्वत् द्वाविंशतिध्रुवावत् । ततो द्विकलेनोत्तरेणेव ज्ञेया द्वादश कलाः । शेषाश्चतस्रः एककलचचत्पुटवत् ॥ - १९१–१९२ ॥

(क०) आश्रावणायां तत्तन्मतभेदेन विदारीं दर्शयितुमाह—

यथाक्षरस्य युग्मस्य द्विरावृत्त्या विदारिका ।
आद्या तथा द्वितीया स्यात्तयोरन्ते कलाद्वयम् ॥ १९६ ॥
एवमष्टादश कलास्ततो युग्माद्यथाक्षरात् ।
विदारी स्यात्तृतीयान्ये विदारीरन्यथा जगुः ॥ १९७ ॥
आद्या द्विकलयुग्मेन द्वितीया च तथा भवेत् ।
यथाक्षरेणोत्तरेण तृतीयान्येऽन्यथा जगुः ॥ १९८ ॥
पूर्वोक्ता द्वादश कला विदार्याद्या परा पुनः ।
यथाक्षरेणोत्तरेण शेषा युग्माद्यथाक्षरात् ॥ १९९ ॥
एवमाश्रवणामाह श्रीमान्यज्ञपुराग्रणीः ।

इत्याश्रावणा

**विदारीरथेत्यादिना** । विदारी गीतखण्डमिति प्रागुक्तम् । अत्र वाद्यखण्डमिति द्रष्टव्यम् । उत्तरो ग्रन्थस्तु विस्पष्टार्थः ॥ १९३–१९९- ॥

इत्याश्रावणा

(सु०) एष्विति । एषु त्रिष्वपि पक्षेषु उत्तरः षट्पितापुत्रकः चच्चत्पुटश्च अतीतग्रहेण युक्तः कार्यः । शम्येति । प्रथमा विदारी शम्यात्रयेण कार्या । द्वितीया तु तालत्रयेण कार्या । तृतीया शम्याद्वयेन कार्या । तुर्या तु तालद्वयेन । पञ्चमी शम्यातालाभ्याम् । षष्ठी पञ्चपाणिना षट्पितापुत्रकेण । सप्तमी चच्चत्पुटेनेति । अन्येषां मतमाह—ता इति । परे ; आचार्याः ताः ; विदारीः । तिस्र इति मन्वते । ता एव लक्षयति—यथाक्षरेति । यथाक्षरस्य चच्चत्पुटस्य द्विरावृत्त्या प्रथमा विदारी । तथैव द्वितीया । तयोः ; प्रथमद्वितीययोः विदार्योः ; अन्ते ; कलाद्वयमधिकम् । यथाक्षरचच्चत्पुटवत् तृतीया विदारी । अन्ये ; आचार्याः, विदारीत्रयमन्यथा जगुः । द्विगुणा चच्चत्पुटेनाद्या । तथैव द्वितीया यथाक्षरषट्पितापुत्रकेण । तृतीया यथाक्षरचच्चत्पुटेनेत्याहुः ॥ १९३–१९९- ॥

इत्याश्रावणा

**स्युरारोहावरोहाभ्यां युक्ता विस्तारधातुजाः ॥ २०० ॥**
**भेदास्तलेन रिभितह्रादाभ्यां मिश्रिताः क्रमात् ।**
**ततः करणभेदं द्विस्त्रिर्वाभ्यस्य विलीनवत् ॥ २०१ ॥**
**बहुलेन प्रयुक्ते चैकविस्तारे पुनस्तथा ।**
**द्विरभ्यस्येदेवमेव करणस्य भिदाः पराः ॥ २०२ ॥**
**यत्रारम्भविधिः स स्यात्,**

(क०) अथारम्भविधिं दर्शयति—**स्युरारोहावरोहाभ्यामित्यादि**। **विस्तारधातुजा भेदा इति**। विस्तारजादयश्चतुर्दश। **तलेनेति**। व्यञ्जनधातुभेदेन। **रिभितह्रादाभ्यामिति**। करणधातुभेदाभ्याम्। **क्रमान्मिश्रिता इति**। प्रथमं तलेन, अनन्तरं रिभितेन, तदनन्तरं ह्रादेन मिश्रिताः सन्तः आरोहावरोहाभ्यां प्रत्येकं प्रयुक्ताः स्युः। **ततः**; अनन्तरम्, **करणभेदमिति**। रिभितादिषु पञ्चस्वेकं द्विस्त्रिर्वा अभ्यस्य। **विलीनवद् बहुलेनेति**। स्वरैकीकरणप्रचुरेणेत्यर्थः। तादृशेन प्रयोगेण, **एकविस्तारे**; एकविस्तारापरपर्याये विस्तारजनाम्नि विस्तारधातुभेदे, **पुनः** भूयोऽपि **प्रयुक्ते** सति। **पराः करणस्य भिदा** इति। प्रथमप्रयुक्ताद्भेदात् अन्यान् भेदानित्यर्थः। **एवमेवेति**। एकविस्तारयोगेणेत्यर्थः। **द्विरभ्यस्येद्** यत्र वाद्यविधौ स आरम्भविधिः स्यात् ॥ -२००–२०२- ॥

(सु०) आरम्भविधिं लक्षयति—**स्युरिति**। **विस्तारधातुजा भेदाः**; विस्तारजादयश्चतुर्दश धातवः। **तलेन**; व्यञ्जनेन, **रिभितह्रादाभ्यां युक्ताः**, **आरोहावरोहाभ्यां** क्रमेण **स्युः**। ततः करणधातोरेकभेदं द्विवारं त्रिवारं वा अस्य बहुशोऽनुप्रयुङ्क्ते। एकस्मिन् विस्तारभेदे **विलीनवत्** स्वरैकीकरणेन द्विवारमभ्यस्येत्। एवमन्येऽपि करणधातोर्भेदा यत्राभ्यस्यन्ते स आरम्भविधिः ॥ -२००–२०२- ॥

अथ तस्य ध्रुवां ब्रुवे ।
गुरवोऽष्टौ द्वादशाथ लघवः पञ्च गा इति ॥ २०३ ॥
पञ्चविंशत्यक्षरं स्यादाद्यखण्डं ततः परम् ।
लघवोऽष्टौ गुरुर्लाश्च चत्वारो गश्चतुर्लघुः ॥ २०४ ॥
गश्चेत्येकोनविंशत्या वर्णैः खण्डं द्वितीयकम् ।
यस्यास्तृतीयखण्डेऽष्टौ ला गोऽन्ते स्याद् ध्रुवात्र सा ॥ २०५ ॥
एकविंशे गुरौ कार्या विश्रान्तिः पूर्वखण्डके ।
द्वितीयखण्डे विश्राम्येद् गुरौ वर्णे चतुर्दशे ॥ २०६ ॥
स्याद् द्वादशकलं खण्डमाद्यमन्यत्तु षट्कलम् ।
चतुष्कलं तृतीयं स्यादथ तालोऽत्र कथ्यते ॥ २०७ ॥
तालत्रयं च शम्यैका तालौ द्वौ शम्ययोर्द्वयम् ।
द्वौ तालौ संनिपातौ द्वावित्याद्ये शकले कलाः ॥ २०८ ॥
यथाक्षरस्योत्तरस्य क्रमाच्चचत्पुटस्य च ।
कला भवन्ति शकले द्वितीये च तृतीयके ॥ २०९ ॥

इत्यारम्भविधिः

(क०) तस्यारम्भस्य ध्रुवां दर्शयति—**अथ तस्येत्यादिना** । **द्वादशकलं खण्डमाद्यमिति** । आद्यं खण्डं पञ्चविंशतिवर्णात्मकं द्वादशकलं स्यात् । **अन्यत्तु**; एकोनविंशतिवर्णात्मकं द्वितीयखण्डं तु षट्कलं स्यात् । **तृतीयं** नववर्णात्मकं खण्डं चतुष्कलं स्यादिति । अत्र लघुगुर्वात्मकान् वर्णान् पञ्चलघ्वक्षरोच्चारमितासु कलासु सलयं योजयेदित्यर्थः । सुगम-मन्यत् ॥ -२०३–२०९ ॥

इत्यारम्भविधिः

बहुलाविद्धकरणः स्तोकव्यञ्जनधातुकः ।
विस्तारधातुना हीनो वक्त्रपाणिः प्रकीर्तितः ॥ २१० ॥
मुखप्रतिमुखे स्यातां तालाङ्गे द्वे च नाथवा ।
प्रवृत्तं चैककं वर्णाङ्गमत्राथ ब्रुवे ध्रुवाम् ॥ २११ ॥
गुरवः पञ्च लाः षट् च गुरवः षड् लघुद्वयम् ।
चत्वारो गास्तथा लाः स्युस्त्रयो गा लघवोऽष्ट च ॥ २१२ ॥
यत्र स्याद् गुरुरन्ते सा वक्त्रपाणौ ध्रुवा भवेत् ।
या मात्रा वस्तुनोऽन्त्या स्याद् द्विकले मद्रके स्थिता ॥ २१३ ॥
तस्यास्तालोऽत्र कर्तव्यः कलास्त्वष्टासु तन्मुखम् ।

तस्य ध्रुवामाह—अथेति । गुरव इति । अष्टौ गुरवः; द्वादश लघवः, पञ्च गुरव इत्याद्यखण्डे । अष्टौ लघवः, एको गुरुः, चत्वारो लघवः, एको गुरुः, पुनश्चात्वारो लघवः, एको गुरुरिति द्वितीयखण्डे । अष्टौ लघवो गुरुश्च तृतीयखण्डे । एवं खण्डत्रयवती ध्रुवा अत्र; आरम्भविधौ कार्या । एकविंश इति । प्रथमे खण्डे एकविंशतितमे गुरौ विश्रान्तिः । द्वितीये खण्डे चतुर्दशेति । आद्ये खण्डे द्वादश कलाः । द्वितीये खण्डे षट् कलाः । तृतीये खण्डे चतस्रः कलाः । पातकलाविधिमाह—तालत्रयमिति ॥ -२०३–२०९ ॥

इत्यारम्भविधिः

(क०) अथ वाक्त्रपाणिं लक्षयति—**बहुलाविद्धेत्यादि । अत्र**; वक्त्रपाणौ, मुखप्रतिमुखे नाम तालाङ्गे विकल्पेन स्याताम् । प्रवृत्तं चैककं वा वर्णाङ्गमेकं स्यात् । अथ ध्रुवामाह—**गुरवः पञ्चेत्यादि । या मात्रेत्यादि । द्विकले मद्रके वस्तुनः** चतुर्विंशतिकलात्मकस्य अन्ते या मात्रा स्थिता अष्टकलात्मिका, तस्याः तालोऽत्र कर्तव्य इति; शताताशतासम्, इति वक्त्रपाणौ ध्रुवाया आद्यास्त्वष्टादशसु कलासु कर्तव्यो

अथ प्रतिमुखं कार्यं चतुरावृत्तियोगिना ॥ २१४ ॥
उत्तरेणापरेत्याहुः पूर्वोक्तो यः कलाष्टकः ।
सोऽत्र कार्यस्त्रिरावृत्तो मात्रया तु विदारिका ॥ २१५ ॥

इति वक्त्रपाणिः

अङ्गुष्ठाभ्यां च तर्जन्या तन्त्रीं निष्पीड्य वादयन् ।

भवति, **तन्मुखमिति** तालाङ्गं भवति । मतान्तरेण प्रतिमुखं दर्शयति—**अथ प्रतिमुखमित्यादि । चतुरावृत्तियोगेनेति ।** चतसृणामावृत्तीनां योगोऽस्यास्तीति चतुरावृत्तियोगी, तेन उत्तरेण षट्पितापुत्रकेण । स्वमतेन प्रतिमुखं दर्शयति—**अत्र ;** प्रतिमुखे । **पूर्वोक्त इति** । शताताशतासमिति । एवं त्रिवारमावृत्तः कार्यः । **मात्रया तु विदारिकेति । मात्रया** अष्टकलात्मिकया ॥ २१०–२१५ ॥

इति वक्त्रपाणिः

(सु०) वक्त्रपाणिं लक्षयति—बहुलेति । बहुलौ आविद्धकरणौ धातू यस्मिन्, एकश्च व्यञ्जनधातुः, विस्तारधातुश्च नास्ति स वक्त्रपाणिः । अत्र द्वे तालाङ्गे, मुखं प्रतिमुखं चेति कर्तव्यमेव, न वा प्रवृत्तमेककं च मद्रकादिषु लक्षितमङ्गं ज्ञातव्यम । अत्र ध्रुवामाह—गुरुव इति । या मात्रेति । मद्रके द्विकले वस्तुनः प्रान्ते या मात्रा स्थिता तस्यास्तालोऽत्र ध्रुवायां कर्तव्यः । अष्टसु कलासु मुखं कर्तव्यम् । ततः प्रतिमुखं चतुर्वारमावृत्तेन उत्तरेण षट्पितापुत्रकेण कार्यम् । अन्ये त्वेवमाहुः—पूर्वोक्ता या अष्टौ कलाः ता एव त्रिरावृत्ताः । प्रतिमुखमिति । एकया मात्रया तु विदारीति ॥ २१०–२१९ ॥

इति वक्त्रपाणिः

(क०) अथ संखोटनां लक्षयति—**अङ्गुष्ठाभ्यामित्यादि । बिन्दुं ;**

बिन्दुं मिथो मेलयेत वादिसंवादिनौ स्वरौ ॥ २१६ ॥
बहुधा तद् गुणत्वेन प्रयुञ्जीतानुवादिनः ।
विवादिनोऽल्पकान्कुर्याद्विस्तारस्य भिदास्तथा ॥ २१७ ॥
धात्वन्तरैर्मिश्रयित्वाभ्यस्येद् द्विस्त्रिः पृथक्ततः ।
केवलास्ताः प्रयुज्य द्विस्तासु मग्नानिवापरान् ॥ २१८ ॥
धातून्यत्र प्रयुञ्जीत प्राहुः संखोटनाममूम् ।

व्यञ्जनधातुभेदं वादयन्निति पूर्वेण संबन्धः । **वादिसंवादिनौ स्वरौ मिथो मेलयेतेति** । षड्जपञ्चमावृषभधैवतौ गान्धारनिषादावन्यौ वा स्वरौ विकृतावस्थौ द्वादशभिरष्टभिर्वा श्रुतिभिरन्तरितौ मिथः संगत्या संवादयेदित्यर्थः । **तद्गुणत्वेनेति** । तयोर्वादिनोः गुणत्वेनोपसर्जनत्वेन, **अनुवादिनः** स्वरान् प्रयोगे **बहुधा** प्रयुञ्जीतेति । वादिनं वा स्थायिनं कृत्वा तत्परिवारत्वेन अनुवादिनः प्रयुञ्जीतेत्यर्थः ॥ २१६- ॥

(सु०) संखोटनां लक्षयति । **अङ्गुष्ठाभ्यामिति** । द्वाभ्यामङ्गुष्ठाभ्यां तर्जन्या च तन्त्रीं पीडयित्वा बिन्दुं धातुमेकत्र तन्त्र्या प्रहाररूपं पूर्वलक्षितं वादयित्वा वादिसंवादिनौ द्वौ स्वरौ संयोजयेत् । तयोः वादिसंवादिनोः गुणत्वेनाङ्गत्वेन च बहुधा अनुवादिनः प्रयुञ्जीत ॥ २१६- ॥

(क०) **विवादिनोऽल्पकान् कुर्यादिति** । यस्मिन् प्रयोगे यो विवादी स्वरः तमनभ्यस्तं लङ्घितं वा कुर्यादित्यर्थः । **विस्तारस्य भिदा** इति । विस्तारजादींश्चतुर्दश विस्तारधातुभेदान् धात्वन्तरैः करणादिधातुभेदैरित्यर्थः । **मिश्रयित्वेति** । संकीर्णान् कृत्वेत्यर्थः । **द्विस्त्रिर्वा** पृथगभ्यसेदित्यर्थः । **ततः**; अनन्तरं, **ताः** विस्तारस्य भिदाः **केवलाः** धात्वन्तरामिश्रा द्विस्त्रिर्वा प्रयुज्य **तासु मग्नानिव** लीनानिव अपरान् **धातून्** करणादिधातुभेदान् **यत्र** प्रयुञ्जीत **अमूं** संखोटनां नाम निर्गीतवाद्यभेदं प्राहुः ॥ -२१७, २१८- ॥

**गुरू द्वौ लघवोऽष्टौ च द्वौ गुरू च लघुर्गुरुः ॥ २१९ ॥**
**यत्र द्वादश ला गोऽन्ते सा स्यात्संखोटनाध्रुवा ।**
**यथाक्षरद्विकलयोः स्युरत्रोत्तरयोः कलाः ॥ २२० ॥**
**नात्र संख्या विदारीणां भणिता भरतादिभिः ।**

इति संखोटना

**भेदा व्यञ्जनधातूत्था भेदैः करणधातुजैः ॥ २२१ ॥**

(सु०) विवादिन इति । विवादिनः स्वरान् अल्पकान् कुर्यात् । विस्तारधातुभेदान् अन्यैः धातुभेदैः संमिश्र्य पृथक् पृथक् द्विवारं त्रिवारं वा अभ्यस्येत् । ततः अनन्तरं केवलान् विस्तारधातुभेदान् द्विः प्रयुज्य, तासु भिदासु अपरान् धातून् मग्नानिव विलीनानिव यत्र वादकः प्रयुञ्जीत, सा संखोटना ॥ -२१७, २१८- ॥

(क०) अत्र ध्रुवामाह—**गुरू द्वावित्यादि । यथाक्षरद्विकलयोरित्यादि** । अयमर्थः—सप्तविंशत्यक्षरात्मिकायां संखोटनाध्रुवायां यथाक्षरस्य षट्पितापुत्रकस्य **कलाः** संताशताशताः, द्विकलस्य तस्यैव कलाः निप्रताशनितानि शताप्रनिसमित्येता यथायोगं प्रयोज्या इति । सुगममन्यत् ॥ -२१९, २२०- ॥

इति संघोटना

(सु०) एतस्यां ध्रुवामाह—गुरू इति । अत्र ध्रुवायां यथाक्षरद्विकलयोः षट्पितापुत्रकयोः कलाः कार्याः । अत्र विदारीणां च कलासंख्या भवन्ति । भरतादिभिस्तु कलासंख्या नोक्ताः ॥ -२१९, २२०- ॥

इति संघोटना

(क०) परिघट्टनां लक्षयति—**भेदा** इति । व्यञ्जनधातूत्थाः पुष्पादयो दश भेदाः । **करणधातुजैरिति** । घातादिभिः पञ्चभिर्भेदैः ।

चित्रिता ललिताः स्निग्धा क्रियन्ते करलाघवात् ।
आरोहबहुला यस्यां तामाहुः परिघट्टनाम् ॥ २२२ ॥
गुरूण्यष्टौ च लघवः स्युश्चतुर्विंशतिर्गुरू ।
द्वौ षोडश लघून्यन्ते गुरुर्यत्र ध्रुवात्र सा ॥ २२३ ॥
संपक्वेष्टाकवद्यद्वा स्युः संपिष्टकवत्कलाः ।
संपिष्टके कलाः प्रोक्ता दश द्वादश वा पुरा ॥ २२४ ॥
संपिष्टककलास्त्वत्र द्वादशैवेति संमतम् ।
द्वादशानां दशानां च प्राहुरन्ये समुच्चयम् ॥ २२५ ॥
संपक्वेष्टाकतालं च द्विकलीकृत्य केचन ।
तद्द्वादशकला तालयोगमत्र प्रचक्षते ॥ २२६ ॥
यथाक्षरद्विकलयोः संपक्वेष्टाकयोरिह ।
अष्टादश कलाः केचिदाचक्षत समुच्चिताः ॥ २२७ ॥

इति परिघट्टना

**चित्रिता इति** । यथायोगं मिश्रेण रूपान्तरं प्रापिता इत्यर्थः । **आरोहबहुलाः**; आरोहिवर्णेन प्रचुराः ॥ -२२१, २२२- ॥

(सु०) परिघट्टनां लक्षयति—**भेदा इति** । व्यञ्जनधातूत्थाः भेदाः, करणधातुजैः भेदैः, चित्रिता विचित्रिताः, ललिताः, सुकुमाराः, स्निग्धाः मिश्रिताश्च, करलाघवात् मर्दिताः क्रियन्ते, आरोहबहुलाः आरोहप्रचुरा यस्यां सा परिघट्टना ॥ -२२१, २२२- ॥

(क०) तत्र ध्रुवामाह—**गुरूण्यष्टेत्यादि** । तस्याः पातकलायोगं दर्शयति—**संपक्वेष्टाकवदित्यादि** । स्पष्टार्थो ग्रन्थः ॥ २२३–२२७ ॥

इति परिघट्टना

विस्ताराविद्धकरणभेदमिश्रप्रयोगतः ।
यथा कलतलाख्याभ्यां मार्गासारितकं भवेत् ॥ २२८ ॥
अन्ये कलतलोन्मिश्रकरणं लक्ष्म चक्ष्महे ।
गाश्चत्वारो लघून्यष्टौ गौ द्वावष्टौ लघून्यथ ॥ २२९ ॥
गो ल इत्याद्यखण्डं स्यादेवं खण्डद्वयं परम् ।
यस्यामसौ ध्रुवा ज्ञेया मार्गासारितसंश्रया ॥ २३० ॥
एकं चचत्पुटे खण्डमुत्तरे शकलद्वयम् ।
कनिष्ठासारितोक्तेन कार्यस्तालकलाविधिः ॥ २३१ ॥

इति मार्गासारितम्

(सु०) अस्या ध्रुवामाह—गुरूणीति । संपक्वेष्टाकतालस्थाः पूर्वोक्ताः संपक्वेष्टाकवत्कलाः कार्याः । संपक्वेष्टाके पूर्वं सताशताश इति दश द्वादश वा कला उक्ताः । अत्र तु द्वादशैव कलाः कार्याः । अन्ये; आचार्याः द्वादशानां दशानां च कलानां समुच्चयमाहुः । तत्पक्षे द्वाविंशतिः कलाः । केचित्त्वाचार्याः षट्पितापुत्रकेण योगमाहुः । अन्ये तु यथाक्षरद्विकलयोः संपक्वेष्टाकयोः अष्टादश कलाः परिघट्टनाया ध्रुवामाहुः ॥ २२३–२२७ ॥

इति परिघट्टना

(क०) मार्गासारितं लक्षयति—विस्ताराविद्धेत्यादि । कलतलाख्याभ्याम्; व्यञ्जनधातुभेदाभ्याम् । तत्र ध्रुवामाह—गाश्चत्वार इत्यादि । तस्यां पातकलायोगं दर्शयति—एकं चचत्पुट इत्यादि । कनिष्ठासारितोक्तेनेति । अत्र—

'कनिष्ठासारिते युग्मः शम्यादिद्वावथोत्तरौ ।
एते यथाक्षरास्तेषां संनिपातोऽन्तिमोऽधिकः ॥'

इति पूर्वोक्तमनुसंधेयम् ॥ २२८–२३१ ॥

**प्रयोगोऽभिसृतस्य स्यात्तथा परिसृतस्य चेत् ।**
**तथा लयान्तरगतो वाद्यतालकलाविधौ ॥ २३२ ॥**
**माधुर्यं सौकुमार्यं च तदा लीलाकृतं भवेत् ।**
**षड्जग्रामस्थजात्यंशे यद्गीतं वार्तिके पथि ॥ २३३ ॥**
**आसारितं तदेवोक्तं धीरैरभिसृताह्वयम् ।**
**जात्यंशे मध्यमग्रामसंस्थे परिसृतं त्विदम् ॥ २३४ ॥**

(सु०) मार्गासारितं लक्षयति—**विस्तारेति** । विस्ताराविद्धकरणानां मिश्रितभेदप्रयोगात् तथा पूर्वोक्तकलतलप्रयोगात् मार्गासारितं भवति । **अन्ये**; आचार्याः, कलतलाख्यभेदमिश्रितधातुप्रयोगे मार्गासारितस्य लक्षणमित्याचक्षते। तमाह—**गाश्चत्वार** इति । **एकमि**ति । एकं खण्डं ध्रुवायाः चचत्पुटताले गेयम्। अन्यत् खण्डद्वयं तु उत्तरे षट्पितापुत्रके तालाध्यायोक्तकनिष्ठासारिते यः पात-कलाविधिः सोऽत्र कर्तव्यः ॥ २२८–२३१ ॥

इति मार्गासारितम्

(क०) अथ लीलाकृतं नाम निर्गीतवाद्यं लक्षयति—**प्रयोगोऽभिसृतस्येत्यादि । अभिसृतस्य परिसृतस्य च प्रयोगः तथा लयान्तरगतेति** । प्रयोगश्च वाद्यतालकलाविधौ स्यात् । माधुर्यं सौकुमार्यं च यतः स्यात् तत्तो लीलाकृतमित्यर्थः । अभिसृतस्य स्वरूपमाह—**षड्जग्रामेत्यादि** । परिसृतस्य स्वरूपमाह—**जात्यंश इत्यादि** ॥ २३२–२३४ ॥

(सु०) लीलाकृतं लक्षयति—**प्रयोग इति** । वक्ष्यमाणलक्षणस्य अभिसृतस्य परिसृतस्य च प्रयोगः पूर्वोक्तलयान्तरस्येव कलाविधौ प्रयोगः कार्यः । तत्र माधुर्यं सौकुमार्यं च यदि विद्येत तदा लीलाकृतम् । अभिसृतपरिसृते लक्षयति—**षड्जग्रामेति** । षड्जग्रामस्थाः षड्जग्रामोत्पन्ना जातयः, तासामंशे रागे ग्रामे च यदुपनिबद्धं गीतं वार्तिके मार्गे पूर्वोक्तमासारितं तद्वद-

अन्ये तु माषघातादिसप्ताङ्गमपरान्तकम् ।
ब्रुवतेऽभिसृतं तत्तु प्रदानादिनवाङ्गकम् ॥ २३५ ॥
प्राहुः परिसृतं मृग्यं तालाध्याये लयान्तरम् ।
गीतकत्रयसंयोगादेवं लीलाकृतं त्रिधा ॥ २३६ ॥
प्रयोगौ द्वौ पदैश्चान्यः सार्थकैश्च निरर्थकैः ।
वीणावाद्यं मानतालयुक्तं शम्यादिवर्जितम् ॥ २३७ ॥

भिसृतमित्युच्यते । मध्यमग्रामोत्पन्ने जात्यंशे यदुपनिबद्धमासारितं परिसृतमित्युच्यते ॥ २३२–२३४ ॥

(क०) तयोरेव मतान्तरेण स्वरूपमाह—**अन्ये त्वित्यादि** । माषघातादीनि सप्ताङ्गानि यस्येति तत्तथोक्तम् । प्रदानादीनि नवाङ्गकानि यस्येति तत्तथोक्तम् । तदित्यपरान्तकं परामृश्यते । **लयान्तरं तालाध्याये मृग्यमिति** । तत्र हि 'तद्वल्लयान्तरं मार्गलयाभ्यां द्विगुणं ततः' इति कनिष्ठासारितद्वैगुण्येनोक्त आसारितभेदो द्रष्टव्यः । **गीतकत्रयसंयोगादिति** । अभिसृतपरिसृतलयान्तराख्यस्य गीतकत्रयस्य प्रयोगात् । अस्य लीलाकृतस्य **द्वौ प्रयोगौ** अभिसृतपरिसृताख्यौ, **सार्थकैः**; वाचकलक्षकव्यञ्जकैः पदैश्च भवतः । **अन्यः** तृतीयः प्रयोगो लयान्तराख्यो **निरर्थकैः** तेनतेनादिभिरनुकरणशब्दैर्वा भवति ॥ २३५, २३६- ॥

(सु०) मतान्तरमाह—**अन्ये त्विति** । पूर्वोक्तमाषघातादिसप्ताङ्गे उक्तमपरान्तकमभिसृतं, प्रदानादिनवाङ्गसंयुक्तमपरान्कं परिसृतमिति च केचिदाहुः । लयान्तरलक्षणं तालाध्याये उक्तम् । एवं गीतकत्रयसंयोगेन लीलाकृतं त्रिधा त्रिप्रकारं भवति । तत्र सार्थकैः निरर्थकैश्च पदैः प्रयोगद्वयम् ॥ २३५, २३६- ॥

(क०) अत्र वाद्ये तालमानयोगविषये मतभेदान् दर्शयति—**वीणावाद्य-**

आहुरेके मानहीनमपि त्वाह विशाखिलः ।
ध्रुवायां तूभयस्तालः परैस्त्वनियमात्मकः ॥ २३८ ॥

इति लीलाकृतम्

आसारितत्रयं पूर्वं तालाध्याये निरूपितम् ।
यथाक्षरं द्विसंख्यातं त्रिसंख्यातमिति त्रिधा ॥ २३९ ॥
प्रत्येकं तस्य चावृत्तिर्वर्णालंकारशोभना ।
वृत्तित्रयेण वाद्यैश्च तत्त्वाद्यैः करणेन च ॥ २४० ॥
धातुना चित्रिता कार्या बुधैर्वीणाविधाविह ।

इत्यासारितत्रयम्

इति नकुलादिपञ्चवीणालक्ष्म

**मित्यादि ।** **ध्रुवायां तूभयस्ताल इति ।** अपरान्तकासारितात्मिकायां लीलाकृतध्रुवायामुभयस्तालः चतुरश्रः, त्र्यश्रश्च ॥ २३२–२३८ ॥

(सु०) वाद्ये मानविषये मतान्तरमाह—**वीणावाद्यमिति** । ततवाद्यं मानेन तालेन च युक्तं कार्यम् । एके, केचित् द्वाभ्यां वर्जितमेतदाहुः । विशाखिलस्तु मानहीनं तालहीनं चाह । एतस्य ध्रुवायां यत्किंचन तालद्वयं स्वेच्छया उपनिबन्धनीयम् ॥ २३२–२३८ ॥

इति लीलाकृतम्

(क०) आसारितत्रयं लक्षयति—**आसारितत्रयमित्यादि । तस्य;** आसारितत्रयस्य, **वर्णालंकारशोभनावृत्तिः, वृत्तित्रयेण;** चित्रावृत्तिदक्षिणानां त्रयेण, **तत्त्वाद्यैः;** तत्त्वौघानुगतैः, **करणेन धातुना;** करणधातुना च प्रत्येकमष्टभिः कर्तव्येत्यर्थः ॥ २३९–२४० ॥

आलापिनीगतं लक्ष्म वक्ष्ये लक्ष्यविदां मतम् ॥ २४१ ॥
नवमुष्टिमितो दैर्घ्ये वैणवः सुषिरान्तरः ।
अङ्गुलद्वन्द्वपरिधिः प्राग्वद् ग्रन्थ्यादिवर्जितः ॥ २४२ ॥
श्लक्ष्णः समः सुवृत्तश्च दण्डः स्यात्ककुभं दधत् ।
अङ्गुलद्वयविस्तारमङ्गुलार्धायतं तथा ॥ २४३ ॥
तदर्धे पिण्डसंयुक्तमुन्मुखं पत्रिकोज्झितम् ।
एकदण्डमधोभागे शङ्कुना तु विराजितम् ॥ २४४ ॥
चतुरङ्गुलदैर्घ्येण बहिर्मध्योन्नतेन च ।
तस्य तुम्बं परीणाहे द्वादशाङ्गुलसंमितम् ॥ १४५ ॥
चतुरङ्गुलवक्त्रं च दन्तनाभिसमन्वितम् ।
अग्रादधस्तात्पादोने मुष्टियुग्मे निबध्यते ॥ २४६ ॥
अत्र मेषान्त्रतन्त्री स्यात्सूक्ष्मा श्लक्ष्णा समा दृढा ।
कर्परं नारिकेलोत्थं दोरकः सारिकास्तथा ॥ २४७ ॥
त्रीण्येतानि निबध्यन्ते यत्र सालापिनी मता ।

(सु०) आसारितत्रयं लक्षयति—आसारितेति । त्रिविधमासारितं तालाध्याये उक्तमपि यथाक्षरं द्विसंख्यातं त्रिसंख्यातमिति, तस्य प्रत्येकमावृत्तित्रयं वर्णालंकारशोभनाभेदं पूर्वोक्तचित्रादिवृत्तित्रयेण तत्त्वाद्यैश्च वाद्यैः, करणधातुना च इह वीणाविधौ बुधैः विचित्रं कार्यम् ॥ २३९, २४०- ॥

इत्यासारितत्रयम्

इति नकुलादिपञ्चवीणालक्षणम्

**(क०)** आलापिनीलक्षणमाह—**आलापिनीगतमिति।** आलापिन्याः किंनरीभेदानां लघ्वादीनां च लक्षणानि विस्पष्टार्थत्वात् ग्रन्थत एवावगन्तव्यानि ॥ २४१–३२७- ॥

दशमुष्टिमितं दण्डमत्राहुः खादिरं परे ॥ २४८ ॥
पट्टसूत्रमयीं तन्त्रीं यद्वा कार्पाससूत्रजाम् ।
रक्तचन्दनजान्सर्वान् वीणादण्डान्परे जगुः ॥ २४९ ॥
दशमुष्टयधिकं मानं क्वचिल्लक्ष्येषु दृश्यते ।
तुम्बं वक्षसि निक्षिप्य वामाङ्गुष्ठेन तस्य च ॥ २५० ॥
मूलमुत्पीड्य धृत्वा तामथ मध्यमया सुधीः ।
दक्षिणस्यानामया वा वादयेद्बिन्दुधातुवत् ॥ २५१ ॥

(सु०) आलापिनीलक्षणमाह—आलापिनीगतमिति । वेणो' नवमुष्टिपरिमितो दीर्घत्वे दण्ड: स्यात् । अङ्गुलद्वयं परिधि: वर्तुलप्रमाणं यस्य; प्राग्वत्; एकतन्त्रीदण्डवत्; ग्रन्थ्यादिवर्जित:; ग्रन्थिभेदादिवर्जित:; श्लक्ष्ण:; मसृण:; सम:; आदिमध्यावसानेषु समप्रमाण:; सुवृत्त:; वर्तुलश्च; अङ्गुलद्वयविस्तार:, तथा अर्धाङ्गुलायाम: तदर्धं पिण्डसंयुक्तम्, उन्मुखम्; ऊर्ध्वमुखं यस्य, पत्रिकया उज्झितं हीनम्, एकेन दण्डेन युक्ता, अधोभागे; अध:प्रदेशे तु चतुरङ्गुलदैर्ध्येण, बहि:प्रदेशे मध्येन चोन्नतेन शङ्कुना विराजितं ककुभं दधत् दण्ड: स्यादिति संबन्ध: । तस्य दण्डस्य अग्रात् अधस्तात् तुम्बं दधत्, अधश्चतुर्थांशे नवमुष्टिद्वये द्वादशाङ्गुलसंमितं चतुरङ्गुलमुखं च नागदन्तनाभियुक्तं निबध्यते । अत्रेति । अत्र; आलापिन्याम्, मेषस्य अजस्य आन्त्रेण तन्त्री कार्या । नारिकेलोत्थं कर्परं, दोरक:, सारिकाश्च, एतानि त्रीणि यत्र निबध्यन्ते सा आलापिनी ज्ञातव्या । मतान्तरमाह—दशेति । अत्र, परे; आचार्या: दशमुष्टिमितं खादिरं दण्डमाहु: । यद्वा पट्टसूत्रमयी कार्पाससूत्रमयी वा तन्त्री कार्या । परे; आचार्या: रक्तचन्दनजान् सर्वान् वीणादण्डान् जगु: ॥ -२४१-२४९- ॥

(सु०) आलापिनीवादनप्रकारमाह—तुम्बमिति । वक्षसि तुम्बं निक्षिप्य स्थापयित्वा, वामाङ्गुष्ठेन तस्य तुम्बस्य मूलं निष्पीड्य मध्यमया अङ्गुल्या तामालापिनीं धृत्वा, दक्षिणहस्तस्य अनामिकया पूर्वोक्तबिन्दुधातुवत् वादयेत् ।

बिन्दुहस्तेन वा मन्द्रे मध्ये तारे च वादयेत् ।
त्रयस्तु दक्षिणात्पाणेश्चत्वारो वामतः स्वराः ॥ २५२ ॥
इत्युक्तं कैश्चिदाचार्यैरपरे त्वन्यथा जगुः ।
मध्यमो मुक्तया तन्त्र्या तर्जन्याद्यङ्गुलीत्रयात् ॥ २५३ ॥
वामस्यानामिकावर्ज्यात्त्रयः स्युः पञ्चमादयः ।
मुक्ततन्त्र्याथ षड्जः स्यादृषभस्तर्जनीभवः ॥ २५४ ॥
गान्धारो मध्यमाङ्गुल्या दक्षिणेनाथ वादनम् ।
आरोहेणावरोहेण सप्तकद्वितये भवेत् ॥ २५५ ॥
एभिः स्वरैर्विरचितं विचित्रं रागमालपेत् ।
गायेद्गीतं निबद्धं च प्रवीणो वीणयानया ॥ २५६ ॥
इदमालापिनीलक्ष्म श्रीनिःशङ्केन कीर्तितम् ।

इत्यालापिनीलक्षणम्

किंनरी द्विविधा लघ्वी बृहती चेति कीर्तिता ॥ २५७ ॥

त्रयः स्युरिति । दक्षिणपाणिना वादनात् त्रयः स्वराः, वामपाणिना चत्वारः स्वरा इति केचित् आचार्या आहुः । अपरे तु अन्यथा आहुः । मुक्तया अप्रतिबद्धया तन्त्र्या मध्यमः मध्यमस्वरः वामहस्तस्य अनामिकया विना तर्जन्यादिभिः तिसृभिरङ्गुलीभिः क्रमात् पञ्चमादयः, पञ्चमधैवतनिषादाः । अथ विमुक्तया तन्त्र्या षड्जः ; ततो दक्षिणहस्ततर्जन्या ऋषभः ; मध्यमाङ्गुल्या गान्धार इति । अथ स्वरवादनप्रकारपरिज्ञानानन्तरम्, सप्तकद्वितये आरोहावरोहाभ्यां कार्यम् । एभिः ; सप्तकद्वयस्थैः स्वरै रागालापं कुर्यात् । तस्मिन् निबद्धं गीतं चानया आलापिन्या वीणया गायेत् ॥ -२५०—२५६- ॥

इत्यालापिनीलक्षणम्

(सु०) किंनरीं लक्षयितुं विभजते—किंनरीति । किंनरी द्विविधा,

तत्र लघ्वीगतं लक्ष्म सांप्रतं प्रतिपाद्यते ।
स्याद्वितस्तित्रयं दैर्घ्ये मानं पञ्चाङ्गुलाधिकम् ॥ २५८ ॥
पञ्चाङ्गुलः परीणाहो वेणुदण्डस्य यत्र च ।
गर्भेऽस्य व्यापकं रन्ध्रं ककुभः शाकदारुजः ॥ २५९ ॥
सार्धद्वयङ्गुलविस्तारो दैर्घ्ये पञ्चाङ्गुलश्च सः ।
तस्मादर्धाङ्गुलन्यूना दैर्घ्यविस्तारयोर्भवेत् ॥ २६० ॥
मध्ये कूर्मोन्नता लौही पत्रिका ककुभस्थिता ।
गृध्रवक्षोऽस्थिनलिका कनिष्ठाङ्गुलिसंमिता ॥ २६१ ॥
लौही कांस्यमयी यद्वा कीर्तिता सारिकाख्यया ।
श्लिष्टा वस्त्रमषीमिश्रमर्दनेन चतुर्दश ॥ २६२ ॥
चतुर्दश स्वरस्थाने दण्डपृष्ठे निवेशयेत् ।
सप्तकस्य द्वितीयस्य यो निषादो भवेदधः ॥ २६३ ॥

द्विप्रकारा—लघ्वी बृहती चेति । तत्र लघ्व्या लक्षणं प्रतिज्ञाय कथयति—स्यादिति । वेणुदण्डस्य दीर्घत्वे मानं पञ्चाङ्गुलाधिकवितस्तित्रयं परिमाणम् । परिणाहो वर्तुलप्रमाणं पञ्चाङ्गुलम् । अस्य; वेणुदण्डस्य, गर्भे मध्ये व्यापकं वेत्ररन्ध्रं शाककाष्ठजः सार्धाङ्गुलद्वयमायामः, पञ्चाङ्गुलः ककुभः, तस्मात् ककुभात् दैर्घ्ये आयामे च अर्धाङ्गुलन्यूना मध्ये कूर्मवदुन्नता च लोहमयी पत्रिका ककुभे वर्तमाना कार्या । गृध्रेति । गृध्रनामानः पक्षिणः, तेषाम् अस्थिनलिका, सच्छिद्रा अस्थिखण्डा कनिष्ठाङ्गुलिप्रमाणा लोहमयी कांस्यमयी वा सच्छिद्रा नलिकाश्च चतुर्दशसंख्याकाः, दग्धवस्त्रमषीमिश्रेण सिक्थकेन मर्दनेन समुत्थेन श्लिष्टा दण्डस्य पृष्ठे तललग्नाः चतुर्दशस्वरस्थाने स्थापयेत् ॥ -२५७–२६२- ॥

(सु०) स्थापनाप्रमाणमाह—सप्तकस्येति । द्वितीयस्य सप्तकस्य अधःस्थाने यो निषादः, तस्य स्थाने प्रथमा सारिका किंचिदङ्गुलाधिका, अन्तरे

तस्य स्थाने भवेदाद्या सारिकान्योर्ध्वमङ्गुलात् ।
स्थापयेदन्तरे किंचित्किंचित्पूर्वाधिके परा ॥ २६४ ॥
द्व्यङ्गुलावध्यष्टमीं तु पूर्वस्यास्त्र्यङ्गुलान्तरे ।
स्थापयित्वा पराः षट् च पूर्वपूर्वाधिकान्तरे ॥ १६५ ॥
चतुरङ्गुलपर्यन्तं सारिकाः संनिवेशयेत् ।
तुम्बं दण्डस्थककुभस्याधःसंधौ निवेशयेत् ॥ २६६ ॥
तृतीयतुर्यसार्योस्तु मध्येऽधस्ताद् द्वितीयकम् ।
पूर्वस्मादपरं तुम्बं विस्तारेऽभ्यधिकं मनाक् ॥ २६७ ॥
दण्डाग्राद् द्व्यङ्गुलेऽधस्ताद्रन्ध्रं कृत्वाथ निक्षिपेत् ।
चलशङ्कुं गले रन्ध्रं दधमानमतोऽङ्गुलात् ॥ २६८ ॥
अधस्तादङ्गुलोत्सेधं मेढकं बाणपुङ्खवत् ।
कृत्वा ततोऽग्रतः किंचित्स्थिरशङ्कुं निवेशयेत् ॥ २६९ ॥
ततो लोहमयीं श्लक्ष्णां वर्तुलां च समां दृढाम् ।
गजकेशोपमां तन्त्रीं निबध्य ककुभे दृढम् ॥ २७० ॥

द्व्यङ्गुलायामा स्थाप्या । परा अष्टमी सारिकां तु सप्तम्याः सकाशात् त्र्यङ्गुला अन्तरप्रदेशे स्थाप्या । अन्यास्तु षट्सारिकाः पूर्वपूर्वापेक्षया किंचिदधिका, अन्तरे चतुरङ्गुलाः स्थाप्याः । तुम्बमिति । दण्डस्थककुभस्य अधःसंधौ तुम्बं निवेशयेत् । ततो द्वितीयमपि तुम्बं पूर्वतुम्बात् किंचिदधिकं विस्तारं तृतीयचतुर्थसारिकयोर्मध्यस्थाने स्थापयेत् । दण्डाग्रादिति । दण्डस्य अग्रात् द्व्यङ्गुलमित्यधस्तात् प्रदेशे रन्ध्रं कृत्वा चलं भ्रमणयोग्यं शङ्कुं कीलकं निक्षिपेत् । गले कण्ठप्रदेशे रन्ध्रं दधमानं दधतमिति शङ्कुविशेषणम् । ''दध धारणे'' (भ्वादिः, ८) इति भौवादिकस्य धातो रूपम् । **अङ्गुलोत्सेधं**; शङ्कोरङ्गुलादधस्तात् अङ्गुलोर्ध्वं शरपुङ्खवत् द्विशृङ्गमेढकं शङ्कुं कृत्वा, ततः किंचिदग्रतः स्थिरं भ्रमणयोग्यं शङ्कुं निवेशयेत् । ततः **गजकेशोपमाम्**;

सारिकामस्तकन्यस्तामानीतां मोढकोपरि ।
लग्नां द्वितीयप्रान्तेन वेष्टयेच्चलकीलके ॥ २७१ ॥
शङ्कुं तं भ्रामयेत्तावद्यावत्तन्त्री दृढा भवेत् ।
भ्रामणं वैपरीत्येन तन्त्रीशैथिल्यकारणम् ॥ २७२ ॥
तन्त्रीदैर्घ्येऽथ दार्ढ्याय चलशङ्कोर्गलस्थिते ।
छिद्रे न्यस्याथ संकीलं स्थिरशङ्कौ निवेशयेत् ॥ २७३ ॥
लघ्वी सा किंनरी प्रोक्ता शार्ङ्गदेवेन सूरिणा ।
अस्यां स्थायिनमारभ्य गणयेत्सप्तकद्वयम् ॥ २७४ ॥
सारीककुभयोर्मध्ये तर्जन्याद्यङ्गुलित्रयात् ।
वादयेत्किंनरीवीणातन्त्रीं दक्षिणपाणिना ॥ २७५ ॥
वामस्य तिसृभिस्ताभिरङ्गुलीभिस्तु तन्त्रिकाम् ।
तत्तत्सारीप्रदेशस्थां स्वरव्यक्त्यै निपीडयेत् ॥ २७६ ॥
वितस्त्यभ्यधिका दैर्घ्ये परिणाहेऽङ्गुलाधिका ।
लघ्व्याः स्याद् बृहती स्नायुमया तन्त्रीस्त्रितुम्बिका ॥ २७७ ॥

गजकेशवत् लोहमयीं तन्त्रीं दृढं ककुभे निबध्य सारिकामूर्धनि निबद्धमेढकोपरि आनीतां द्वितीयप्रान्तेन चलशङ्कुं वेष्टयेत् । तं चलशङ्कुं तावद्भ्रामयेत, यावद् दृढा तन्त्री भवेत् । तस्य शङ्कोः वैपरीत्येन भ्रमणं तन्त्र्याः शैथिल्यमापादयति । तन्त्री दीर्घे सति, अथ दार्ढ्याय दृढस्थितये चलशङ्कोः कण्ठरन्ध्रे कंचन लोहमयं कीलं स्थिरशङ्कौ स्थापयेत् । इयं लघ्वी किंनरीति । **अस्यामिति** । अस्यां किंनर्यां स्थायिनमंशस्वरमारभ्य सप्तकद्वयं गणयेत् । किंनरीवीणाया तन्त्री दक्षिणेन पाणिना सारीककुभयोर्मध्ये तर्जन्यादिभिर्वादयेदिति संबन्धः । वामहस्तस्य ताभिः तर्जन्यादिभिः तिसृभिः अङ्गुलीभिः सारीस्थस्वरव्यक्तये तन्त्रीं निपीडयेत् । बृहतीं किंनरीं लक्षयति—**वितस्तीति** । लघुकिंनर्याः सकाशात् बृहती किंनरी दीर्घत्वे वितस्त्या अधिकपरिणाह आयामे

आलापिनीवदस्यां च स्थाप्यं तुम्बं तृतीयकम् ।
अन्यल्लघ्वीगतं लक्ष्म बृहतीं किंनरीं श्रयेत् ॥ २७८ ॥

इति द्विविधकिंनरीलक्षणम्

किंनरीत्रितयं तत्र देशीसंसिद्धमन्यथा ।
बृहती मध्यमा लघ्वीत्यथासां लक्ष्म कथ्यते ॥ २७९ ॥
तिर्यग्यवोदरैः षड्भिर्निस्तुषैः स्यादिहाङ्गुलम् ।
बृहतीदण्डमानं स्याद्दैर्घ्ये पञ्चाशदङ्गुलम् ॥ २८० ॥
षडङ्गुलोऽत्र परिधिर्दण्डे दैर्घ्यं तु काकुभे ।
षडङ्गुलं शिरस्त्वस्य दैर्घ्यविस्तारयोर्भवेत् ॥ २८१ ॥
चतुरङ्गुलसंमानं द्व्यङ्गुलं तु तदुच्छ्रये ।
निक्षिपेत्काकुभं दण्डं वीणादण्डोत्तरे तथा ॥ २८२ ॥

अङ्गुलेनाधिका गोस्नायुरचिता तन्त्री यस्यां, तुम्बत्रययुता तृतीयं तुम्बं यस्याम् आलापिन्यां यथा स्थाप्यते तथैवास्यां स्थापनीयम् । अन्यत् लक्षणं बृहत्किंनरी लघुकिंनरीस्थमाश्रयति ॥ -२६३–२७८ ॥

इति द्विविधकिंनरीलक्षणम्

(सु०) अथ देशीप्रसिद्धं किंनरीत्रितयं लक्षयति—किंनरीति । तिस्रः किंनर्यो देशीप्रसिद्धाः । अन्यथा पूर्वोक्तकिंनरीद्वयात् विलक्षणा, बृहती मध्यमा लघ्वी चेति । तासां लक्षणानि कथयितुं परिभाषते—तिर्यगिति । यवतुषविहीनैः तिर्यक् स्थितैः षड्भिर्यवोदरैः, एकमङ्गुलं किंनरीलक्षणप्रकरणे ज्ञातव्यम् । बृहतीं किंनरीं लक्षयति—बृहतीति । बृहत्याः किंनर्याः दण्डस्य दीर्घमानं दीर्घत्वं पञ्चदशाङ्गुलानि । परिधिः वर्तुलमानं षडङ्गुलानि दण्डस्य ज्ञातव्यम् । ककुभे बन्धनीदैर्घ्ये षडङ्गुलमानम् । अस्य ककुभस्य शिरः दैर्घ्ये विस्तारे वा आयामे चतुरङ्गुलं कार्यम् ।

दण्डांशः परिशेषोऽत्र तावान्यावति शेषिते ।
वीणादण्डान्तककुभशिरोमध्यान्तरे स्थितः ॥ २८३ ॥
तन्त्रीभागस्तृतीयांशाधिकत्र्यङ्गुलको भवेत् ।
मध्ये कूर्मोन्नतां लौहीं पत्रिकां शिरसि क्षिपेत् ॥ २८४ ॥
परितोऽर्धाङ्गुलन्यूना शिरसोऽसौ प्रकीर्तिता ।
वीणाशीर्षादधस्ताच्च सार्धद्व्यङ्गुलतः स्थितम् ॥ २८५ ॥
ऊर्ध्वाधो दैर्घ्यभाग्रन्ध्रं विस्तारेऽर्धाङ्गुलायतम् ।
तिर्यग्दैर्घ्यं तावदन्यद्रन्ध्रं चोभयतोमुखम् ॥ २८६ ॥
तिर्यग्रन्ध्रे चलं शङ्कुमूर्ध्वरन्ध्रनिविष्टया ।
लौह्या सारिकया युक्तं न्यसेत्प्रान्तान्तरं पुनः ॥ २८७ ॥
सारिकायाः शिरोमूले बध्नीयात्काकुभे सुधीः ।
तन्त्रीरन्ध्रात्पुरः स्वाङ्घ्रिद्व्यङ्गुले मेढको भवेत् ॥ २८८ ॥

उच्छ्राये उत्सेधे द्व्यङ्गुलम् । ककुभस्य दण्डं वीणादण्डमध्ये निक्षिपेत् । दण्डांशः दण्डस्य अंशोऽवयवः, तावान् शेष्यः अवशेषणीयः, यावति शेषे अङ्गुलकः तृतीयांशाधिकः तन्त्र्या भागोऽवयवः वीणादण्डस्य अन्ते ककुभस्य शिरो मध्यान्तेषु स्थिरो भवेत् । मध्य इति । मध्ये कूर्मवत् उन्नतां लौहीं लोहघटितां पत्रिकां ककुभस्य मध्ये शिरसि शिरोमध्ये क्षिपेत् स्थापयेत् । असौ पत्रिका शिरसः परितः सर्वप्रदेशेभ्य अर्धाङ्गुलन्यूना युक्ता । वीणेति । वीणायाः शीर्षप्रदेशः, तस्मादधस्तात् द्व्यङ्गुले प्रदेशे स्थितमूर्ध्वमधश्च दीर्घरन्ध्रं कुर्यात् । तद्विस्तारः अर्धाङ्गुलप्रमाणम्, तिर्यक् दैर्घ्येऽपि तावत् अर्धाङ्गुलायामम्, एवं द्वितीयं रन्ध्रमुभयतोमुखं कुर्यात् । तत्र तिर्यग्रन्ध्रे चलं भ्रमणयोग्यं शङ्कुम् ऊर्ध्वरन्ध्रस्थितया लोहकृतया सारिकया नलिकया युक्तं न्यसेत् क्षिपेत् । सारिकायाः प्रान्तान्तरं पुनः काकुभे ककुभसंबन्धिनि शिरोमूले बध्नीयात् । तन्त्रीति । तन्त्रीरन्ध्रात् पुरः पूर्वप्रदेशे सपादद्व्यङ्गुल-

स च स्यात्कर्तरीयुक्तो गले रन्ध्रान्वितोऽथवा ।
कर्तर्या गलरन्ध्रे वा सारिका तां निवेशयेत् ॥ २८९ ॥
तद्रन्ध्रे दण्डान्तरालं विदध्यात्सयवाङ्गुलम् ।
मेढकात्पुरतः शङ्कुः स्थिरः सार्धाङ्गुलान्तरे ॥ २९० ॥
तिर्यग्रन्ध्रे निवेशोऽस्य चलशङ्कुवदिष्यते ।
चलशङ्कुभ्रामणादि ज्ञेयं पूर्वोक्तरीतितः ॥ २९१ ॥
गृध्रवक्षोस्थिजा यद्वा तत्पादास्थिसमुद्भवाः ।
कांस्यमय्योऽथवा लौह्यो नलिकाः सारिका मताः ॥ २९२ ॥
सार्धाङ्गुलास्ताः परिधौ दण्डपृष्ठे निवेशयेत् ।
यन्मेढकशिरोमध्यादुपक्रम्यान्तरं भवेत् ॥ २९३ ॥
सारीमस्तकमध्यानां तदिदानीं निरूप्यते ।
आद्यान्तरं तत्र यवाधिकं पञ्चाङ्गुलं मतम् ॥ २९४ ॥
द्वितीयमन्तरालं तु चतुरङ्गुलमुत्तरम् ।
तस्मात्तृतीयतुर्ये तु यवन्यूने मते सताम् ॥ २९५ ॥

प्रमाणकः मेढकः शङ्कुर्भवेत् । स च कर्तरीयुक्तो रन्ध्रयुक्तो वा कार्यः । तत्र कर्तर्या गलरन्ध्रे वा सारिकां निवेशयेत् । तद्रन्ध्रेति । तस्य रन्ध्रस्य दण्डस्य च मध्यं यवाधिकैकाङ्गुलमितं कुर्यात् । मेढकात् पूर्वप्रदेशे स्थिरं भ्रमणयोग्यं शङ्कुं सार्धाङ्गुलान्तरे तिर्यग्रन्ध्रे चलशङ्कुप्रकाशने निवेशनीयः । अस्य शङ्कुभ्रमणं तन्त्रीदार्ढ्यार्थम्; शैथिल्यार्थं विपरीतभ्रमणं वा स्थिरतरार्थं च कीलकबन्धनं पूर्ववत् ज्ञेयम् । गृध्रेति । गृध्रस्य वक्षःस्थितं यदस्थि तदुद्भवाः नलिकाः कर्तव्याः । यद्वा; अथवा गृध्रपादास्थिजाताः, अथवा कांस्यघटिताः, आहोस्वित् लोहमय्यः, ताः सार्धाङ्गुलप्रमाणाः परिधौ वर्तुलप्रमाणे दण्डस्य पृष्ठे स्थापयेत् । मेढकस्य शिरोमध्यमारभ्य सारीशिरोमध्यानां यदन्तरं तत्प्रतिज्ञायाह—आद्यान्तरमिति । तत्रेति । तत्र तस्यां किंनर्याम्, आद्य-

यवाधिकत्र्यङ्गुलं तु ज्ञेयं पञ्चममन्तरम् ।
यवोनद्व्यङ्गुलं षष्ठं सयवद्व्यङ्गुलं पुनः ॥ २९६ ॥
अन्तरालं सप्तमं स्यात्सार्धद्व्यङ्गुलमष्टमम् ।
नवमं तु यवार्धोनं सार्धाङ्गुलमितं मतम् ॥ २९७ ॥
दशमं द्व्यङ्गुलं हीनं यवोनैकादशं ततः ।
द्वादशं तु तृतीयांशन्यूनं तस्मात्त्रयोदशम् ॥ २९८ ॥
सतृतीयांशाङ्गुलं स्यादङ्गुलं तु चतुर्दशम् ।
द्वितीयान्तरतोऽधस्तान्न्यस्येत्तुम्बमधोमुखम् ॥ २९९ ॥
अन्यत्ककुभमूर्ध्वाधस्तुम्बकं संनिवेशयेत् ।
षट्त्रिंशदङ्गुलं चक्रे परिधिस्त्वाद्यतुम्बके ॥ ३०० ॥
किंचिन्न्यूनं त्वधस्तुम्बं परिधौ स्यादधस्तनम् ।
ईषदस्पष्टसरिका सारिकास्ता निवेशयेत् ॥ ३०१ ॥
मर्दनेनेष्टकाचूर्णमिश्रेण श्लेषणं दृढम् ।
सारीणामथवा वस्त्रमषीमिश्रेण संमितम् ॥ ३०२ ॥

मन्तरं यवाधिकपञ्चाङ्गुलम्; द्वितीयमन्तरं तु चतुरङ्गुलम्; तृतीयं चतुर्थं च द्वितीयवत् यवन्यूनचतुरङ्गुलम्; पञ्चमं तु यवाधिकत्र्यङ्गुलं ज्ञेयम्; षष्ठमन्तरं यवोनत्र्यङ्गुलम्; सप्तममन्तरालं पुनः सयवद्व्यङ्गुलम्; अष्टमं सार्धद्व्यङ्गुलम्; नवमं तु अर्धयवोनं सार्धाङ्गुलम्; दशमं द्व्यङ्गुलम्; एकादशं तु यवहीनं द्व्यङ्गुलम्; द्वादशं तु तस्मादेकादशात् तृतीयांशादूनम्; त्रयोदशमङ्गुलतृतीयांशहीनम्; चतुर्दशमेकाङ्गुलप्रमाणकमिति । द्वितीयेति । द्वितीयान्तरस्य अधस्तात् अधोमुखं न्यस्येत् । अन्यद् द्वितीयं तु वक्त्रं ककुभस्य शिरसोर्ध्वस्थं स्थापयेत् । प्रथमतुम्बस्य वक्त्रे परिधिः वर्तुलप्रमाणं षट्त्रिंशदङ्गुलानि । ततोऽधस्तने तुम्बे पूर्वतुम्बात् परिधौ किंचिन्न्यूनं स्यात् । ईषदिति । सारिकाः किंचित् अस्पृष्टसारिकापृष्ठे तन्त्रिका वा निवेशयेत् ।

मुक्ततन्त्रीभवं कृत्वा स्वरमाद्यं चतुर्दशम् ।
स्वराः परे स्युः सारीणां चतुर्दशभिरन्तरैः ॥ ३०३ ॥
सप्तकद्वयमेवं स्यादेकतारस्वराधिकम् ।
यथास्वं स्वरदेशांशैः श्रुतिस्तस्या वितन्वते ॥ ३०४ ॥
द्वित्रास्ततोऽधिकाः सारीर्निबध्नीयात्परे त्विह ।
लक्षयन्त्यन्तराण्यासां स्वराविर्भावतो बुधाः ॥ ३०५ ॥
श्रीशार्ङ्गदेवोपदेशात्तद्बोधः सुलभो नृणाम् ।
केचित्त्रयोदशैवात्र सारीर्निदधते बुधाः ॥ ३०६ ॥
बृहती किंनरीत्येषा शार्ङ्गदेवेन कीर्तिता ।

इति बृहती किंनरी

मध्यमायां दण्डदैर्घ्यं त्रिचत्वारिंशदङ्गुलम् ॥ ३०७ ॥
परिधिर्दृश्यते तत्र द्वियवोनषडङ्गुलः ।
सार्धत्र्यङ्गुलविस्तारं प्राग्दैर्घ्यं काकुभं शिरः ॥ ३०८ ॥

सारीणां विशेषणं संयोजनमिष्टकाचूर्णमिश्रेण मर्दनेन कार्यम् । अथवा वस्त्रमषीमिश्रेण कटयोर्विमुक्तया तन्त्र्या जातं प्रथमं स्वरं च कृत्वा सारीणां चतुर्दशभिरन्तरैः मध्यप्रदेशैरन्त्ये चतुर्दश स्वराः स्युः। एवं पञ्चदशभिः स्वरैः मन्द्रसप्तकं, मध्यसप्तकं स्यात् । तारसप्तकस्य एकस्वरोऽधिको भवति । स्वरप्रदेशानामंशैः यथास्वं, द्विश्रुतौ स्वरे द्वाभ्यामंशाभ्याम्, त्रिश्रुतौ त्रिभिरंशैः, चतुःश्रुतौ चतुर्भिरंशैः श्रुतिः वितन्वते विस्तारयन्तीति । मतान्तरमाह— द्वित्रा इति । एषा बृहती किंनरी शार्ङ्गदेवेनोक्ता ॥ २७९–३०६- ॥

इति बृहती किंनरी

(सु०) मध्यमां किंनरीं लक्षयति—मध्यमायामिति । मध्यमायां किंनर्यां दण्डस्य त्रिचत्वारिंशदङ्गुलप्रमाणकं दैर्घ्यं परिधिः वर्तुलप्रमाणं तु दण्डस्य यव-

क्षिपेत्ककुभदण्डस्य वीणादण्डेऽङ्गुलत्रयम् ।
तावांश्च परिशेषेऽसौ यावतः परिशेषणे ॥ ३०९ ॥
दण्डान्तशीर्षमध्यान्तः सारिकावयवस्थितिः ।
तृतीयभागरहिताङ्गुलत्रयमितो भवेत् ॥ ३१० ॥
दण्डान्ते सारिकोत्सेधः स्याद्यवोनाङ्गुलद्वयः ।
तदर्धो मेढकोपान्त्ये सारीणामन्तरं त्विह ॥ ३११ ॥
प्रथमं प्रथितं प्राज्ञैः सार्धाङ्गुलचतुष्टयम् ।
द्वितीयमन्तरं मेयं सयवैरङ्गुलैस्त्रिभिः ॥ ३१२ ॥
तृतीयं तु तृतीयांशाभ्यधिकैस्त्रिभिरङ्गुलैः ।
चतुर्थं त्र्यङ्गुलं प्रोक्तं पञ्चमं सारिकान्तरम् ॥ ३१३ ॥
यवाधिकाभ्यां सार्धाभ्यामङ्गुलाभ्यां मितं मतम् ।
षष्ठं यवद्वयन्यूनद्व्यङ्गुलं सप्तमं पुनः ॥ ३१४ ॥
सयावार्धाङ्गुलद्वन्द्वमष्टमं त्वङ्गुलद्वयम् ।
अङ्गुलं सयवद्वन्द्वं नवमं दशमं पुनः ॥ ३१५ ॥
यवोनमङ्गुलद्वन्द्वमन्तरत्रितयं पुनः ।
इतः परस्याः प्रत्येकं सपादाङ्गुलसंमितम् ॥ ३१६ ॥

इति मध्यमा किंनरी

द्वयोनानि षडङ्गुलानि । काकुभं ककुभसंबन्धि शिरः सार्धाङ्गुलत्रयविस्तारं दैर्घ्यं स्यात् । क्षिपेदिति । वीणादण्डे ककुभदण्डमङ्गुलित्रयं क्षिपेत् । असौ ककुभदण्डस्तावत् परिशेषणीयः । यावतः परिशेषणे क्रियमाणे दण्डादिषु स्थितः तृतीयभागहीनाङ्गुलित्रयमितो भवति दण्डस्य अन्ते प्रान्ते वर्तमानायाः सारिकाया उत्सेधः यवोनमङ्गुलद्वयं, मेढकोपान्ते वर्तमानायाः सारिकाया उत्सेधः तस्मादर्धः । सारीणामन्तरप्रदेशप्रमाणमाह—सारीणामिति । प्रथममन्तरं सार्धमङ्गुलचतुष्टयं प्राज्ञैः प्रथितं विस्तारितम्; द्वितीयमन्तरं यवाधिक-

विशेषोऽयमिहान्यत्तु लक्ष्म स्याद् बृहतीगतम् ।
लघ्वीदण्डगतं दैर्घ्यं स्यात्पञ्चत्रिंशदङ्गुलम् ॥ ३१७ ॥
परिधिस्तु तृतीयांशाभ्यधिकाङ्गुलपञ्चकः ।
अङ्गुलत्रयविस्तारं ककुभस्य शिरो भवेत् ॥ ३१८ ॥
पूर्ववत्काकुभो दण्डो वीणादण्डे निधीयते ।
परिशेषस्तथा सा स्याद्यथा दण्डान्ततन्त्रिका ॥ ३१९ ॥
आ ककुभशिरोमध्याद्भवेत्त्र्यङ्गुलसंमिता ।
दण्डान्ते सारिकोत्सेधः स्यात्सार्धाङ्गुलसंमितः ॥ ३२० ॥
तदर्धे मेढकोपान्ते तत्राद्यं सारिकान्तरम् ।
प्रोक्तं यवेनाभ्यधिकैश्चतुर्भिर्मितमङ्गुलैः ॥ ३२१ ॥

मङ्गुलेन मेयं मातव्यम्; तृतीयमन्तरमङ्गुलतृतीयांशाधिकैः त्रिभिरङ्गुलैर्मातव्यम्; चतुर्थमन्तरं त्र्यङ्गुलेन; पञ्चमं यवाधिकसार्धद्व्यङ्गुलम्; षष्ठं यवद्वयेन हीनं द्व्यङ्गुलम्; सप्तमं यवसहितं सार्धाङ्गुलद्वयम्; अष्टमं द्व्यङ्गुलयवद्वयाधिकम्; नवमं दशमं च यवोनाङ्गुलद्वयम्; दशमादनन्तरमवयवत्रयसपादाङ्गुलप्रमाणम् । अयं विशेष उक्तः । इह अन्यत्तु लक्ष्म लक्षणं तु बृहतीगतं मध्यमकिंनर्या ज्ञातव्यम् ॥ -३०७–३१६- ॥

इति मध्यमा किंनरी

(सु०) लघ्वीं किंनरीं लक्षयति—लघ्वीति । लघ्व्याः किंनर्या दण्डं पञ्चत्रिंशदङ्गुलं दैर्घ्यं ज्ञातव्यम् । अङ्गुलत्रितयांशाधिकं पञ्चाङ्गुलं परिधिः, ककुभस्य शिरः त्र्यङ्गुलं स्यात् । वीणादण्डे ककुभदण्डस्य परिशेषः तथा कर्तव्यः यथा दण्डान्तरं ककुभशिरोमध्यं व्याप्य त्र्यङ्गुलं स्यात् । सारिकान्तरमाह—तत्रेति । प्रथमं सारिकान्तरं यवाधिकचतुरङ्गुलम्; द्वितीयं यवद्वयाधिकं द्व्यङ्गुलम्; तृतीयमेकयवोनं द्व्यङ्गुलम्; तुर्यं चतुर्थांशन्यूनं

द्वितीयं द्वियवोपेताङ्गुलद्वन्द्वमितं भवेत् ।
यवोनाभ्यामङ्गुलीभ्यां तृतीयं मीयते बुधैः ॥ ३२२ ॥
पादोनत्र्यङ्गुलं तुर्यमथ पञ्चममन्तरम् ।
यवार्धोनाङ्गुलद्वन्द्वं षष्ठं सार्धाष्टभिर्यवैः ॥ ३२३ ॥
सप्तमं तु यवोनेनाङ्गुलद्वन्द्वेन मीयते ।
सार्धाङ्गुलं त्वष्टमं स्यान्नवमं त्वष्टभिर्यवैः ॥ ३२४ ॥
दशमैकादशे प्रोक्ते सपादाङ्गुलके पृथक् ।
यवन्यूनाङ्गुलमितं द्वादशं च त्रयोदशम् ॥ ३२५ ॥
अन्यत्तु लघुकिंनर्या लक्ष्म पूर्ववदिष्यते ।
न बृहत्यधिकं मानं न हीनं त्रिंशदङ्गुलात् ॥ ३२६ ॥
आदर्तव्यं किंनरीणां रक्तिमाधुर्यवर्जनात् ।
एतयोरन्तराले तु यथेष्टं मानकल्पना ॥ ३२७ ॥

इति लघ्वी किंनरी

त्र्यङ्गुलम्; पञ्चममर्धयवन्यूनं द्व्यङ्गुलम्; षष्ठं सार्धैरष्टभिर्यवैर्युक्तम् । अयं तु लक्षणे विशेष उक्तः—सप्तमं तु यवोनेन अङ्गुलद्वयेन मीयते; अष्टमं तु सार्धाङ्गुलेन; नवमं त्वष्टभिर्यवैः; दशमैकादशे पृथक् सपादाङ्गुलके प्रोक्ते; द्वादशं त्रयोदशं च यवन्यूनाङ्गुलमितं कार्यम् । अन्यत् सर्वं लक्ष्म लघुकिंनर्या पूर्ववत् ज्ञातव्यम् । न बृहत्यधिकमिति; किंनरीणां बृहत्यधिकं त्रिंशदङ्गुल-दीर्घमाने हीनं नादर्तव्यम् । कुतः? रक्तिमाधुर्ययोः वर्जनात्, लोपादित्यर्थः । एतयोः; मध्यमलघ्व्योः किंनर्योः स्वेच्छया अन्तरालमानं कल्पयित्वा स्वर-स्थानानि ज्ञातुं, तद्विदः; वैणिकाः समर्थाः ॥ -३१७–३२७- ॥

इति लघ्वी किंनरी

शक्ता विवेक्तुमत्रापि स्वरस्थानानि तद्विदः ।
प्रदर्शनार्थं केषांचिद्रागाणां वादनक्रमम् ॥ ३२८ ॥
अस्यां किंनरवीणायां वक्ति श्रीकरणेश्वरः ।
स्थायिनं मध्यमं मन्द्रं मध्यं वा स्थायिनः परान् ॥ ३२९ ॥
आरुह्य पनिसान्पश्चावरोह्य क्रमतः स्वरान् ।
षड्जतः स्थायिपर्यन्ताद्यदाहन्यात्तु धैवतम् ॥ ३३० ॥
मध्यमादेः समाख्यातं स्वस्थानं प्रथमं तथा ।
द्व्यर्धमर्धस्थितं तद्वदारुह्य द्विगुणं स्वरम् ॥ ३३१ ॥
आद्यं स्वस्थानमातिष्ठेत्स्वस्थानत्रितये परे ।
असंभवे पूर्वपूर्वस्वरस्य तु परं परम् ॥ ३३२ ॥
क्रमेण स्वरमारोहेत्सर्वरागेष्विति स्थितिः ।

इति मध्यमादिः

(क०) अथ किंनरीवीणायां केषांचिदधुना प्रसिद्धानां रागाणां वादनक्रमं दर्शयितुमाह—**प्रदर्शनार्थमित्यादिना** । तत्रादौ मध्यमादेः स्वस्थानचतुष्टये स्वरसंनिवेशमाह—**स्थायिनं मध्यममित्यादि** । **मन्द्रं** मध्यमं **मध्यं** मध्यमं वा **स्थायिनं** कृत्वा, स्थायिनं रागस्थितं स्थानमित्यर्थः । तथैव स्थायिलक्षणं प्रागेवोक्तम्; 'यत्रोपविश्यते रागः स्वरे स्थायी स कथ्यते' इति । स्थायिमन्द्रमध्यमात् मध्यममध्यमाद्वा, **परान् पनिसान्**, **आरुह्येति**; अनेनास्मिन् रागे धैवतस्य तत्संवादिन ऋषभस्य च वर्ज्यत्वमवगन्तव्यम् । **क्रमतः** षड्जतः स्थायिपर्यन्तान् पञ्चस्वरानवरुह्य, सनिधपमानित्यर्थः । अनेन अवरोहे क्वचिद्वर्जस्यापि स्वरस्योच्चारणं रागहानिकरत्वाभावेनाभ्युपगन्तव्यं भवति । **यदाहन्यात्तु धैवतमिति**। धैवतस्वरमाहतं गमकयुक्तं कुर्याच्चेदित्यर्थः । तदा मध्यमादेः प्रथमं स्वस्थानं भवति । **परे स्वस्थान-**

**किंनरीवादकाः प्रायः स्थायिनं पञ्चमं स्वरम् ॥ ३३३ ॥**
**रागे कुर्वन्ति बङ्गाले तदज्ञानविजृम्भितम् ।**

**त्रितय इति** । द्वितीयतृतीयचतुर्थेषु स्वस्थानेष्वित्यर्थः । द्वितीये द्व्यर्धस्वरमारुह्य, **द्व्यर्ध** इति स्थायिनश्चतुर्थस्वर उक्तः । तृतीये **अर्धस्थितं** स्वरमारुह्य द्व्यर्धद्विगुणमध्यस्योर्ध्वस्थित उक्तः । चतुर्थे द्विगुणं स्वरमारुह्य, द्विगुणो नाम स्थायिस्वरादष्टम उक्तः । तत्र आरुह्येत्यस्यायमर्थः—द्व्यर्धादिषु स्थित्वा रागं प्रदर्शयेदिति । **आद्यं स्वस्थानमातिष्ठेदिति** प्रतिस्वस्थानं योज्यम् । सकलरागसाधारणं न्यायं दर्शयति—**असंभव इत्यादि** । पूर्वपूर्वस्वरस्यासंभवस्तु तस्य वर्ज्यत्वेन द्रष्टव्यः ॥ -३२८—३३२- ॥

इति मध्यमादिः (१)

(सु०) एवं वीणास्वरूपमुक्त्वा विदिक्प्रदर्शनाय केषांचिद्रागाणां वादनक्रमं वक्तुं प्रतिजानीते—**प्रदर्शनार्थमिति** । **स्थायिनमिति** । मन्द्रस्थानस्थं मध्यस्थानस्थं वा मध्यमस्वरं स्थायिनमास्थाय कृत्वा, तत्परान् पनिसान् पञ्चमनिषादषड्जान् आरुह्य आरोहेण गत्वा, षड्जतः षड्जसकाशात् स्थायिमध्यपर्यन्तान् स्वरान् पञ्च क्रमादवरोहेत् । यदि धैवतमाहन्यात् ताडयेत् तदा मध्यमादिसंज्ञकस्य रागस्य प्रथमं स्वस्थानम् । द्व्यर्धमर्धस्थितं च स्वरमालतिलक्षणे लक्षितं स्वरं द्विगुणमारुह्य आद्यं स्वस्थानमातिष्ठेत् कुर्यात् । एवंविधं स्वस्थानत्रितयमन्यद्भवेत् । पूर्वपूर्वस्वराभावे परं परं स्वरं क्रमादारोहेत् । अयं मध्यमादिरागोक्त एव विधिः सर्वरागेषु बोद्धव्यः ॥ -३२८–३३२- ॥

इति मध्यमादिः (२)

(क०) अथ बङ्गालाख्यदेशीरागभेदस्य लक्ष्यलक्षणविरोधमुद्भाव्य परिहरति—**किंनरीवादका इत्यादि** । **तदज्ञानविजम्भितमिति** । तेषां

(सु०) **किंनरीवादका इति** । किंनर्या वादकाः सर्वेऽपि वैणिकाः

**ग्रहो हि मध्यमो रागस्यास्य शास्त्रे प्रकीर्तितः ॥ ३३४ ॥**
**यद्वा लक्ष्यप्रधानानि शास्त्राण्येतानि मन्वते ।**
**तस्माल्लक्ष्यविरुद्धं यत्तच्छास्त्रं नेयमन्यथा ॥ ३३५ ॥**
**मध्यमादिपदं ज्ञेयं पञ्चमाद्युपलक्षणम् ।**
**प्राथम्यसाम्यतो यद्वा नियमाद्दृष्टकल्पना ॥ ३३६ ॥**
**मध्यमादिग्रहे कार्या नन्वस्मिन्मध्यमे ग्रहे ।**
**अधस्तनः स्याद्गान्धारो मध्यमः पञ्चमे ग्रहे ॥ ३३७ ॥**
**तुर्यादिव्यत्ययेऽप्येवं रागसाम्यं कथं भवेत् ।**

लक्षणपरिज्ञानाभावात् तत्कृतं लक्ष्यमप्रामाणिकमित्यर्थः । शास्त्रोक्तं लक्षणं दर्शयति—**ग्रहो हीति** । एवं लक्षणविरोधात् लक्ष्यस्यासमीचीनतामुक्त्वा विषयव्यवस्थया अत्र लक्ष्यस्यैव प्राधान्यं दर्शयति—**यद्वा लक्ष्येति** । एतानि शास्त्राणि देशीविषयाणीत्यर्थः । **लक्ष्प्रधानानि ;** लक्ष्यमेव प्रधानं येषां तानि । मन्वते, आचार्या इति शेषः । तस्मात् कारणात् लक्ष्यविरुद्धं यत्तु शास्त्रं वङ्गालरागादेः मध्यमग्रहत्वाद्यभिधायकं **तच्छास्त्रम्—अन्यथानेयमिति** । यथा लक्ष्यविरोधि न भवति तथा व्याख्येयमित्यर्थः ॥ -३३३–३३५ ॥

वङ्गाले रागे पञ्चममंशस्वरं कुर्वन्ति । तदनुचितम् । यतोऽस्य वङ्गालस्य शास्त्रे मध्यमो ग्रहस्वर उक्तः, ग्रहसहचारित्वादंशस्य तेनैव चांशेन भवितव्यमिति । यद्वेति । अथवा संगीतशास्त्राणि लक्ष्यप्रधानानि । ततो लक्ष्याविरोधेन व्याख्येयानि ॥ -३३३–३३९ ॥

(क०) तदन्यथानयनप्रकारमेव दर्शयति—**मध्यमादिपदमिति** । पञ्चमाद्युपलक्षणत्वे हेतुमाह—**प्राथम्यसाम्यत इति** । अस्यायमर्थः—मूर्च्छनास्वरूपनिरूणावसरे, 'षड्जस्थानस्थितैर्न्याद्यै रजन्याद्याः परे विदुः' (सं. र. १-४-१४) इति देशीप्रपञ्चमभिसंधायोक्तम् । तेन देश्यां षड्जस्थान

एव निषादाद्याः समावेश्यन्ते। तदा सर्वेषामपि प्राथम्यं समानं भवति। अतः प्राथम्यसाम्येन हेतुना मध्यमादिपदं पञ्चमाद्युपलक्षणं भवतीति। तस्मादस्य वङ्गालस्य देशीरागत्वात् अत्र लक्षणे ग्रहत्वेन मध्यमस्य वचनं लक्ष्यप्रसिद्ध-पञ्चमोपलक्षणमिति लक्ष्यस्य प्राधान्यात् तद्विरोधिलक्षणं तदनुसारेण नेतव्य-मिति मन्तव्यम्। पक्षान्तरेण विरोधं परिहर्तुमाह—**यद्वेति**। मध्यमादिग्रहे वङ्गालादीनां लक्ष्यप्रसिद्धपञ्चमादिग्रहत्वपरिहारेण शास्त्रोक्तमध्यमादिग्रहत्वे कृते ग्रहे नियमाददृष्टकल्पना कार्या। अत्र रक्तिलाभ एव दृष्टं फलम्। तत्तु यथा तथा वा भवत्येव, स्थानस्यैकत्वादित्यनियमे प्रसक्ते शास्त्रेण नियमो विधीयते। तेन नियमेनादृष्टं फलं कल्प्यते। तस्मात् नियमानुष्ठाने-ऽभ्यधिकमदृष्टं फलं भवति; यथा प्राङ्मुखत्वेन भोजने। तथा वङ्गाल-स्यास्य मध्यमग्रहेऽभ्यधिकमदृष्टं फलमिति भावः। इमं पक्षमास्थाय चोदयति—**नन्विति**। **अस्मिन्**; वङ्गालरागे, **मध्यमे स्वरे ग्रहे** सति गान्धारस्तस्य मध्यमस्याधस्तनः स्यात्। पञ्चमे ग्रहे सति मध्यमः पञ्चम-स्याधस्तनः स्यात्। एवं पक्षद्वयेऽपि। **तुर्यादिव्यत्यय इति**। मध्यमस्य ग्रहत्वे निषादस्तुर्यः; पञ्चमस्य ग्रहत्वेऽपि षड्जस्तुर्यः; आदिशब्देनार्वस्थि-ताष्टमादयो गृह्यन्ते। एवं सर्वेषां स्वराणां व्यत्यये सति रागसाम्यं कथं भवेदित्याक्षेपः॥ ३३६, ३३७- ॥

तदेव व्याख्यानमाह—मध्यमादीति। अत्र मध्यमोऽंशः। प्राथम्यसाम्यत इति। अत्र मध्यमादिपदं पञ्चमादेरुपलक्षणम्, प्रथमप्रयुक्तत्वेन समानत्वात्। ततश्च स्वेच्छया यं कमपि स्वरं स्थायिनं कुर्यादित्यर्थः। अथवा यस्मिन् कस्मि-श्चित् स्वरे स्वेच्छया स्थायिनि रागे कृते उत्पद्यत एव। परं तु मध्यमे स्थायिनि कृते पुण्यविशेषो भवतीति नियमादृष्टार्थं मध्यमादिग्रहोक्तिरिति। आक्षिपति—नन्विति। ननु मध्यमेग्रहे क्रियमाणे अधस्तनो गान्धारः, पञ्चमे तु अधस्तनो मध्यमः। एवं मध्यमे ग्रहे तुर्यो निषादः, पञ्चमे ग्रहे षड्जः। एवं सर्वेषां स्वराणां व्यत्यये कथं रागसाम्यम्?॥ ३३६, ३३७- ॥

निःशङ्कोऽत्र समाधत्ते गान्धाराद्यप्रयोजकम् ॥ ३३८ ॥
किंतु स्थायिनमारभ्य ये स्युस्तुर्यादयः स्वराः ।
रागाभिव्यक्तिशक्ताः स्युर्नतु शास्त्रेष्वनर्थिका ॥ ३३९ ॥
षड्जाद्युक्तिः प्रसज्येत सत्यं तत्रोच्यते त्विदम् ।
मध्यमादिग्रहः शास्त्रे नियतस्तदपेक्षया ॥ ३४० ॥
तुर्यादयो निषादाद्या भवन्तीत्युपपद्यते ।

(क०) तस्य समाधानं कर्तुमाह—**निःशङ्कोऽत्रेति** । **गान्धाराद्यप्रयोजकमिति** । मध्यमे ग्रहे गान्धारोऽधस्तनः, आदिशब्देन पञ्चमे ग्रहे मध्यमोऽधस्तन इति च सर्वमप्रयोजकम् । **किंतु स्थायिनमारभ्येति** । षड्जस्थानस्थितं मध्यमस्थानस्थितं वा स्वरमारभ्य । **तुर्यादय इति** । तत्तत्स्थानप्राधान्येन तत्तद्ग्रहानुसारेण च नीतोऽधस्तात् तुर्यादयः स्वराः रागाभिव्यक्तिशक्ताः स्युरित्युत्तरम् । यद्येवं शास्त्रेषु षड्जाद्युक्तिरनर्थिकैवेति प्रसज्येतेति शङ्कते—**नन्विति** । **षड्जाद्युक्तिरिति** । षड्जादीनां ग्रहत्वाद्युक्तिरित्यर्थः । अर्धाङ्गीकारेण परिहरति—**सत्यमिति** । अत्र रक्तिलाभरूपदृष्टफलाय स्थानस्यैव प्रयोजकत्वात् तदर्थं षड्जाद्युक्तिरनर्थिकैवेत्यङ्गीकृतोऽंशः । तथापि नानर्थिका । अदृष्टफलापेक्षया शास्त्रे मध्यमादीनां नियतत्वादिति परिहारः । **तदपेक्षया**; शास्त्रनियतमध्यमादिग्रहापेक्षया निषादाद्यास्तुर्यादयो भवन्ति ॥ -३३८–३४०- ॥

(सु०) परिहरति—**निःशङ्क** इति । अत्र गान्धारनिषादादिप्रयोजकं न भवति । किंतु स्थाय्यपेक्षया अधस्तनत्वतुर्यादिरागाभिव्यक्तौ प्रयोजकमिति । पुनराक्षिपति—**नन्विति** । शास्त्रे षड्जादीनामुक्तिरेवं सत्यनर्थिकां प्राप्नोति । अर्धाङ्गीकारेण परिहरति—**सत्यमिति** । मध्यमादिग्रहोक्तिः शास्त्रे नियमादृष्टख्यापनार्थमित्युक्तम् । तदपेक्षया निषादादयः । एवं तुर्यादयोऽपीति नियमोपपत्तिः ॥ -३३८–३४०- ॥

**ग्रहांशन्यासनियमो यद्वा शास्त्रस्य गोचरः ॥ ३४१ ॥**
**गुम्फः स्वरान्तराणां तु लक्ष्यस्थो न विरुध्यते ।**
**सर्वत्र परिहारोऽयं लक्ष्ये लक्ष्माविरोधिनि ॥ ३४२ ॥**
**देशीरागेषु निर्णीतः शार्ङ्गदेवेन सूरिणा ।**

(क०) प्रकारान्तरेणाप्यनर्थकत्वं परिहर्तुमाह—**ग्रहांशेत्यादि** । **ग्रहांशन्यासनियमः**; ग्रहांशन्यासानामेव नियमः, **शास्त्रस्य गोचरः**; विषयः । **स्वरान्तराणां गुम्फ इति** । स्वरान्तराणि ग्रहांशन्यासेभ्योऽतिरिक्तानि, अपन्यासादयोऽन्तरमार्गस्वराश्चोच्यन्ते । तेषां गुम्फस्तु लक्ष्यस्थः शास्त्रेण न विरुध्यत इति वा अर्धाङ्गीकारेण परिहारः ॥ ३४१- ॥

(क०) उक्तः परिहारोऽन्यत्रापि योजनीय इत्याह—**सर्वत्रेति** । **देशीरागेष्विति** । रागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गरागा देशीरागा इति प्रागुक्ताः । तेष्वयं विरोधपरिहारो निर्णीत इति । अनेन शुद्धसाधारितादिषु ग्रामरागादिषु मार्गरागेषु लक्षणस्यैव प्राधान्यात् तदनुसारेण लक्ष्यस्योन्नेयत्वात् विरोध एव न प्राप्तः, तत्र कुतस्तत्परिहार इत्यभिप्रायो वेदितव्यः । तथाहि मूर्च्छनालक्षणावसरे;

'मध्यस्थानस्थषड्जेन मूर्च्छनारभ्यतेऽग्रिमा ।
अधस्तनैर्निषादाद्यैः षडन्या मूर्च्छनाः क्रमात् ॥' इति,

(सं० र० १-४-१२, १३)

(सु०) प्रकारान्तरेण परिहारमाह—यद्वेति । स्वरान्तराणामपि लक्ष्यस्थो गुम्फः ग्रहादित्वेन प्रयोगः शास्त्रस्य गोचर एव अनिषिद्धत्वात् । तस्मात् न विरुध्यत इति ॥ -३४१, ३४२- ॥

**मध्यमं स्थायिनं कृत्वा गान्धारात्तदधस्तनात् ॥ ३४३ ॥**
**पञ्चारुह्य निषादान्तान् गपर्यन्तावरोहणम् ।**
**कृत्वा स्थायिनिषादौ च विधायाहत्य धैवतम् ॥ ३४४ ॥**
**स्थाय्यन्तमवरोहेच्चेद्बङ्गालो जायते तदा ।**

इति बङ्गालः

तथा,

'मध्यमध्यममारभ्य सौवीरी मूर्च्छना भवेत् ।
षडन्यास्तदधोऽधःस्थस्वरानारभ्य तु क्रमात् ॥
(सं० र० १-४-१३, १४)

इति च जात्याद्यन्तरभाषान्तरमार्गविषयत्वेन यः पक्ष उक्तः तत्र षड्जादिग्रहत्वोक्तेरन्यथाभावाभावाद्विरोधो नोदेत्येवेत्यलम् ॥ -३४२, ३४२- ॥

(क०) एवं देशीरागविषययोर्लक्ष्यलक्षणयोर्विरोधं परिहृत्य प्रकृतमनुसंदधानो बङ्गालरागस्य स्वरसंनिवेशं दर्शयति—**मध्यमं स्थायिनमित्यादि** । तदधस्तनात् गान्धारादिति ल्यब्लोपे पञ्चमी । गान्धारमारभ्येत्यर्थः । **निषादान्तान् पञ्चारुह्येति** । गमपधनीनित्यर्थः । **गपर्यन्तावरोहणं कृत्वेति**। निधपमगानवरुह्य स्थायिनिषादौ च मध्यमनी विधाय धैवतमाहत्य, आहताख्यगमकयुक्तं कृत्वा स्थाय्यन्तं मध्यमान्तमवरोहेद्यदि तदा बङ्गालो जायत इति बङ्गालस्य प्रथमं स्वस्थानमित्यर्थः । परमपि स्थानत्रयं मध्यमादिवदुन्नेयम् ॥ -३४२–३४४- ॥

इति बङ्गालः (२)

(सु०) बङ्गलोत्पत्तिप्रकारमाह—मध्यम इति । मध्यमं स्वरं स्थायिनमंशो कृत्वा तृतीयं चतुर्थं च स्वरमुच्चार्य मध्यमस्थितात् गान्धारात् निषादपर्यन्तं पञ्चस्वरानारुह्य तावत्पर्यन्तमवरोहणं कृत्वा स्थायिनि चोच्चार्य धैवतमारुह्य स्थाय्यवधित्वावरोहणे बङ्गालः ॥ -३४३, ३४४- ॥

इति बङ्गालः (२)

धैवतं स्थायिनं कृत्वा तृतीयं च चतुर्थकम् ॥ ३४५ ॥
तस्मात्कृत्वावरोहेण स्थायिपर्यन्तमेत्य च ।
तृतीयं च ततोऽधस्थं विधाय स्थायिनं व्रजेत् ॥ ३४६ ॥
यदा तदा भैरवः स्याल्लक्ष्ये स्थायी निरिष्यते ।

इति भैरवः

स्थायिनो धैवतात्पूर्वं स्वरमागत्य तत्परान् ॥ ३४७ ॥
पञ्चानारुह्य तुर्यं च द्वितीयं द्विः प्रयुज्यते ।
स्थायिनि न्यस्यते रागो वराटी जायते तदा ॥ ३४८ ॥
लक्ष्ये तु दृश्यते स्थायी किंनर्यामृषभस्वरः ।

इति वराटी

(क०) अथ भैरवमाह—**धैवतं स्थायिनमित्यादि । लक्ष्ये स्थायी निरीक्ष्यत इति** । लक्षणे धैवत उक्तः । निर्निषादः स्थायी इष्यत इत्यन्वयः ॥ -३४५, ३४६- ॥

इति भैरवः (३)

(सु०) भैरवं लक्षयति—**धैवतमिति** । धैवतमंशं कृत्वा तस्मात् धैवतात् तृतीयपञ्चमाववरुह्य स्थायिपर्यन्तं समारुह्य स्थायिनस्तृतीयमध्यमावुच्चार्य स्थायिप्राप्तो भैरवः । एतस्य लक्ष्ये निः निषादः स्थायी लक्ष्यते ॥ -३४९, ३४६- ॥

इति भैरवः (३)

(क०) इतः परं, '**स्थायिनो धैवतात्पूर्वम्**' इत्यारभ्य, '**एवं कतिपये रागाः**' इत्यन्तेन ग्रन्थसंदर्भेण वराट्यादीनां रागाणां स्वरसंनिवेश

(सु०) वराट्युत्पत्तिप्रकारमाह—**स्थायिन इति** । धैवतात् स्थायिनः पूर्वं पञ्चममुच्चार्य, ततः पञ्चस्वरानारोहेत्, अधः स्थायिनौ द्वितीयतुरीयौ द्विः

स्थायिनं मध्यमृषभं कृत्वा द्वौ तदधस्तनौ ॥ ३४९ ॥
गत्वा स्थायिनमारभ्य त्रीनारुह्यावरुह्य तु ।
पञ्च स्वरान्न्यस्यते चेदृषभे गुर्जरी तदा ॥ ३५० ॥
ग्रहो गान्धार एवास्या दृश्यते लक्ष्यगोचरे ।

इति गुर्जरी

उक्तरीत्या द्रष्टव्यः । अत्र प्रकरणे—स्थायीति ग्रहपर्यायत्वेन मन्तव्यम् । नहि कचिद् ग्रहाद्यतिरिक्तस्यांशस्य संभवेऽपि तत्पर्यायत्वेन; अन्यथात्र स्थायिग्रहयोर्भेदेऽङ्गीक्रियमाणे सति गुर्जर्याः, 'स्थायिनं मध्यमृषभं कृत्वा' इत्युक्त्वा 'ग्रहो गान्धार एवास्या दृश्यते लक्ष्यगोचरे' इति । तथा देशीसंज्ञके रागे, 'ऋषभं स्थायिनं कृत्वा' इत्युक्त्वा, 'गान्धारस्तु ग्रहो देश्या देशीविदिषु दृश्यते' इति । तथा देशाख्यसंज्ञके रागे, 'स्थायिनं मध्यगान्धारं कृत्वा' इत्युक्त्वा, 'लक्ष्ये दृष्टोऽस्या मध्यमो ग्रहः' इत्येवमादिषु लक्ष्यलक्षणयोर्विरोधोद्भावनमनुपपन्नं स्यात् । किंच बङ्गालरागे किंनरीवादकाः पञ्चमं स्वरं स्थायिनं कुर्वन्तीत्यादिकाया आक्षेपपरंपरायाः, 'ग्रहो हि यध्यमो रागस्यास्य शास्त्रेषु कीर्तितः' इत्यादिना महता यत्नेन कृता परिहारपरंपरापि निरर्थिका स्यात् । अतोऽत्र ग्रह एव स्थायी स्थाय्येव ग्रह इति मन्तव्यम् । सुबोधमन्यत् ॥ -३४७–४००- ॥

इति वराटी (४)

प्रयुज्य स्थायिनि धैवते समाप्तौ वराटी । लोके तु ऋषभस्वरः स्थायी दृश्यत इति ॥ -३४७, ३४८- ॥

इति वराटी (४)

(सु०) गुर्जरीमाह— स्थायिनमिति । मध्यस्थानस्थं ऋषभं स्थायिनं विधाय तदधस्तनौ षड्जनिषादौ प्राप्य ऋषभात् त्रीन् स्वरानारोहावरोहाभ्यां गत्वा ग्रहे ऋषभे समाप्तौ गुर्जरी । लक्ष्ये गान्धारो ग्रहः ॥ -३४९, ३५०- ॥

इति गुर्जरी (५)

मध्यषड्जाद् ग्रहात्पूर्वं स्वरमेत्य तृतीयकम् ॥ ३५१ ॥
तुर्यं चोक्त्वा द्वितीयादींस्त्रीनारुह्यावरुह्य च ।
ग्रहन्यासाद्वसन्तः स्याल्लक्ष्ये त्वस्यर्षभो ग्रहः ॥ ३५२ ॥

इति वसन्तः

मध्यषड्जं ग्रहं कृत्वा तृतीयं च चतुर्थकम् ।
उक्त्वा द्वितीयतृतीयौ स्पृष्ट्वा तुर्यं च पञ्चमम् ॥ ३५३ ॥
एतत्क्रमेणावरोहस्त्यक्त्वा स्थायिद्वितीयकम् ।
स्थायिपूर्वान्तमागत्य ग्रहं तस्मात्तृतीयकम् ॥ ३५४ ॥
तुर्यं ततस्तृतीयं च प्रोच्यते न्यस्यते ग्रहे ।
धन्नासी स्यात्तदा दृष्टो लक्ष्ये स्यात्पञ्चमो ग्रहः ॥ ३५५ ॥

इति धन्नासी

ऋषभं स्थायिनं कृत्वा परं स्पृष्ट्वा ततः परम् ।
विलम्ब्य तुर्यमान्दोल्य स्पृष्ट्वा तुर्यादधस्तनौ ॥ ३५६ ॥

(सु०) मध्यषड्जादिति । मध्यस्थानस्थात् षड्जात् स्थायिनोऽवस्थितं स्वरमुच्चार्य, ततः तुर्यं चोच्चार्य द्वितीयादीन् त्रीन् स्वरानारोहावरोहाभ्यां गीत्वा ग्रहे षड्जे समाप्तौ वसन्तः । लक्ष्ये त्वस्य ऋषभो ग्रहः ॥ -३९१–३९२ ॥

इति वसन्तः (६)

(सु०) मध्येति । मध्यस्थानस्थात् षड्जं ग्रहं कृत्वा, तृतीयचतुर्थावुच्चार्य, तृतीयद्वितीयतुरीयपञ्चमान् प्राप्य, द्वितीयवर्जं स्थाय्यधस्तनावधिश्चावरोहेणागत्य, तस्मात् ग्रहतृतीयादीनुच्चार्य ग्रहे समाप्तौ धनाश्रीः । अस्या लक्ष्ये पञ्चमो ग्रहः ॥ ३९३–३९९ ॥

इति धनाश्रीः (७)

(सु०) ऋषभमिति । ऋषभं स्थायिनं कृत्वा, तस्मात् परं द्वितीयं

ग्रहान्निःसरणं कृत्वा परौ प्रोच्य द्वितीयकम् ।
एत्य स्थायिनि चेन्न्यासो देशीरागस्तदा भवेत् ॥ ३५७ ॥
गान्धारस्तु ग्रहो देश्यां देशीवेदिषु दृश्यते ।

इति देशी

स्थायिनं मध्यगान्धारं कृत्वाधस्तुर्यमेत्य च ॥ ३५८ ॥
तस्मादाषष्ठमारुह्य स्वरांस्तानवरुह्य च ।
ग्रहाधस्तात्तृतीयं च कृत्वा चेन्न्यस्यते ग्रहे ॥ ३५९ ॥
देशाख्या सा तदा लक्ष्ये दृष्टोऽस्या मध्यमो ग्रहः ।

इति देशाख्यां

इति रागाङ्गाणि

ग्रहान्मध्यस्थितात्षड्जाद् द्वितीयं स्वरमेत्य च ॥ ३६० ॥

स्पृष्ट्वा शीघ्रमुच्चार्य, तृतीयं विलम्बितमुच्चार्य, चतुर्थमान्दोलितं गीत्वा, तृतीद्वितीयौ त्वरितमुच्चार्य ग्रहस्वरमृषभं निःसरणं कृत्वा, निःसृतं स्खलितमिव गीत्वा, परौ द्वितीयतृतीयावुच्चार्य स्थायिनि न्यासे देशीरागः । अस्यास्तु लक्ष्ये गान्धारो ग्रहः ॥ ३९६, ३९७- ॥

इति देशी (८)

(सु०) स्थायिनमिति । मध्यस्थानस्थो गान्धारः स्थायी, ततोऽधस्थं चतुर्थं प्राप्य, तस्मात् षष्ठस्वरपर्यन्तमारुह्य, अवरुह्य च ग्रहादधस्थं तृतीयं च स्वरमुच्चार्य, ग्रहस्वरन्यासे देशाख्या । अस्या लक्ष्ये मध्यमो ग्रहः ॥ -३९८, ३९९- ॥

इति देशाख्या (९)

इति रागाङ्गानि

(सु०) ग्रहानिति । मध्यस्थानस्थः षड्जो ग्रहः । ततो द्वितीयं स्वरं

तृतीयं तदधस्थं च विलम्ब्य स्थायिनं स्पृशेत् ।
अधस्तृतीयतुर्यौ च तं तृतीयं पुनः स्वरम् ॥ ३६१ ॥
कृत्वा स्थायिस्वरे न्यासो डोम्बक्री जायते तदा ।
भूपाली सा जनैरुक्ता स्थाय्यस्या मध्यमो मतः ॥ ३६२ ॥

इति डोम्बक्री

(लोके प्रसिद्धा भूपाली)

मन्द्रस्थं पञ्चमं कृत्वा स्थायिनं सह तेन च ।
आरुह्य षट् स्वरानेषामवरोहे तृतीयकम् ॥ ३६३ ॥
विलम्ब्य कम्पितं कृत्वा तुर्यं स्थायिनमाव्रजेत् ।
क्रमेण यदि जायेत तदा प्रथममञ्जरी ॥ ३६४ ॥
अस्यास्तु मन्द्रगान्धारः स्थायी लक्ष्येषु दृश्यते ।

इति प्रथममञ्जरी

धैवतं स्थायिनं कृत्वान्दोल्य तस्मादधस्तनम् ॥ ३६५ ॥

प्राप्य, तृतीयाधस्तनौ विलम्बेन गीत्वा, स्थायिनं सकृदुच्चारयेत् । ततः स्थायिनः सकाशात् अधःस्थितौ तृतीयचतुर्थौ गीत्वा, तृतीयमप्येवं निबिडमुच्चार्य स्थायिनि समाप्तौ डोम्बक्री । सा लोके भूपालीत्युच्यते । अस्याः स्थायी लक्ष्ये मध्यमः ॥ ३६०–३६२ ॥

इति डोम्बक्री (१)

(लोके प्रसिद्धा भूपाली)

(सु०) मन्द्रेति । मन्द्रपञ्चमः स्थायी, तेन सह षट् स्वरान् आरुह्य, तेषामेवावरोहे तृतीयं विलम्बितमुच्चार्य, तुरीयं च कम्पितं कृत्वा स्थायिप्राप्तौ प्रथममञ्जरी । अस्यास्तु स्थायी मन्द्रगान्धारः ॥ ३६३, ३६४- ॥

इति प्रथममञ्जरी (२)

(सु०) धैवतमिति । धैवतः स्थायी, तस्मात् पूर्वः पञ्चम आन्दोलितः,

आरुह्य चतुरस्तस्मादवरोहे ग्रहं व्रजेत् ।
यदा तदा स्यात्कामोदा मध्यमोऽस्या ग्रहो भवेत् ॥ ३६६ ॥

इति कामोदा

इति भाषाङ्गानि

षड्जं तु स्थायिनं कृत्वा तत्पूर्वस्वरमेत्य च ।
स्वरद्वयं द्विरारुह्य तृतीयं च चतुर्थकम् ॥ ३६७ ॥
प्रकम्प्याथ तृतीयं च विलम्ब्याहत्य पञ्चमम् ।
स्थाय्यन्तमवरोहेच्चेत्स्वरानृषभवर्जितान् ॥ ३६८ ॥
मध्यषड्जं ग्रहं कृत्वा सह प्राचा परौ स्वरौ ।
प्रोच्य तुर्यं विलम्ब्याथ तृतीयं सद्वितीयकम् ॥ ३६९ ॥
स्पृष्ट्वा यदा ग्रहे न्यासस्तदा रामकृतिर्भवेत् ।

इति रामकृतिः

स्थायिनं मध्यमं कृत्वाधश्चतुर्थमुपेत्य च ॥ ३७० ॥
ग्रहाधरांस्त्रीनारुह्य स्वरं स्पृष्ट्वा तृतीयकम् ।

तस्मात् चतुर्णामारोहणम् । तेषामेव ग्रहवर्जमवरोहे कामोदा । अस्या ग्रहो मध्यमः ॥ -३६५, ३६६ ॥

इति कामोदा (३)

इति भाषाङ्गानि

(सु०) मध्येति । मध्यस्थानस्थः षड्जो ग्रहः, अधस्तनेन सह परौ द्वितीयतृतीयौ स्वरावुच्चार्य, चतुर्थं विलम्बेनोच्चार्य, तृतीयद्वितीयौ शीघ्रमुच्चार्य ग्रहे समाप्तौ रामकृतिः ॥ ३६७–३६९- ॥

इति रामकृतिः (१)

(सु०) स्थायिनमिति । मध्यमः स्थायी, तस्मादधश्चतुर्थमागत्य,

ग्रहाधस्तुर्यपर्यन्तमागत्याप्यवरोहिणा ॥ ३७१ ॥
ततस्तृतीयमारुह्य क्रमादेत्य प्रकम्प्य च ।
ग्रहे न्यासो यदा रागस्तदा गौडकृतिर्भवेत् ॥ ३७२ ॥
पञ्चमो लक्ष्यते स्थायी लक्ष्ये स्याल्लक्ष्यवेदिभिः ।

इति गौडकृतिः

मध्यषड्जं ग्रहं कृत्वाधस्थमेत्य पुनर्ग्रहम् ॥ ३७३ ॥
कृत्वा तृतीयतुर्यौ च कम्पितं पञ्चमं स्वरम् ।
वादयित्वा ग्रहात्तुर्यं तृतीयं स्थायिनं तथा ॥ ३७४ ॥
द्वितीयं कम्पयित्वा च तृतीयं स्वरमास्पृशेत् ।
ततो यदि ग्रहे न्यासस्तदा देवकृतिर्भवेत् ॥ ३७५ ॥
अस्यास्तु मध्यमो न्यासो लक्ष्ये श्रीशार्ङ्गिणोदितः ।

इति देवकृतिः

इति क्रियाङ्गानि

तस्मात् त्रीनारोहेत् । ततो ग्रहात् तृतीयं स्पृष्ट्वा, अवरोहेण ग्रहादधस्तनचतुर्थपर्यन्तमवरुह्य, तृतीयपर्यन्तं चारुह्य मध्यमे समाप्तौ गौडकृतिः । लक्ष्ये स्थायी पञ्चमः स्यात् ॥ -३७०–३७२- ॥

इति गौडकृतिः (२)

(सु०) मध्यषड्जमिति । मध्यस्थानस्थः षड्जोः ग्रहः, तमुच्चार्य तदधःस्थं च तृतीयचतुर्थौ च कृत्वा पञ्चमं कम्पयेत् । ततश्च ग्रहचतुर्थादीन् कम्पितान् गीत्वा तृतीयस्वरं स्पृशेत्, शीघ्रं गायेत् । ततो यदि ग्रहे च न्यासस्तदा देवकृतिः । अस्या न्यासस्तु लक्ष्ये मध्यमः ॥ -३७३–३७५- ॥

इति देवकृतिः (३)

इति क्रियाङ्गानि

धैवतं स्थायिनं कृत्वा गं चाधःस्थं पुनर्ग्रहम् ॥ ३७६ ॥
तत्परं स्थायिनं तस्मात्पूर्वमागत्य च ग्रहम् ।
आरुह्य त्रींस्तृतीयादीन् पञ्चमादवरुह्य च ॥ ३७७ ॥
षट् स्वरान् ग्रहमुच्चार्य तृतीयं कम्पयेत्ततः ।
तुर्यपञ्चमतुर्यांश्च स्पृष्ट्वा प्रोच्य तृतीयकम् ॥ ३७८ ॥
द्वितीयं च ग्रहे न्यासो यदा स्याद्भैरवी तदा ।
अस्य रागस्य गान्धारः स्थायी लक्ष्येषु दृश्यते ॥ ३७९ ॥

इति भैरवी

मन्द्रषड्जं ग्रहं कृत्वा मध्यषड्जमुपेत्य च ।
अवरोहिक्रमादेत्य ग्रहमारोहिणा ततः ॥ ३८० ॥
पमागत्य विलम्ब्यामुं स्पृष्ट्वा धैवतमाव्रजेत् ।
ग्रहाच्चेदवरोहेण च्छायानट्टा तदा भवेत् ॥ ३८१ ॥

इति च्छायानट्टा

(सु०) धैवतमिति। धैवतं स्थायिनं कृत्वा, गम्; गान्धारं धैवतादधःस्थं पञ्चमं पुनः धैवतनिषादौ स्थायिनं तदधःस्थं ग्रहं च संप्राप्य तृतीयादीन् त्रीनारुह्य, षट् चावरुह्य तृतीयं कम्पयेत् । तुर्यादीन् स्पृष्ट्वा तृतीयद्वितीयावुच्चार्य ग्रहे समाप्तौ भैरवी । अस्या गान्धारः स्थायी ॥ -३७६–३७९ ॥

इति भैरवी (४)

(सु०) मन्द्रषड्जमिति । मन्द्रस्थानस्थात् षड्जात् मध्यमषड्जं गच्छेत् । ततोऽवरोहेण स्यायिपर्यन्तमागत्य, आरोहेण पञ्चमं गीत्वा, अमुं पञ्चमं विलम्ब्य स्पृष्ट्वा च धैवतमुच्चारयेत्, तदा छायानट्टा ॥ ३८०, ३८१ ॥

इति च्छायानट्टा (५)

मध्यषड्जं ग्रहं कृत्वा तत्परौ द्वौ च पञ्चमम् ।
षष्ठं कृत्वावरुह्येमौ तृतीयादवरुह्य च ॥ ३८२ ॥
आग्रहं प्राक्तृतीयाद्वावरुह्य प्राक्तृतीयकम् ।
प्रकम्प्य तत्परं प्रोच्य ग्रहे चेन्न्यस्यते तदा ॥ ३८३ ॥
रामक्री स्यादसौ प्रोक्ता बहुलीपूर्विका जनैः ।

इति बहुलीरामक्री

धैवतं स्थायिनं कृत्वा तत्परं तु विलम्बितम् ॥ ३८४ ॥
स्पृष्ट्वा ग्रहद्वितीयौ च ग्रहात्तु प्राक्तृतीयकम् ।
ईषद्विलम्ब्य चारुह्य ग्रहादीन्वा तृतीयकम् ॥ ३८५ ॥
विलम्ब्य तदधःस्थं वावरुह्य स्पर्शनात्ततः ।
ग्रहादींस्त्रीन्स्वरान्स्पृष्ट्वा ग्रहमुच्चार्य तत्परम् ॥ ३८६ ॥
ग्रहे चेन्न्यस्यते रागो मल्हारो जायते तदा ।
रागेऽत्र पञ्चमः स्थायी दृश्यते लक्ष्यगोचरः ॥ ३८७ ॥

इति मल्हारः

(सु०) मध्यषड्जेति । मध्यस्थानस्थषड्जः द्वितीयतृतीयपञ्चमषष्ठाः, पञ्चमषष्ठावुच्चार्य, षष्ठपञ्चमाववरुह्य, तृतीयात् ग्रहपर्यन्तमवरुह्य, पूर्वं तृतीयाद्वावरुह्य, पूर्वं चतुर्थं कम्पितं गीत्वा, तत्परमुच्चार्य ग्रहस्वरे समाप्तिः क्रियते चेत्, तदा बहुलीरामक्री ॥ ३८२, ३८३- ॥

इति बहुलीरामक्री (६)

(सु०) धैवतमिति । धैवतमुच्चार्य विलम्बितो निषादः, ततो ग्रहद्वितीययोः स्पर्शः, ग्रहात्पूर्वं तृतीय ईषद्विलम्बितः, ग्रहादीनां त्रयाणामारोहः, ग्रहादधः-स्थस्य विलम्बेनोच्चारणम्, ग्रहादीनां त्रयाणां शीघ्रमवरोहः । ततो ग्रहं स्पृष्ट्वा, तृतीयमुच्चार्य ग्रहे समाप्तौ मल्हारः । अस्य स्थायी पञ्चमः ॥ -३८४–३८७ ॥

इति मल्हारः (७)

स्थायिनो मध्यमात्पश्चावरुह्य यदि मावधीन् ।
मात्तृतीयं व्रजेत्तस्मादारुह्य चतुरः स्वरान् ॥ ३८८ ॥
स्पृष्ट्वा स्थायिनमेतस्मात्पूर्वं कृत्वा विलम्बितम् ।
षड्जे चेन्न्यस्यते गौडकर्णाटो जायते तदा ॥ ३८९ ॥
लक्ष्ये तु पञ्चमः स्थायी गौडस्यास्य विलोक्यते ।

इति कर्णाटगौडः

ग्रहान्मन्द्रनिषादाच्चेत्समुच्चार्य स्वरं परम् ॥ ३९० ॥
ततस्तृतीयतुर्यौ च गत्वा स्थायितृतीयकम् ।
स्थायितुर्यं च कृत्वास्मात्स्वरान्पश्चावरुह्य च ॥ ३९१ ॥
स्थायिनोऽधस्तुरीयं च स्थायिनोऽधस्तनं ततः ।
स्थायिनं तत्परं चोक्त्वा स्थायितुर्यं ग्रहात्परम् ॥ ३९२ ॥
कृत्वा न्यासे ग्रहे गौडस्तुरुष्को जायते तदा ।
स एव मालवीत्युक्तः स्थायी लक्ष्येऽस्य पञ्चमः ॥ ३९३ ॥

इति तुरुष्कगौडः

(सु०) स्थायिन इति । मध्यमात् स्थायिनस्तृतीयस्वरपर्यन्तमागत्य, ततश्चतुःस्वरानारोहेत् । ततः स्थायिनं स्पृष्ट्वा पूर्वं विलम्बितमुच्चार्य षड्जे समास्थिश्चेत्, तदा कर्णाटगौडः ॥ ३८८, ३८९- ॥

इति कर्णाटगौडः (८)

(सु०) ग्रहादिति । ग्रहं मन्द्रनिषादं, तत्परं षड्जं तृतीयतुर्यौ च गीत्वा, ततः स्थायिनः तृतीयं तुर्यं च विधाय, चतुर्थपञ्चमाववरुह्य स्थायिनः सकाशात्पूर्वं तृतीयमधस्तनं स्थायिनं चोक्त्वा, स्थायिनस्तुरीयं द्वितीयं चोच्चार्य ग्रहे न्यासे, तुरुष्कगौडः । लक्ष्येऽस्य स्थायी पञ्चमः ॥ -३९०–३९३ ॥

इति तुरुष्कगौडः (९)

ग्रहं मालविनः कृत्वा द्वितीयं प्रोच्य तत्परम् ।
लङ्घयेल्लङ्घितादूर्ध्वं त्रीण्यारुह्यावरुह्य च ॥ ३९४ ॥
प्रकम्प्य लङ्घितं तस्मात्पूर्वं प्रोच्य ग्रहं व्रजेत् ।
यदा तदा द्राविडः स्याद्गौडोऽसौ सालगो जनैः ॥ ३९५ ॥
अस्यापि स्थायिनं प्राहुर्लक्ष्यज्ञाः पञ्चमं स्वरम् ।

इति द्राविडगौड:

(लोके प्रसिद्धः सालगः)

स्थायिनो धैवतात्प्राच्यादवरुह्यग्रहान्तरम् ॥ ३९६ ॥
ग्रहं चोक्त्वा तृतीयं च तुर्यं कृत्वा विलम्बितम् ।
तस्मादधस्तनौ स्पृष्ट्वा तृतीयं तु विलम्बयेत् ॥ ३९७ ॥
स्पृष्ट्वा ग्रहात्परं पूर्वौ पूर्वं चोक्त्वा ग्रहे यदि ।
कम्पिते न्यस्यते रागस्तदा स्याल्ललिताभिधः ॥ ३९८ ॥
अत्र गान्धारमेवाहुः स्थायिनं लक्ष्यवेदिनः ।

इति ललिता

इत्युपाङ्गानि

(सु०) ग्रहमिति । ग्रहं स्वरं कृत्वा, ततः तृतीयमुच्चार्य, तत्परं तृतीयं लङ्घयेत् । ईषत्स्पृशेत् । ततः लङ्घितात् स्वरात्, परान् त्रीन् स्वरानारोहावरोहेण गीत्वा, लङ्घितं स्वरं कम्पयित्वा, ततः पूर्वमुच्चार्य ग्रहे समाप्तौ द्राविडगौडः । असौ लोके सालगगौड इत्युच्यते ॥ ३९४, ३९५- ॥

इति द्राविडगौडः

(सु०) स्थायिन इति । धैवतं स्थायिनं कृत्वा, तस्मात् पूर्वौ द्वौ स्वरौ अवरुह्य, ग्रहात् स्थायिनोऽधरं पूर्वं स्वरं ग्रहं चोक्त्वा, तृतीयचतुर्थौ विलम्बितौ कुर्यात् । ततः तस्मात् चतुर्थात् द्वौ पूर्वस्वरौ स्पृष्ट्वा शीघ्रं गीत्वा तृतीयं

एवं कतिपये रागाः प्रोक्ताः संमुग्धबुद्धये ॥ ३९९ ॥
वस्तुतः सर्वयन्त्रेषु रागाणां वादनं समम् ।
ग्रहादिस्वरसंभूतिद्वारतोऽन्विष्यतां बुधैः ॥ ४०० ॥
किंनर्यां यैः स्वरैः स्वस्वस्थानजैर्यस्य संभवः ।
रागस्य तस्य तैरेव वंशादावपि दृश्यते ॥ ४०१ ॥

इति किंनरीलक्षणम्

पिनाक्यां धनुषः कम्रैकचत्वारिंशदङ्गुला ।
दैर्घ्ये स्यान्मध्यविस्तारः स्यात्सपादाङ्गुलद्वयम् ॥ ४०२ ॥

विलम्बितं गायेत् । ततो ग्रहस्वरं स्पृष्ट्वा ग्रहस्वरात् पूर्वात् पूर्वमधस्तृतीयमुच्चार्य कम्पिते ग्रहस्वरे समाप्तौ ललिता । अत्र ललितायां लक्ष्यवेदिनः स्थायिनं गान्धारमेवाहुः ॥ -३९६–३९८- ॥

इति ललिता

इत्युपाङ्गानि

(सु०) एवमिति । अनेन प्रकारेण कतिपये केचिद् रागाः अज्ञानावबोधार्थमुक्ताः । सर्वयन्त्रेषु रागाणां वादनं वादनप्रकारः सदृश एव । तर्हि किमर्थं यन्त्रान्तरनिर्माणं तत्राह—ग्रहादीति । ग्रहादीनां स्वराणां संभूतिः द्वारविशेषेभ्यो यन्त्रेभ्यः बुधैर्विविच्यत इति । किंनर्यामिति । किंनार्यां वीणायां यैः स्वरैः यो राग उत्पद्यते, तैरेव स्वरैर्वंशादावपीति ॥ -३९९–४०१ ॥

इति किंनरीलक्षणम्

(क०) अथ पिनाक्या निःशङ्कवीणायाश्च लक्षणं स्फुटार्थम् ॥ ॥ ४०२–४१७- ॥

इति पिनाकीलक्षणम्

(सु०) पिनाकीं लक्षयति—पिनाक्यामिति । पिनाक्याम्, एकचत्वारिं-

अन्ते चाङ्गुलमानेन शिखां कुर्यादधस्तनीम् ।
सपादाङ्गुलमात्रा तु कार्मुकस्योत्तरा शिखा ॥ ४०३ ॥
कार्यावङ्गुलदैर्घ्यौ च पादोनाङ्गुलपिण्डकौ ।
खेटकौ शिखयोर्लग्नौ ताभ्यां त्ववागुपान्त्ययोः ॥ ४०४ ॥
पादोनमङ्गुलद्वन्द्वं विस्तारे मानमिष्यते ।
मध्यप्रान्तान्तराले तु विस्तारं कल्पयेत्सुधीः ॥ ४०५ ॥
तन्त्रीमानेन बध्नीयाच्छिखयोर्निपुणो गुणम् ।
मानं वादनचापे स्यादङ्गुलान्येकविंशतिः ॥ ४०६ ॥
दैर्घ्ये मुष्टौ तु विस्तारोऽत्राङ्गुलित्रितयोन्मितः ।
स त्वङ्गुलतृतीयांशः शिखे त्यक्त्वान्तयोर्भवेत् ॥ ४०७ ॥
ऊर्ध्वाधरशिखाद्वन्द्वमानं पादोनमङ्गुलम् ।
अश्ववालधिकेशोत्थो गुणो वादनधन्वनः ॥ ४०८ ॥
तुम्बं धृत्वाथ पादाभ्यां भुवि न्यस्तमधोमुखम् ।
तत्र लग्नशिखाथोर्ध्वा पिनाकीस्कन्धसंश्रिता ॥ ४०९ ॥

शदङ्गुलं दैर्घ्यं, धनुषः कार्मुकस्य कम्रा तन्त्रीवादनाय कोणः कर्तव्यः । सा कम्रामध्ये सपादाङ्गुलविस्तृता कार्या । अधःशिखा कार्मुकस्याङ्गुलप्रमाणा, तृतीयात् धनुष उत्तरा शिखा तु सपादाङ्गुलप्रमाणा कार्या । शिखयोः, लग्नाभ्यां शिखाभ्यामर्वाक्प्रदेशे अङ्गुलदीर्घैः पादाङ्गुलपिण्डकायामः खेटकौ कार्यौ । उपान्त्ययोर्मानं विस्तारे पादोनमङ्गुलद्वयम् । मध्यमान्तरालानां मानकल्पनायां तन्त्रीप्रमाणेन शिखयोर्गुणं बध्नीयात् । वादनधनुषो दीर्घमानमेकविंशतिरङ्गुलानि । अत्र कार्मुके मुष्टौ, विस्तारः अङ्गुलित्रितयेन उन्मितः परिमितः स मुष्टिः अङ्गुलतृतीयांशं मुक्त्वा शिखयोरन्तयोः स्यात् । शिखयोर्मानं पादोनमङ्गुलं ज्ञातव्यम् । वादनस्य धन्वनो धनुषो गुणः अश्ववालैः केशैर्वा कर्तव्यः । वादनप्रकारमाह—तुम्बमिति । अधोमुखं पृथिव्यां न्यस्य, तुम्बं च पादाभ्यां धृत्वा

आक्रम्य वामहस्तस्थतुम्बमूलेन तद्गुणम् ।
ततो दक्षिणहस्तस्थधनुषो वादयेज्ज्यया ॥ ४१० ॥
रालासंलिप्तयास्यां च स्वरस्थानानि निर्णयेत् ।
एकतन्त्रीवदधराधरतारतया सुधीः ॥ ४११ ॥

इति पिनाकीलक्षणम्

वध्यप्रान्तातिरिक्तेंऽशे तन्त्री दैर्घ्ये चतुष्करा ।
उपरिस्थे क्वचित्काष्ठे प्रान्तेनैकेन बध्यते ॥ ४१२ ॥
प्रान्तान्तरेणान्यकाष्ठेऽधस्थे सार्धकरायते ।
स्थौल्येनालापिनीतुल्ये त्यक्त्वाग्रादङ्गुलद्वयम् ॥ ४१३ ॥
तन्त्रीं बद्ध्वा ततोऽधस्तात्तुम्बमाबद्ध्य दारु तत् ।
वामोरुमूलाक्रान्ताग्रं जङ्घायां कुञ्चिताकृतौ ॥ ४१४ ॥
भूलग्नवाह्यपार्श्वायां वामायां न्यस्य जङ्घया ।
आक्रम्य वामेतरया पिनाक्यामिव वादनम् ॥ ४१५ ॥

ऊर्ध्वा शिखा पिनाकीस्कन्ध आश्रिता। तस्याः गुणं वामहस्तस्थितं तुम्बस्य मूलेनाक्रम्य तज्ज्ञो वादकः दक्षिणहस्तस्थितस्य धनुषः ज्यया गुणेन वादयेत्। राला लोकप्रसिद्धः सालवृक्षनिर्यासविशेषः, तया लिप्तयेति ज्याविशेषणम्। अस्यां च, पिनाक्याम्; एकतन्त्रीवत् अधराधरतारतया स्वरस्थानानि निर्णयेत् ॥ ४०२–४११ ॥

इति पिनाकीलक्षणम्

(सु०) निःशङ्कवीणां लक्षयति—वध्येति। दैर्घ्ये चतुष्करपरिमिता तन्त्री बन्धनीया। प्रान्तातिरिक्ते अंशे क्वचिदुपरिस्थिते काष्ठे प्रान्तेन बध्नीयात्। अन्त्येन प्रान्तेन सार्धकरा, भवेत्। तत्स्थूलत्वेन आलापिन्या तुल्ये अधःस्थिते काष्ठे अग्रात् अङ्गुलद्वयं परित्यज्य तन्त्री बन्धनीया। ततः सा तन्त्री दारुणि

धनुषा वामहस्तस्थतुम्बकेन च सारणा ।
आर्द्रचर्मकृतां शुष्कां पेशीं कोणान्वितां खराम् ॥ ४१६ ॥
वामेनादाय तत्कोणेनाथवा सारणा भवेत् ।
यत्र निःशङ्कवीणा सा शार्ङ्गदेवेन कीर्तिता ॥ ४१७ ॥
त्रिस्थानस्वररागादिव्यक्तिः संजायते तया ।

इति निःशङ्कवीणालक्षणम्

यथा यथा स्वरे व्यक्ती रक्तेः प्रचुरता भवेत् ॥ ४१८ ॥
तथा तथा विधातव्यं ततं लोकानुसारतः ।
सम्यक्स्वरोपयोगीनि तन्त्रीवाद्यानि कानिचित् ॥ ४१९ ॥
उक्तान्यन्यान्यपि प्राज्ञस्तर्कयेदनया दिशा ।
यो वीणावादनं वेत्ति तत्त्वतः श्रुतिजातिवित् ॥ ४२० ॥
तालपातकलाभिज्ञः सोऽक्लेशान्मोक्षमृच्छति ।
तस्माद्वीणा निषेव्येति याज्ञवल्क्यादयोऽब्रुवन् ॥ ४२१ ॥

तुम्बे बद्ध्वा, वीणाया वादनमिति संबन्धः । किं कृत्वा वादनम्? वामोरुमूलेन आक्रान्ताग्रां यथा भवति तथेति क्रियाविशेषणम् । कुञ्चितायां वामजङ्घायां न्यस्य दक्षिणया आक्रम्य पिनाकीवदिति संबन्धः । धनुषेति । धनुषा कार्मुकेन वामहस्तस्थितेन तुम्बेन वा सारणा कर्तव्या । अथवा आर्द्रचर्मकृतां पेशीं विशोष्य खरां कोणेन सह वामहस्तेनादाय कोणेन सारणा कर्तव्येति । एवं लक्षणका निःशङ्कवीणा । तस्याः प्रयोजनमाह—त्रिस्थानेति । तया; निःशङ्कवीणया सर्वस्वराद्यभिव्यक्तिः संजायते ॥ ४१२–४१७- ॥

इति निःशङ्कवीणालक्षणम्

(क०) वीणावादनपरिज्ञाने फलमाह—यो वीणावादनमिति ॥
॥ -४१८–४२१ ॥

नादश्रुतिस्वरग्रामजातिरागादि तत्त्ववित् ।
देहसौष्ठवसंपन्नः स्थिरासनपरिग्रहः ॥ ४२२ ॥
जितश्रमकरद्वन्द्वस्त्यक्तभीतिर्जितेन्द्रियः ।
प्रगल्भधीः सुशारीरो गीतवादनकोविदः ॥ ४२३ ॥
सावधानमनाश्चेति वैणिके वर्णिता गुणाः ।

इति ततवाद्यलक्षणम् ।

(सु०) ननु पूर्वशास्त्रेष्वनुक्तां वीणां शार्ङ्गदेवः किमिति स्वनाम्ना रचितेत्यत आह—यथेति । यथा यथा स्वराणां रागाभिव्यक्तौ रञ्जकत्वस्य बाहुल्यं तथा तथा ततवाद्ये स्वेच्छया कर्तव्यम् । अस्माभिस्तु समीचीनस्वराभिक्त्युपयोगीनिति कानिचित् तन्त्रीवाद्यान्युक्तानि । अन्यानपि, अनेन प्रकारेण अनया दिशा प्राज्ञ ऊहयेत् । वीणावादनं स्तौति—य इति । वीणावादनेन मोक्षं प्राप्नोतीत्युक्तं याज्ञवल्क्येन—यदाह—

"वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥"

(याज्ञवल्क्यस्मृतिः, प्रायश्चित्ताध्यायः ३-४-११५)

इति ॥ -४१८-४२१ ॥

(क०) प्रसङ्गाद्वीणावादनस्य गुणानाह—**नादश्रुतीत्यादिना** ॥ ॥ ४२२, ४२३- ॥

इति ततवाद्यलक्षणम्

(सु०) वीणावादकगुणानाह—नादेति । त्यक्तभीतिः; निर्भयः । प्रगल्भधीः; अविकलबुद्धिः । सुशारीरः; सुकुमारशारीरः । गीतवादनकोविदः; गीतस्य वादने कुशलः; सावधानमनाः; निश्चलचित्त इति ॥ ४२२, ४२३- ॥

इति ततवाद्यलक्षणम्

वैणवः खादिरो दान्तश्चान्दनो रक्तचन्दनः ॥ ४२४ ॥
आयसः कांस्यजो रौप्यो वंशः स्यात्काञ्चनोऽथवा ।
वर्तुलः सरलः श्लक्ष्णो ग्रन्थिभेदव्रणोज्झितः ॥ ४२५ ॥
कनिष्ठाङ्गुलिविस्तारं गर्भे च सुषिरं दधत् ।
स्वदैर्घ्यमानदैर्घ्यं च समाकृति समंततः ॥ ४२६ ॥
तस्य द्वे त्रीणि चत्वारि चाङ्गुलानि शिरःस्थलात् ।
त्यक्त्वा फूत्कारसुषिरं कार्यमङ्गुलसंमितम् ॥ ४२७ ॥
मुखरन्ध्रात्ताररन्ध्रं भवेदेकाङ्गुलान्तरम् ।
अर्धाङ्गुलान्तराणि स्यू रन्ध्राण्यन्यानि सप्त च ॥ ४२८ ॥
तान्यष्टौ बदरीबीजसंकाशानि प्रचक्षते ।
वंशेऽधः सर्वरन्ध्रेभ्यः परिशेष्याङ्गुलद्वयम् ॥ ४२९ ॥

(क०) अथ सुषिरवाद्येषु प्रथमोद्दिष्टं वंशं लक्षयति—**वैणव इति**। **दान्तः**, गजदन्तनिर्मितः। **तस्य शिरःस्थलादिति**। वंशदण्डस्य मूलस्थलात् दारुमूलभागादित्यर्थः। तच्छिरःस्थलमारभ्य द्वे त्रीणि चत्वारि वेति पक्षत्रयम्। तेष्वेकपक्षाश्रयणेन अङ्गुलपरित्यागं कृत्वा अङ्गुलिसंमितं वर्तुलत्वेन परितोऽङ्गुलपरिमाणं फूत्कारसुषिरं मुखसंयोगेन वायुपूरणार्थं रन्ध्रं कर्तव्यम्। तदेव मुखरन्ध्रमित्युच्यते। तस्मात् मुखरन्ध्रात् ताररन्ध्रं तारस्वराभिव्यक्तिनिमित्तम्। तत्र फूत्काररन्ध्रसंनिहिते रन्ध्रे तारस्वर एव जायते। यथा शरीरे सकलस्वरसाधारणेन ताल्वोष्ठादिव्यापारेणाभिवादने क्रियमाणे तत्संनिहितत्वेन मूर्ध्नि तारस्वर एव जायते। यथा वा एकतन्त्र्यादिकायां वीणायां सकलस्वरसाधारणेन दक्षिणहस्ताङ्गुलिव्यापारेण तन्त्रीवादने क्रियमाणे तत्संनिहितसारिकादिषु तार एव स्वरो जायते। एवमत्रापि द्रष्टव्यम्। तच्च मुखरन्ध्रादेकाङ्गुलान्तरं भवेत्। अन्यानि

तेषु स्वरविभागाय सप्तरन्ध्राणि मन्वते ।
नादहेतोर्मारुतस्य निर्गमायाष्टमं मतम् ॥ ४३० ॥
फूत्कारप्रभवो वायुः पूर्यते मुखरन्ध्रतः ।
वंशस्थैर्नवभी रन्ध्रैरेकवीरो निगद्यते ॥ ४३१ ॥

सप्त रन्ध्राण्यर्धाङ्गुलान्तराणि; अङ्गुलस्यार्धमर्धाङ्गुलम्, तदन्तरं मध्यं येषां तानि तथोक्तानि। **बदरीबीजसंकाशानीति**। यद्यपि रन्ध्राणामाकाशात्मकत्वेन अमूर्तत्वात् बदरीसंकाशत्वं नोपपद्यते, तथापि बदरीबीजप्रवेशार्हत्वेनौपाधिकं परिमाणमुक्तमित्यविरोधः। **सर्वरन्ध्रेभ्य इति**। नवभ्यो रन्ध्रेभ्योऽधः सर्वाग्रभाग इत्यर्थः। **अङ्गुलद्वयं परिशेष्येति**। तत्र रन्ध्रमकृत्वेत्यर्थः। अनेनास्य वंशस्य आयामपरिमाणमूलभागे अङ्गुलद्वयं युक्तं चेत् द्वादशाङ्गुलम्; अङ्गुलत्रयं युक्तं चेत् त्रयोदशाङ्गुलम्; चतुरङ्गुलं युक्तं चेत् चतुर्दशाङ्गुलमित्युक्तं भवति ॥ -४२४–४२९ ॥

(क०) एवं नवसु रन्ध्रेष्वाद्यन्तरन्ध्रे विहाय मध्यस्थितेषु सप्तसु रन्ध्रेषु स्वरविभागो भवतीत्याह—**एकवीरो निगद्यत इति**। एकवीरसंज्ञया निगद्यत इत्यर्थः। मुखताररन्ध्रयोरेकाङ्गुलान्तरितत्वादनर्थता च द्रष्टव्या ॥ ४३०, ४३१ ॥

(सु०) अथ सुषिरवाद्यं लिलक्षयिषुर्वंशं लक्षयति—**वैणव इति**। **वैणवः**; वेणुरचितः। गजदन्तादिरचितो **दान्तः**। चन्दनकृतः **चान्दनः**। लोहकृत **आयसः**। लोहसंसृष्टजन्यः **कांस्यजः**। **रौप्यः** राजतः। **काञ्चनः** सुवर्णघटितो वा वंशः कर्तव्यः। स च वर्तुलः सुवृत्तः, दीर्घः, मसृणः, ग्रन्थ्यादिहीनः कार्यः। कनिष्ठाङ्गुलिप्रमाणं मध्ये रन्ध्रं दधानः स्वप्रमाणं सर्वत्र सममेवेति रन्ध्रविशेषणम्। **तस्येति**। **तस्य**; वंशस्य द्वे त्रीणि चत्वारि वा अङ्गुलानि मस्तकप्रदेशात् परित्यज्य फूत्काराय

वंशस्य मुखरन्ध्रस्यताररन्ध्रस्य चान्तरे ।
एकैकाङ्गुलवृद्ध्या स्युरन्ये वंशाश्चतुर्दश ॥ ४३२ ॥
आष्टादशाङ्गुलाद्वंशादेतदङ्गुलवर्धनम् ।
उमापतिर्द्व्यङ्गुलः स्यात्त्रिभिस्त्रिपुरुषोऽङ्गुलैः ॥ ४३३ ॥
चतुर्मुखश्चतुर्भिः स्यात्पञ्चवक्त्रस्तु पञ्चभिः ।
षडङ्गुलः षण्मुखः स्यान्मुनिः सप्ताङ्गुलो मतः ॥ ४३४ ॥
वसुरष्टाङ्गुलः प्रोक्तो नाथेन्द्रस्तु नवाङ्गुलः ।
दशाङ्गुलो महानन्दो रुद्रस्त्वेकादशाङ्गुलः ॥ ४३५ ॥
द्वादशाङ्गुल आदित्यो मनुर्वंशश्चतुर्दशः ।
कलानिधिः षोडशः स्यादन्वर्थोऽष्टादशाङ्गुलः ॥ ४३६ ॥

मुखपवनपरिपूरणाय अङ्गुलप्रमाणं छिद्रं कार्यम् । तस्मात् छिद्रात् ताररन्ध्र तारस्वरस्थानरन्ध्रान्तरस्य स्थानात् रन्ध्रमेकाङ्गुलान्तरं स्यात् । अन्यान्यपि सप्त रन्ध्राणि अर्धाङ्गुलप्रमाणमध्यानि कार्याणि । अष्टावपि रन्ध्राणि बदरीबीजवत् । वंश इति । सर्वरन्ध्रेभ्यः सकाशात् अधःप्रदेशे वंशः अङ्गुलद्वयमात्रः परिशेषणीयः, रन्ध्रहीनः स्थापयितव्यः । तेषु अष्टसु रन्ध्रेषु स्वरविभागाय संपूर्णरन्ध्राणि नादोत्पत्त्यर्थम् , अष्टमं तु पवननिर्गमाय । फूत्कारेति । फूत्कारादुत्पन्नो वायुः मुखरन्ध्रेण पूर्यते । नवभी रन्ध्रैर्युक्तो वंश एकवीर इच्युच्यते ॥ -४२४–४३१ ॥

(क०) मुखताररन्ध्रयोरन्तरालेऽङ्गुलवर्धनादन्यांश्चतुर्दश वंशभेदानाह—**वंशस्येत्यादि** । अङ्गुलवर्धनस्य परावधिमाह—**आष्टादशाङ्गुलाद्वंशादिति** । अष्टादशाङ्गुलो नामान्वर्थो वंशो वक्ष्यते, तत्पर्यन्तमित्यर्थः । **एतदङ्गुलवर्धनमिति** । मुखताररन्ध्रयोरन्तरालेऽङ्गुलवर्धनं कर्तव्यमित्यर्थः । **द्व्यङ्गुलः स्यादिति** । प्रकृतेऽन्तराले द्वे अङ्गुली यस्येति तथोक्तः, स

अविस्पष्टान्तरत्वेन नेष्टः सप्तदशाङ्गुलः ।
त्रयोदशाङ्गुलस्तद्वच्च पञ्चदशाङ्गुलः ॥ ४३७ ॥
मुरल्याख्योऽपरैर्वंशो विंशत्यङ्गुलकः श्रितः ।
द्वाविंशत्यङ्गुलोऽप्यन्यो वंशस्तज्ज्ञेषु दृश्यते ॥ ४३८ ॥
तं च श्रुतिनिधिं प्राहुर्वंशं वंशविदो जनाः ।
अतिमन्द्रध्वनित्वेन नेष्यतेऽसौ विचक्षणैः ॥ ४३९ ॥

उमापतिरित्युच्यते । **मनुर्वंशश्चतुर्दश इति** । तत्र चतुर्दशो वंशः, चतुर्दशाङ्गुल इत्यर्थः । नतु चतुर्दशो वंशः । षोडशः स्यादित्यपि षोडशाङ्गुलान्तर इत्यर्थः । नतु षोडशो वंशः । **अन्वर्थ इति** । षोडशाङ्गुल इति संज्ञा लक्षणं चेत्यर्थः ॥ ४३२–४३६ ॥

(सु०) वंशभेदानाह—**वंशस्येति** । मुखपूरणरन्ध्रस्यताररन्ध्रस्य च यो मध्यभागः अष्टादशाङ्गुलपर्यन्तं तस्मादेकैकाङ्गुलवृद्ध्या चतुर्दशवंशा भवन्ति । तेषां नामान्याह—**उमापतिरिति** । तत्र वर्धितानामेवाङ्गुलानां संख्या-निर्देशः । द्व्यङ्गुल उमापतिः ; त्र्यङ्गुलः त्रिपुरुषः ; चतुरङ्गुलः चतुर्मुखः ; पञ्चाङ्लः पञ्चवक्त्रः ; षडङ्गुलः षण्मुखः ; सप्ताङ्गुलो मुनिः ; अष्टाङ्गुलो वसुः ; नवाङ्गुलो नाथेन्द्रः ; दशाङ्गुलो महानन्दः ; एकादशाङ्गुलो रुद्रः ; द्वादशाङ्गुल आदित्यः ; चतुर्दशाङ्गुलो मनुः ; षोडशाङ्गुलः कलानिधिः ; अष्टादशाङ्गुल अन्वर्थ एव । ॥ ४३२–४३६ ॥

(क०) 'एकैकाङ्गुलवृद्ध्या स्युः' इत्येकादिक्रमेण प्रक्रम्य त्रयोदश पञ्चदशसप्तदशाङ्गुलानां परित्यागे हेतुमाह—**अविस्पष्टान्तरत्वेनेति** । अविस्पष्टान्तरं भेदो यस्येति तथोक्तः, तस्य भावस्तत्त्वम् । अयमर्थः— पूर्वोत्तरयोः षोडशाष्टादशाङ्गुलयोः सारूप्येण मध्यमस्य सप्तदशाङ्गुलस्य ताभ्यां भेदे विद्यमानेऽप्यविस्पष्टः संस्तयोर्भ्रान्तिं जनयतीति । **तद्वदिति** ;

विरलाश्चातितारत्वाद्वंशा पञ्चाङ्गुलादधः ।
अष्टादशाङ्गुले वंशे स्वररन्ध्रेषु सप्तसु ॥ ४४० ॥
मुद्रितेषु भवेत्षड्जो मन्द्रसप्तकसंस्थितः ।
षट्स्वेवमन्यवंशेषु स्युः क्रमादृषभादयः ॥ ४४१ ॥
आरभ्याष्टाङ्गुलादेवमधो वंशेषु सप्तसु ।
मध्यस्थानगताः सप्तोद्यन्ति षड्जादयः क्रमात् ॥ ४४२ ॥

उक्तहेतुना त्रयोदशाङ्गुलः पञ्चदशाङ्गुलश्च नेष्ट इति संबन्धः । द्वादशाङ्गुलादर्वाचीनेषु वंशेषु त्वङ्गुलानामल्पसंख्यात्वेन भेदस्य स्फुटत्वात् भ्रान्तिर्न जायत इति भावो ज्ञेयः । एवमेकवीरादयः पञ्चदश वंशभेदा भवन्ति ॥ ४३७–४३९- ॥

(सु०) ननु तत्र त्रयोदशाङ्गुलः पञ्चदशाङ्गुलः सप्तदशाङ्गुलः कथं नोक्तः? अत आह—अविस्पष्टेति । मतान्तरमाह—मुरल्याख्येति । विंशत्यङ्गुलो मुरली अपरैराचार्यैः श्रितोऽङ्गीकृतः । द्वाविंशेति । द्वाविंशत्यङ्गुलो वंशो दृश्यते ; तं वशं श्रुतिनिधिरिति वांशिका आहुः । सूक्ष्मध्वनित्वेन असौ सुज्ञैः नाङ्गीक्रियते । पञ्चाङ्गुलाद्या वंशा अतितारत्वात् विरलाः, न सर्वैराद्रियन्त इत्यर्थः ॥ ४३७–४३९- ॥

(क०) **पञ्चाङ्गुलादध इति** । चतुरङ्गुलत्र्यङ्गुलद्व्यङ्गुलैकाङ्गुलान्तरा एव वंशा इत्यर्थः । अयमभिप्रायः—वंशस्यातिदीर्घत्वेऽतिमन्द्रस्वरत्वम्, अतिह्रस्वत्वेऽतितारस्वरत्वं वा सर्वगातृसाधारणत्वाभावाद्दोष इति । **अष्टादशाङ्गुल इति** । अस्मिन् वंशे सप्तसु स्वररन्ध्रेषु । **मुद्रितेष्विति** । वायुनिर्गमननिमित्तमदृष्टमष्टमं रन्ध्रं मुक्त्वा सप्तमादिषु सप्तसु रन्ध्रेषु यथाशास्त्रं हस्तद्व्यङ्गुलमुखैः पिहितेषु सत्सु मन्द्रसप्तकस्य आदितः षड्जो भवेत् । **एवं षट्स्वन्यवंशेषु ऋषभादयः क्रमात्स्युरिति** । कला-

तारस्थानस्थितः षड्जस्त्वेकवीरस्य जायते ।
सर्वेष्वेतेषु वंशेषु मुक्ते रन्ध्रद्वयेऽन्तिमे ॥ ४४३ ॥
स्वरो द्वितीयो जायेत तृतीयाद्यास्ततः परम् ।
सप्तमान्ताः प्रजायन्ते त्र्यादिरन्ध्रविमोचनात् ॥ ४४४ ॥

**निधौ,** सप्तरन्ध्रमुद्रणे कृते मन्द्रर्षभो भवेत् । **मनौ,** मन्द्रगान्धारः ; **आदित्ये,** मन्द्रमध्यमः ; **रुद्रे** मन्द्रपञ्चमः ; **महानन्दे,** मन्द्रधैवतः ; **नाथेन्द्रे,** मन्द्रनिषाद इति क्रमो द्रष्टव्यः । **आरभ्येत्यादि** । अष्टाङ्गुलात् वसुसंज्ञकात् द्वादशादारभ्य अधः सप्तसु वंशेषु ; एवमुक्तप्रकारेण मध्यस्थानगताः षड्जादयः सप्त क्रमादुद्भवन्तीति । **वसौ,** सप्तस्वररन्ध्रेषु मुद्रितेषु मध्यषड्जो भवेत् ; **मनौ,** मध्यर्षभः ; **षण्मुखे,** मध्यगान्धारः ; **पञ्चवक्त्रे,** मध्यमध्यमः ; **चतुर्मुखे,** मध्यपञ्चमः ; **त्रिपुरुषे,** मध्यधैवतः ; **उमापतौ,** मध्यनिषादश्च क्रमेण भवेदित्यर्थः ॥ -४४०–४४२ ॥

(सु०) स्वरोत्पत्तिप्रकारमाह—**अष्टादशाङ्गुल इति** । सप्तसु रन्ध्रेषु मुद्रितेषु पिहितेषु मन्द्रषड्जो जायते । अन्त्यरन्ध्रेषु पिहितेषु क्रमात् ऋषभादयः षट्स्वरा जायन्ते । अथवा अन्येषु वंशेषु ऋषभादयो जायन्त इति व्याख्येयम् । **आरभ्येति** । अष्टाङ्गुलवंशमारभ्य सप्तसु वंशेषु सप्त षड्जादयः स्वराः क्रमात् उदयन्ति उद्यन्ति प्राप्नुवन्ति ॥ -४४०–४४२ ॥

(क०) **तारस्थानस्थित इति** । एकवीराख्यवंशस्य तु पूर्ववद्रन्ध्रमुद्रणे क्रियमाणे तारषड्जो जायते । **सर्वेष्वित्यादि** । **एतेषु** अष्टादशाङ्गुलादिषु **अन्तिमे रन्ध्रद्वये मुक्ते** सति अमुद्रिते सति । **द्वितीयः स्वरो जायतेति** । यस्मिन् वंशे यः स्वरः प्रथमत्वेन जायत इत्युक्तम् ; तदपेक्षया तत्र द्वितीयो जायत इत्यर्थः । तद्यथा—अष्टादशाङ्गुले द्वितीयो

मुक्ते तुताररन्ध्रेऽन्यरन्ध्रेषु पिहितेषु च ।
अष्टमस्वरसंभूतिः पूर्वाचार्यैरुदीरिता ॥ ४४५ ॥
व्यक्तमुक्ताङ्गुलित्वेन समग्रो जायते स्वरः ।
अङ्गुल्याः कम्पने तत्र श्रुतिरेकापचीयते ॥ ४४६ ॥
श्रुतिद्वयं त्वर्धमुक्ते तत्कम्पे तु श्रुतित्रयम् ।
अन्यथा वर्णयन्तीह केचित्सप्तस्वरोदयम् ॥ ४४७ ॥

मन्द्रर्षभः; कलानिधौ द्वितीयो मन्द्रगान्धारः; एवं सर्वत्रोह्यम् । **ततः त्र्यादिरन्ध्रविमोचनात्तृतीयाद्याः सप्तम्यन्ताः क्रमाज्जायन्त इति** । पूर्ववत् तत्तदपेक्षया ते ते तृतीयादयो द्रष्टव्याः । तद्यथा—अष्टादशाङ्गुले वंशे अन्तिमरन्ध्रद्वये मुक्ते सति मन्द्रषड्जात् तृतीयो मन्द्रगान्धारः; कलानिधौ रन्ध्रत्रये मुक्ते मन्द्रर्षभात् तृतीयो मन्द्रमध्यमः; एव सर्वत्र द्रष्टव्यम् । तथा च रन्ध्रचतुष्टयविमोचनेऽपि तत्तदपेक्षया चतुर्थस्वरादयो द्रष्टव्याः । **मुक्ते त्विति** । **अष्टमस्वरसंभूतिरिति** । यस्मिन् वंशे ताररन्ध्रादिसप्तरन्ध्रमुद्रणे कृते यः स्वरो जायते, अन्यरन्ध्रेषु पिहितेषु ताररन्ध्रे मुक्ते स एवाष्टमत्वेन जायत इत्यर्थः । **व्यक्तमुक्ताङ्गुलित्वेन समग्र इति** । शुद्धावस्थोक्तश्रुतियुक्त इत्यर्थः । **अङ्गुल्याः कम्पने त्वत्र स्वर एका श्रुतिरपचीयत इति** । स स्वरः स्वोपान्त्यश्रुतिं गच्छतीत्यर्थः । **श्रुतिद्वयं त्विति** । अर्धमुक्ते श्रुतिद्वयमपचीयते । **तत्कम्पे त्विति** । अर्धमुक्ताङ्गुलिकम्पे तु श्रुतित्रयमपचीयत इति संबन्धः ॥ ४४३–४४७ ॥

(सु०) तारस्थानस्थित इति । तारः षड्जः एकवीरस्योत्पद्यते । सर्वेष्विति । वंशेषु अन्त्यरन्ध्रद्वये मुक्ते द्वितीयः स्वरो जायते । तृतीयचतुर्थाद्याः सप्तमपर्यन्ताः द्विकत्रिकचतुरादिरन्ध्रमोचनात् जायन्ते । मुक्त इति । ताररन्ध्रे मुक्ते अन्यरन्ध्रेष्वाच्छादितेषु अष्टमस्वरोत्पत्तिः । व्यक्तेति । व्यक्तमेवाङ्गुलि-

अर्धेन्दुनागफणवद्वंशे स्थाप्यं करद्वयम् ।
वामस्यानामिकाङ्गुल्या षड्जो मध्यमया पुनः ॥ ४४८ ॥
ऋषभः स्यात्प्रदेशिन्या गान्धार इति वामतः ।
त्रयः स्वराः प्रजायन्ते चत्वारो दक्षिणात्करात् ॥ ४४९ ॥
कनिष्ठया मध्यमः स्यात्पञ्चमोऽनामया स्वरः ।
धैवतः स्यान्मध्यमया प्रदेशिन्या निषादवान् ॥ ४५० ॥

मोचने संपूर्णः स्वरो जायते । तस्य अङ्गुलिकम्पने एकश्रुतिहीनस्वरोत्पत्तिरपचीयते, हीयत इत्यर्थः । अर्धमुक्ते रन्ध्रे श्रुतिद्वयं हीयते । तस्य कम्पे तिस्रः श्रुतयो हीयन्ते ॥ ४४३–४४७ ॥

(क०) मतान्तरेण वंशेषु स्वरोत्पत्तिं दर्शयितुमाह—**अर्धेन्दुनागफणवदिति** । अर्धेन्दुः अर्धचन्द्रः, नागफणो हस्तविशेषः । वक्ष्यति च ;

'एकतोऽङ्गुलिसंघाते यत्राङ्गुष्ठे स्थितेऽन्यतः ।
चन्द्ररेखाकृतिर्भाति सोऽर्धचन्द्रोऽभिधीयते ॥'

इति । नागफणः सर्पशिरा नाम हस्तविशेषः ;

'पताको निम्नमध्यो यः स तु सर्पशिराः करः'

इति वक्ष्यमाणलक्षणः, तद्वत् । ताविव अर्धेन्दुनागफणाविव । अत्र वत्करणेन तयोः सादृश्यं गम्यते, न तु तावेव । एतदुक्तं भवति, 'करद्वयेऽङ्गुष्ठयोः पृथक्स्थित्या प्रत्येकमर्धेन्दुवदितरासामङ्गुलीनामूर्ध्वाभिमुखीनां नतत्वेन प्रत्येकं नागफणवच्च प्रतीतिर्यथा भवति तथा' इति । एवंरूपं करद्वयं वंशे स्थाप्यम् । अङ्गुष्ठयोर्भागयोर्वंशं धृत्वा अङ्गुलीभागौ संनिवेश्येत्यर्थः । वामस्यानामया षड्जः स्यादित्यादिना हस्तयोर्व्यत्यासेन संनिवेशः सूचितः ।

स्थानत्रयस्य [1]निष्पत्तिर्नैवास्मिन्नन्यथा जगुः ।
सुशिक्षितेन रचितात्फूत्कारान्मध्यसप्तके ॥ ४५१ ॥
जायन्ते वैणशारीरस्वरसंवादिनः स्वराः ।
तारस्था मुखसंयोगसंकटे मुखरन्ध्रके ॥ ४५२ ॥
तं वादनप्रकारं च टीपामाचक्षते जनाः ।
तया यद्वाद्यते रन्ध्रे तत्स्वरो द्विगुणो भवेत् ॥ ४५३ ॥
रन्ध्रस्य मुखसंयोगविप्रकर्षात्तु मन्द्रगाः ।

**स्थानत्रयस्येति** । अस्मिन् पक्षे, **स्थानत्रयस्य** ; मन्द्रमध्यताराख्यस्य **निष्पत्तिर्नैवेति** । **अन्यथा** ; प्रकारान्तरेण जगुः । अन्य आचार्या इति शेषः । **सुशिक्षितेनेति** ; न सर्वसाधारणमित्यर्थः । **तेन रचितात्फूत्कारादिति** । मुखरन्ध्रयोः संयोगविशेषकृतादित्यर्थः । **मध्यसप्तके वैणशारीरस्वरसंवादिन इति** । वंशस्य मध्यसप्तकस्थिताः स्वरा वैणैः शारीरैश्च स्वरैरेकतारूपा इत्यर्थः । **मुखसंयोगसंकटे मुखरन्ध्रक इति** । अतिसंनिकृष्टत्वेनेत्यर्थः । **तत्स्वरो द्विगुणो भवेदिति** फूत्कारेण प्रयत्नविशेष उक्तः ; तदा तारस्थाः स्वरा भवन्ति । **मुखसंयोगविप्रकर्षादिति** प्रयत्नशैथिल्यमुक्तम् ; तदा मन्द्रगाः स्वरा भवन्ति ॥ ४४८–४५३- ॥

(सु०) मतान्तरेणान्यथा स्वरोत्पत्तिमाह—**अन्यथेति** । करद्वयमर्धचन्द्र-नागफणवत् स्थापनीयम् । वामकरः अर्धचन्द्रवद् विमुखः । दक्षिणकरः नागफणवत् संमुखः । तत्र वामहस्तमुक्तया अनामिकया षड्ज उत्पद्यते ; मध्यमया ऋषभः ; तर्जन्या गान्धारः ; दक्षिणहस्तस्य कनिष्ठया मध्यमः ; अनामिकया पञ्चमः ; मध्यमया धैवतः ; तर्जन्या निषादः ; ते च आचार्या अस्मिन् स्वरोत्पत्तिप्रकारे स्थानत्रयस्य उत्पत्तिमन्यथा आहुः । सुशिक्षितेन

[1] निष्पत्तिस्ते चास्मिन्नन्यथा जगुः इति सुधाकरपाठः.

तीव्रातीव्रतया वायोः शीघ्रमन्थरभावतः ॥ ४५४ ॥
पूरणापूरणाभ्यां चोपचयापचयाद् ध्वनेः ।
कुर्वन्त्येकत्र रन्ध्रेऽपि तज्ज्ञा नानास्वरोदयम् ॥ ४५५ ॥
कम्पिता वलिता मुक्तार्धमुक्ता च निपीडिता ।
इति वंशे गतिः प्रोक्ता शार्ङ्गदेवेन पञ्चधा ॥ ४५६ ॥
अधरस्थस्य वंशस्य कम्पनात्कम्पिता मता ।
वर्णालंकारनिष्पत्तिः प्रयोगेऽस्याः प्रयोजनम् ॥ ४५७ ॥

इति कम्पिता

भवेत्संचारिनिष्पत्तौ वलिताङ्गुलिचालनम् ।

इति वलिता

वादकेन कृतात् फूत्कारात् मध्यसप्तके स्वराः वीणास्वरवत् शरीरोत्पन्नस्वरवच्च जायन्ते । मुखसंयोगेन संकटे छिद्रे तारस्थानस्वरोत्पत्तिः । अयं वादनप्रकारो टीपा इत्युच्यते । तया टीपया यद् रन्ध्रे वाद्यते तत्स्वरो द्विगुणो भवेत् द्वैगुण्यं प्राप्नोति । रन्ध्रस्य मुखसंयोगेन पूरणेन सविप्रकर्षं दूरत्वे क्रियमाणे स्वराणां मन्द्रत्वं भवतीति ॥ ४४८–४५३- ॥

(क०) एवं फूत्कारप्रयत्नभेदेन स्थानत्रयस्य निष्पत्तिमुक्त्वा ततोऽपि कुशलैरेकस्मिन्नेव रन्ध्रे नानास्वरोदयः क्रियत इत्याह—**तीव्रातीव्रतयेत्यादिना** ॥ -४५४, ४५५ ॥

(सु०) तीव्रेति । वायोः तीव्रातीव्रत्वेन शीघ्रत्वेन स्थिरत्वेन पूरणत्वेन अपूरणत्वेन च ध्वनेः पुष्टापुष्टत्वेन निर्गमाय एकस्मिन्नेव छिद्रे तज्ज्ञाः वादने प्रवीणाः अनेकस्वरानुत्पादयन्ति ॥ -४५४, ४५५ ॥

(क०) अथ वंशे पञ्च गतीर्दर्शयति—**कम्पितेत्यादि । अर्धमुक्तेरिति ।**

रन्ध्रेऽखिलेऽङ्गुलीमुक्ते मुक्ता स्यान्मुक्तशब्दकृत् ॥ ४५८ ॥

इति मुक्ता

अर्धमुक्तार्धमुक्तेः स्याद् धृतशब्दविधायिनी ।

इत्यर्धमुक्ता

समन्तात्सर्वरन्ध्राणि पिधायाङ्गुलिभिर्यदा ॥ ४५९ ॥
वंशं पूरयते तज्ज्ञैस्तदा ज्ञेया निपीडिता ।

इति निपीडिता

अत्र कीर्तिधरस्त्वन्यां व्यवस्थामभ्युपागमत् ॥ ४६० ॥
षट्सप्ताष्टाङ्गुला वंशास्तारस्वरविधायकाः ।
मध्यस्वरा नवदशैकादशाङ्गुलकास्त्रयः ॥ ४६१ ॥
अङ्गुलैर्यो द्वादशभिः स्यात्त्रयोदशभिश्च यः ।
हेतू मन्द्रस्वराणां तौ सर्ववंशमयः पुनः ॥ ४६२ ॥

अङ्गुल्यग्रार्धेन रन्ध्राग्रमुक्तेः हेतोरित्यर्थः । धृतशब्दविधायिनीति । उत्पन्नं शब्दं धारयन्तीत्यर्थः ॥ ४५६–४५९- ॥

(सु०) वंशगतिं विभजते—कम्पितेति । कम्पितादिभेदेन वंशवादनप्रकारः पञ्चविधः । एतेषां क्रमाल्लक्षणमाह—अधरस्थस्येति । अधरस्थितस्य वंशस्य कम्पने क्रियमाणे कम्पिता गतिः ; अङ्गुलिचालनात् वलिता, तस्याः संचारिवर्णनिष्पत्तिः प्रयोजनम् । रन्ध्रात् सर्वाङ्गुलिमोचने मुक्ता ; अर्धमोचने अर्धमुक्ता ; सर्वरन्ध्राणि सर्वतोऽङ्गुलिभिः आच्छाद्य वंशपूरणे निपीडिता ॥ ४९६–४९९- ॥

(क०) मतान्तरेण वंशव्यास्थामाह—अत्र कीर्तिधर इत्यादि । अत्र वंशविषये, अन्यां व्यवस्थां ; वक्ष्यमाणस्थानत्रयव्यवस्थाम् , अभ्युपागमत्

चतुर्दशाङ्गुलो वंशस्त्रिस्थानस्वरसाधकः ।
वर्णालंकारधात्वादिवाद्यसंवादनक्षमः ॥ ४६३ ॥
एवं वंशा नवैवेति युक्तायुक्तविदो विदुः ।
केचिद्देशीविदो वंशानेकवीरादिकानसून ॥ ४६४ ॥
मानान्तरेणाभिदधुस्तेषां मतमिदं ब्रुवे ।
प्राक् चतुर्दशवंशात्तेऽङ्गुलं पञ्चयवं जगुः ॥ ४६५ ॥
चतुर्दशादिवंशेषु सार्धपञ्चयवं त्विदम् ।
चतुर्दशाङ्गुलं दण्डमेकवीरे प्रचक्षते ॥ ४६६ ॥

अभ्युपगतवान् । तामेव दर्शयति—**षट्सप्तेत्यादिना । सर्ववंशमय इति ।** उक्ताष्टविधवंशरूप इत्यर्थः । अत्र **त्रिस्थानस्वरसाधक इति** हेतुगर्भितं विशेषणम् ॥ ४६०–४६३- ॥

(सु०) मतान्तरेण स्वरोत्पत्तौ वंशव्यवस्थामाह—**अत्रेति । कीर्तिधर**-नामा आचार्यः, अन्यां व्यवस्थामङ्गीकृतवान् । षडङ्गुलाः सप्ताङ्गुलाः अष्टाङ्गुलाश्च वंशाः तारस्वरान् कुर्वन्ति । नवाङ्गुला दशाङ्गुलाः एकादशाङ्गुलाश्च मध्यस्वरान् ; द्वादशाङ्गुलत्रयोदशाङ्गुलौ द्वौ वंशौ मन्द्रस्वरोत्पादकौ । यस्तु पुनः सर्वेषां वंशानामन्तर्भावात् सर्ववंशमयः चतुर्दशाङ्गुलो वंशः समन्द्रमध्यतारानपि स्वरान् उत्पादयति । वर्णालंकारादीनां विस्तारादिधातूनां ततादिवाद्यानां च प्रकाशने समर्थः । एवं नवैव वंशा इति ॥ ४६०–४६३- ॥

(क०) अथ केषांचिद्देशीविदां मतेनैतानेवैकवीरादिकान् वंशान् मानान्तरेण भिन्नलक्षणान् दर्शयितुमाह—**केचिद्देशीविद इत्यादि । ते;** देशीविदः । चतुर्दशात् मनुसंज्ञकात् वंशात् प्राक् प्राक्तनेषु आदित्याद्येकवीरान्तेषु, **अङ्गुलं पञ्चयवं जगुरिति ;** पञ्चयवमितमङ्गुलप्रमाणमाहुरित्यर्थः । अत्र चतुर्दशादिति ल्यब्लोपे पञ्चमी । अत एव चतुर्दशादिवंशेष्विस्युच्यते ।

सार्धाङ्गुलौ शिरःप्रान्तौ पृथग्जातिमुखेऽङ्गुलम् ।
मानं तारादिरन्ध्राणि प्रत्येकं त्रियवानि तु ।। ४६७ ।।
त्रियवान्यन्तरालानि पृथक् स्थानेषु मूलतः ।
पञ्चमांशोनितं मानं कनिष्ठापर्वमध्यतः ।। ४६८ ।।
उमापतेस्तु वंशस्य दण्डः पञ्चदशाङ्गुलः ।
पादोनेन यवद्वन्द्वेनाधिकोऽस्यान्तरेषु तु ।। ४६९ ।।
सपादत्रियवं मानं पृथगन्यत्तु पूर्ववत् ।
अङ्गुलैः सप्तदशभिर्यवयुग्माधिकैर्मतः ।। ४७० ।।
दण्डस्त्रिपुरुषे वंशे पृथगन्तरसप्तके ।
यवोनमङ्गुलं मानमपरं लक्ष्म पूर्ववत् ।। ४७१ ।।

चतुर्दशादिवंशेषु मनुकलानिध्यष्टादशाङ्गुलेषु त्रिषु वंशेषु, इदम् ; अङ्गुलम् ; सार्धपञ्चयवमिति पूर्ववंशेभ्यो मानभेदकथनम् । शिरःप्रान्तौ ; मूलाग्रभागादित्यर्थः । जातिमुखं नाम शूत्काररन्ध्रम् ॥ -४६४–४८३- ॥

(सु०) मतान्तरमाह—केचिदिति । देशीविदः, देशीज्ञाः केचित् एकवीरप्रमुखान् अमून् वंशान् अन्येन प्रमाणेन आहुरिति । चतुर्दशवंशात् पूर्वेषु वंशेषु पञ्चयवमङ्गुलम् । चतुर्दशवंशमारभ्य अन्येषु वंशेषु सार्धपञ्चयवमङ्गुलमिति । एकवीरे नवच्छिद्रे वंशे दण्डश्चतुर्दशाङ्गुलः, मस्तकप्रदेशः प्रान्तश्च सार्धाङ्गुलः । जातिमुखे फूत्काररन्ध्रे अङ्गुलप्रमाणम् ; तारादिच्छिद्राणि यवत्रयप्रमाणानि ; रन्ध्रान्तरालानि पृथक् स्थानेषु मूलतः पञ्चमांशन्यूनं कनिष्ठाया मध्यपर्वमानम् ॥ -४६४–४६८ ॥

(सु०) उमापतेरिति । उमापतिसंज्ञकस्य वंशस्य पञ्चदशाङ्गुलो दण्डः पादोनयवद्वयेनाधिकः, अस्य वंशस्य अन्तरालेषु सपादयवत्रयं पृथक् प्रमाणम् । अन्यत्पूर्ववत् । त्रिपुरुषे वंशे, पञ्चयवाधिकं सप्तदशाङ्गुलो

यवद्वयाधिकैः सार्धैरष्टादशभिरङ्गुलैः ।
मितश्चतुर्मुखे दण्डे शिरोन्तौ तु मितौ पृथक् ॥ ४७२ ॥
पादोनाभ्यामङ्गुलाभ्यां लक्षणं पूर्ववत्परम् ।
यवस्य सार्धपादेन न्यूना द्वाविंशतिर्मता ॥ ४७३ ॥
अङ्गुलानां दण्डमानं पञ्चवक्त्रे शिरोन्तयोः ।
सार्धाङ्गुलद्वयं मानं पृथगन्तरसप्तके ॥ ४७४ ॥
चतुर्यवी सार्धपादाभ्यधिकान्यत्तु पूर्ववत् ।
षण्मुखे यवपादाभ्यां सपादाभ्यां सहाङ्गुलैः ॥ ४७५ ॥
चतुर्विंशतिसंख्यैः स्याद्दण्डः परिमितस्ततः ।
ताराद्यष्टसु रन्ध्रेषु सपादस्त्रियवा मितिः ॥ ४७६ ॥
प्रत्येकमन्तरालेषु षोडशांशोनिता यवाः ।
पञ्चमानमिताः शेषं लक्ष्म स्यात्पञ्चवक्त्रवत् ॥ ४७७ ॥
इतः परेषु वंशेषु सप्तस्वभ्यधिको यवः ।
स्वमानाद् दृश्यतेताररन्ध्रे जातिमुखान्तरे ॥ ४७८ ॥
युक्ता यवेन सार्धेनाङ्गुलषड्विंशतिर्भवेत् ।

दण्डः, अन्तरालं तु पृथग्यवोनाङ्गुलसंमितमिति । चतुर्मुखे वंशे, यवद्वयाधिकसार्धाष्टादशाङ्गुलो दण्डः, मस्तकः प्रान्तश्च पृथक्पादोनाङ्गुलद्वयपरिमितः । पञ्चवक्त्रे वंशे, यवस्य सार्धपादन्यूनद्वाविंशत्यङ्गुलो दण्डः ; मस्तकप्रान्तौ सार्धाङ्गुलद्वयप्रमाणौ ; अन्तरालानि सार्धपादाधिकचतुर्यवमितानि ; अन्यत्तु पूर्ववत् । षण्मुखे वंशे, स्वचतुर्थांशयुक्तयवचतुर्थांशद्वयसहितश्चतुर्विंशत्यङ्गुलो दण्डः ; ताराद्यष्टरन्ध्राणि सपादत्रियवप्रमाणानि ; रन्ध्रान्तरालानि षोडशांशन्यूनपञ्चयवप्रमाणानीति ॥ ४६९–४७७ ॥

(सु०) इत इति । इतः परेषु अन्येषु सप्तसु वंशेषु ताररन्ध्रे जातिमुखे

प्रमाणं मुनिदण्डस्य मानं रन्ध्राष्टके पुनः ॥ ४७९ ॥
यवत्रयं सार्धपादाधिकं प्रत्येकमीरितम् ।
पृथक्पञ्चयवी सार्धान्तरेष्वन्यत्तु पूर्ववत् ॥ ४८० ॥
वसुवंशे तु दण्डस्याङ्गुलाष्टाविंशतिर्मितिः ।
यवाधिका जातिमुखं यवेनाधिकमङ्गुलम् ॥ ४८१ ॥
यवाधिकाङ्गुला ज्ञेयान्तरालेषु मितिः पृथक् ।
शेषं तु पूर्ववद्वंशे नाथेन्द्रे दण्डसंमितिः ॥ ४८२ ॥
यवपादाधिका त्रिंशदङ्गुलानां शिरोन्तयोः ।
पादोनत्र्यङ्गुलं मानं पृथगन्तरसप्तके ॥ ४८३ ॥
सपादमङ्गुलं मानं खानिमानं तु मूलतः ।
षष्ठभागविहीनं स्यात्कनिष्ठापर्वमध्यमम् ॥ ४८४ ॥
अन्यत्तु पूर्ववद्दण्डे महानन्दस्य संमितिः ।
पादन्यूनेन पादेन यवस्याभ्यधिका भवेत् ॥ ४८५ ॥
द्वात्रिंशदङ्गुलानां तच्छिरोन्तौ त्र्यङ्गुलौ पृथक् ।
सपादाङ्गुलकं जातिमुखमन्तरसप्तके ॥ ४८६ ॥

फूत्काररन्ध्रे अपरा च एकयवाधिको ज्ञातव्यः । युक्तेति । मुनिवंशे ; सार्धयवाधिकषड्विंशत्यङ्गुलः; अष्टौ रन्ध्राणि सार्धचतुर्थांशाधिकयवत्रयमितानि; पृथगन्तरालानि सार्धपञ्चयवमितानि । वसुवंश इति । वसुवंशे ; यवाधिकाष्टाविंशत्यङ्गुलो दण्डः ; जातिमुखं यवाधिकाङ्गुलप्रमाणम् ; तावदेव प्रमाणमन्तरालेष्विति । वंश इति । नाथेन्द्रे वंशे ; यवचतुर्थांशाधिकत्रिंशदङ्गुलो दण्डः ; मस्तकप्रान्तौ चतुर्थांशोनत्र्यङ्गुलौ ; सप्तान्तरालानि सपादाङ्गुलसंमितानि ; खानि मानं तु मूलतः षष्ठांशेन हीनं कनिष्ठाङ्गुल्या मध्यपर्वमितम् । अन्यत्तु पूर्ववत् ॥४७८–४८४-॥

(क०) खानिमानं तु मूलत इति । खानिर्नाम यावद्दण्डमायातं

पृथक्सपादपादेनाभ्यधिकं मानमङ्गुलम् ।
मूलतः सप्तमांशोनकनिष्ठामध्यपर्वणा ॥ ४८७ ॥
मिता खानिः परं लक्ष्म पूर्वोक्तं तैरुदीरितम् ।
सपादानि चतुस्त्रिंशदङ्गुलानि मितिर्भवेत् ॥ ४८८ ॥
यवार्धसहितारुद्रदण्डस्यान्तरसप्तके ।
सार्धाङ्गुलं पृथङ्मानं कनिष्ठामध्यपर्वणा ॥ ४८९ ॥
खानिः परिमिता शेषं पूर्ववंशवदिष्यते ।
सप्तत्रिंशद्यवार्धेनाभ्यधिकान्यङ्गुलानि तु ॥ ४९० ॥
आदित्ये दण्डमानं स्यात्पादोनं त्वङ्गुलद्वयम् ।
अन्तरेषु पृथङ्मानमपरं रुद्रवंशवत् ॥ ४९१ ॥
मनोर्दण्डे सपादैकोनचत्वारिंशदङ्गुलम् ।

गर्भे सुषिरम्; तस्य मानं षष्ठभागविहीनं मध्यमं कनिष्ठापर्व स्यादिति । तेन मितमित्यर्थः । मूलतः, दण्डस्य शिरोभागात् । अस्मिन् मते च वंशलक्षणानि ग्रन्थत एव सुबोधानि ॥ ४८४–५०२- ॥

(सु०) दण्ड इति । महानन्दे वंशे, दण्डः स्वचतुर्थांशन्यूनयवचतुर्थांशाधिकद्वात्रिंशदङ्गुलः ; मस्तकप्रदेशः प्रान्तश्च पृथक् त्र्यङ्गुलः ; सपादाङ्गुलिप्रमाणं जातिमुखं फूत्काररन्ध्रम्; सप्तान्तरालानि मुखचतुर्थांशाधिकाङ्गुलप्रमाणानि ; खानिरन्ध्रं सचतुर्थांशोनकनिष्ठामध्यपर्वमितिः । अथवा खानिरन्ध्राणि मितौ माने इति व्याख्येयम् । सपादानीति । रुद्रवंशस्य दण्डः अर्धयवाधिकसपादचतुस्त्रिंशदङ्गुलः ; अन्तरालानि सार्धाङ्गुलप्रमाणानि ; खानिरन्ध्राणि कनिष्ठामध्यपर्वमितिः ॥ -४८९–४८९- ॥

(सु०) सप्तेति । आदित्यवंशस्य दण्डः अर्धयवाधिकसप्तत्रिंशदङ्गुलः ; पादोनाङ्गुलद्वयपरिमितानि अन्तरालानीति । मनोरिति । मनुवंशस्य दण्डः

यवाधिकं सपादेनाष्टमांशेन यवस्य च ॥ ४९२ ॥
सहितं मानमाख्यातं पादन्यूनाङ्गुलत्रयैः ।
शिरःप्रान्तौ पृथग्जातिमुखे स्यान्मानमङ्गुलम् ॥ ४९३ ॥
षोडशांशोनपादेनाधिकं रन्ध्राष्टके पुनः ।
यवत्रयं पृथक्सार्धमन्तरेषु च सप्तसु ॥ ४९४ ॥
प्रत्येकं यवपादेन न्यूनं स्यादङ्गुलद्वयम् ।
मानं लक्षणमन्यत्तु भेदादादित्यवंशवत् ॥ ४९५ ॥
यवस्य सार्धपादाभ्यां द्वात्रिंशांशे नवाधिकैः ।
चतुश्चत्वारिंशता स्यात्पादोनैरङ्गुलैर्मितः ॥ ४९६ ॥
दण्डः कलानिधौ वंशे शिरोन्तौ त्र्यङ्गुलौ पृथक् ।
अन्तरेष्वङ्गुलद्वन्द्वं सपादयवसंयुतम् ॥ ४९७ ॥
प्रत्येकं मानमाख्यातं लक्ष्मान्यन्मनुवन्मतम् ।
यवस्याष्टमभागेन सपादेन समन्वितैः ॥ ४९८ ॥
अष्टाचत्वारिंशता स्यात्पादोनैः संमितोऽङ्गुलैः ।
अष्टादशाङ्गुले दण्डः सार्धं त्वङ्गुलयोर्द्वयम् ॥ ४९९ ॥

सपादाष्टमांशसहितयवाधिकः सचतुर्थांशैकोनचत्वारिंशदङ्गुलः; मस्तकप्रान्तौ प्रत्येकं पादोनाङ्गुलत्रयपरिमितौ; जातिमुखे फूत्काररन्ध्रे सषोडशांशचतुर्थांशाधिकमङ्गुलं मानम्। अन्यान्यष्टरन्ध्राणि सार्धयवत्रयमितानि सप्तान्तरालानि यवचतुर्थांशोनाङ्गुलद्वयमितानीति ॥ -४९०–४९९ ॥

(सु०) यवस्येति। सार्धयवपादाभ्यां द्वात्रिंशांशविभागेन चाधिकपादोनचतुश्चत्वारिंशदङ्गुलः कलानिधेर्दण्डः; मस्तकप्रान्तावङ्गुलत्रयमितौ; सचतुर्थांशयवाधिकद्व्यङ्गुलप्रमाणान्यन्तरालानीति। यवस्येति। अष्टादशाङ्गुलवंशस्य दण्डः सपादयवाष्टमभागाधिकपादोनाष्टाचत्वारिंशदङ्गुलः; सार्ध-

अन्तरेषु पृथङ्मानं वेद्यमन्यत्कलानिधेः ।
नात्र त्रयोदशो वंशो न वा पञ्चदशाङ्गुलः ॥ ५०० ॥
इष्यतेऽल्पान्तरत्वेन न च सप्तदशाङ्गुलः ।
एवं पञ्चदशैवैते वंशास्तेषामिमे मताः ॥ ५०१ ॥
माधुर्यरक्तिसंयुक्ता रागाभिव्यक्तिहेतवः ।
यदिदं लक्ष्म शास्त्रोक्तं यच्च देशीगतं मतम् ॥ ५०२ ॥
ते द्वे रञ्जयितुं शक्ते न मनांसि कलाविदाम् ।
वक्त्रे फूत्काररन्ध्रस्थे कस्य वा विततात्कृतेः ॥ ५०३ ॥
स्वररन्ध्राण्याप्नुयातामपि दीर्घतरौ करौ ।
अन्तरं स्वररन्ध्राणामुक्तमर्धाङ्गुलं च यत् ॥ ५०४ ॥
शास्त्रेण तेन कस्यापि स्वरस्य व्यक्तिरीरिता ।
ये पूर्वोक्तक्रमाः सप्त स्वराः सरिगमादयः ॥ ५०५ ॥
मानेऽत्र दृश्यते तेषां नासौ क्रमपरिक्रमः ।
मूर्च्छनारागभाषादेः सुदूरोत्सारिता कथा ॥ ५०६ ॥

द्व्यङ्गुलान्यन्तरालानि । त्रयोदशाङ्गुलादयो वंशाः अन्येभ्यः स्वल्पान्तरत्वात् नेष्यते नाभीष्टा इत्यर्थः । तेषामाचार्याणामेवमुक्ताः । पञ्चदश वंशाः माधुर्यादियुक्ता रागाभिव्यक्तेः कारणमिति ॥ ४९६–५०१- ॥

(क०) 'यदिदं लक्ष्म' इत्यादिना पूर्वोक्तं लक्षणद्वयमरञ्जकमित्युक्त्वा अङ्गुष्ठपर्वदैर्घ्याङ्गुलमानेन यल्लक्षणं तत्प्रशंसति—**वक्त्रे फूत्काररन्ध्रस्थ इत्यादि** । **विततात्कृतेः** कस्य वा वांशिकस्य दीर्घतरावपि करौ स्वररन्ध्राण्याप्नुयातामिति काका नैवाप्नुयातामिति गम्यते । फूत्कारध्वनिनैव तस्यापि पारवश्यं भवतीति भावः । पुनरपि शास्त्रोक्तमुपालभते—**अन्तरं स्वररन्ध्राणामित्यादिना** तदास्तामित्यन्तेन । **मूर्च्छनाराग-**

किंचिच्छास्त्रकृतां प्राचामाचार्याणां महात्मनाम् ।
उपालम्भोऽपि दोषाय किं तया कथयापि नः ॥ ५०७ ॥
तदास्तामुच्यते किंतु केचिद्देशीविदः प्रति ।
माने पञ्चयवे कस्माद् दृश्यतेऽत्र यवोऽधिकः ॥ ५०८ ॥
सप्ताङ्गुलादिवंशेषु कथं चोर्ध्वं चतुर्दशात् ।
पूर्वमानाधिकाः सन्ति ते सप्ताष्ट नवा यवाः ॥ ५०९ ॥

**भाषादेरिति** । अत्र रागशब्देन ग्रामरागोपरागा उच्यन्ते; भाषाशब्देन भाषाविभाषान्तरभाषा उच्यन्ते; आदिग्रहणेन रागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गानि गृह्यन्ते, तेषाम्, **कथा सुदूरोत्सारितेति** । मूर्च्छनादयो न भवन्त्येवेत्यर्थः ॥ -५०३–५०७ ॥

(सु०) यदिदमिति । यदिदं शास्त्रोक्तं, यच्च देशीप्रसिद्धं, ते द्वे अपि लक्ष्मणी कलाभिज्ञानां मनांसि रञ्जयितुं न समर्थः । अङ्गुष्ठेति[1] । **अङ्गुलस्य** अङ्गुष्ठपर्वदीर्घेण मानेन अष्टादशसु वंशेषु कृतेषु मुखे फूत्काररन्ध्रस्थिते सति कस्य वादकस्य करौ स्वररन्ध्रं प्राप्नुतः, विततकृतेरपि अतिदीर्घस्यापीत्यर्थः । अन्तरमिति । स्वरच्छिद्राणामर्धाङ्गुलप्रमाणं यदन्तरालमुक्तं शास्त्रे तेन स्वराभिव्यक्तिर्न दृश्यते । य इति । ये षड्जर्षभादयः स्वराः पूर्वमुक्ताः । अनेन मानेन वंशे क्रियमाणे क्रमेणोत्पत्तिः तेषां दृश्यते । मूर्च्छनारागादीनामुत्पत्तिस्तु सुदूरं निरस्त इति पूर्वाचार्यान् प्रति उपालम्भो न युक्तः ॥ -५०२–५०७ ॥

(क०) शास्त्रोक्तानि कानिचिद्वंशलक्षणान्यनुभाष्य, तेषु लक्ष्यविरोधं दर्शयित्वा, तथा शास्त्रे निराकृतानामपि त्रयोदशाङ्गुलादीनां वंशानां लक्ष्ये व्यवहारं दर्शयित्वा पुरातनानां मतं दूषयति—**तदास्तामुच्यते किं त्वित्यादिना सूरिः श्रीकरणाग्रणीरित्यन्तेन** ॥ ५०८–६२३- ॥

[1] श्लोकोऽयं मूले, "ते द्वे" इत्यस्यानन्तरं व्याख्याद्वयानुसारेण योजनीयः ।
अङ्गुष्ठपर्वदैर्घ्यं यदङ्गुलं तत्समीरितम् ।
तेन मानेन वंशेषु कृतेष्वष्टादशादिषु ॥

सार्धपञ्चयवे माने लक्ष्म स्यादव्यवस्थितम् ।
त्रयोदशादयो ये च त्रयो वंशा निराकृताः ॥ ५१० ॥
न तत्रा युक्तिलेशोऽस्ति येन तुष्यन्ति सूरयः ।
अल्पान्तरत्वमुक्तं यत्तदसारतरं पुनः ॥ ५११ ॥
वंशान्तरान्तरैस्तुल्यमन्तरं तेषु दृश्यते ।
द्वादशार्धस्वरन्यूनो यथैकादशवंशतः ॥ ५१२ ॥
मुद्रितः स्वररन्ध्रः स्यात्तथा तस्मात्त्रयोदश ।
एवं चतुर्दशात्पञ्चदशो वंशात्तु षोडशात् ॥ ५१३ ॥
वंशः सप्तदशो लक्ष्माप्रसिद्धमिति चेन्न तत् ।
वक्तुं तदुक्तरीत्या हि शक्यं तेष्वपि लक्षणम् ॥ ५१४ ॥
त्रयोदशाङ्गुलो वंशो विश्वमूर्तिरुदाहृतः ।
अधिकं यवपादेन स्याच्चत्वारिंशदङ्गुलम् ॥ ५१५ ॥

(सु०) देश्यभिज्ञान्प्रति किंचिद्वदाम इत्याह—मान इति । पञ्चयवाङ्गुलमाने सप्ताङ्गुलादिवंशेषु त्रियवाधिकमानं कस्मात् दृश्यते? चतुर्दशाङ्गुलादिवंशेषु पूर्वोक्तमानात् क्रमेण सप्ताष्ट नव च यवाधिका दृश्यन्ते। सार्धपञ्चयाङ्गुले कल्प्यमाने लक्षणमव्यवस्थं स्यात् । त्रयोदशाङ्गुलादिवंशत्रयनिराकरणे च न कारणं पश्यामः । यत्तु स्वल्पान्तरत्वं कारणमुक्तम्, तत्तु अन्येष्वपि तुल्यम् । द्वादश इति । एकादशाङ्गुलाद्वंशात् द्वादशाङ्गुलो वंशः यथा अर्धस्वरेण हीनः तथा द्वादशाङ्गुलाः, त्रयोदशाङ्गुलापि भविष्यति। एवं पञ्चदशसप्तदशाङ्गुलावपि सभवतः लक्षणशास्त्रेष्वनुक्तत्वादप्रसिद्धमिति चेत्, तन्न; हि यस्मात् कारणात् पूर्वोक्तरीत्या लक्षणं कल्पयितुं शक्यते ॥ ५०८–५१४ ॥

(सु०) तदेव कल्पितं लक्षणमाह—त्रयोदशेति । त्रयोदशाङ्गुलो विश्वमूर्तिः, तस्य यवपादाधिकचत्वारिंशदङ्गुलो दण्डः; तारादीन्यष्टौ च्छिद्राणि सार्धत्रियवमितानि, त्रयाणां यवानां समाहारस्त्रियवीति। अन्तरालानि

विश्वमूर्तौ दण्डमानं तारादौ सुषिराष्टके ।
प्रत्येकं त्रियवी सार्धा मानमन्तरसप्तके ॥ ५१६ ॥
अङ्गुलद्वितयं मानं पृथगादित्यवत्परम् ।
युक्तैर्यवेन पादेन द्वाचत्वारिंशदङ्गुलैः ॥ ५१७ ॥
यवस्य चाष्टमांशेन सपादेनाधिकैर्मतः ।
दण्डः श्रीशार्ङ्गिदेवोक्तो वंशे पञ्चदशाङ्गुले ॥ ५१८ ॥
अङ्गुलत्रितयं मानं शिरःप्रान्ते प्रदेशयोः ।
प्रत्येकमन्तरालेषु सप्तस्वर्धयवाधिकम् ॥ ५१९ ॥
अङ्गुलद्वितयं मानं मनुवल्लक्षणं परम् ।
यवस्य सार्धपादेन द्वात्रिंशांशयवाधिकः ॥ ५२० ॥
षट्चत्वारिंशता पादन्यूनैः स्यादङ्गुलैर्मितः ।
दण्डः सप्तदशे वंशेऽन्तरेषु त्वङ्गुलद्वयम् ॥ ५२१ ॥
पृथक्सद्वियवं मानं स्यात्कलानिधिवत्परम् ।
एवं प्रसिद्धलक्ष्माणो रागादिव्यक्तिहेतवः ॥ ५२२ ॥
त्रयोदशादयो वंशा निषिध्यन्ते मुधा परैः ।
अपि पञ्चयवं मानं वंशेष्वष्टादशस्वपि ॥ ५२३ ॥
व्यक्तं प्रगल्भते वक्तुं सूरिः श्रीकरणाग्रणीः ।
तस्माद्देश्यनुसारेण लक्ष्यलक्षणतत्त्ववित् ॥ ५२४ ॥
शार्ङ्गदेवोऽन्यथा वंशस्वरूपं प्रत्यपादयत् ।

(क०) अथ देश्यनुसारेण स्वाभिमतं वंशलक्षणं वक्तुमाह— "तस्माद्देश्यनुसारेण" इत्यादिना "त्रयः प्राग्वन्न संमताः" इत्यन्तेन । मूलशब्दोऽन्वयं याति मध्यमेनात्र पर्वणा इति । कनिष्ठमध्यमपर्वमूलमित्यर्थः । व्याख्यातप्रायमन्यत् ॥ -५२४—६४६- ॥

अङ्गुलं निबबन्धासौ सिद्धं गणितशास्त्रतः ॥ ५२५ ॥
न ह्यङ्गुलं पञ्चयवं दृश्यते शास्त्रलोकयोः ।
अङ्गुलं निस्तुषैः षड्भिस्तिर्यग्भिः स्याद्यवोदरैः ॥ ५२६ ॥
दक्षिणस्य करस्य स्यात्खानिमाने कनिष्ठिका ।
न स्थूला न कृशात्यन्तं गृह्यते किंतु मध्यमा ॥ ५२७ ॥
मूलशब्दोऽन्वयं याति मध्यमेनात्र पर्वणा ।
समा सर्वत्र खानिः स्याद्विषमः स्वरभङ्गकृत् ॥ ५२८ ॥
चतुर्दशाङ्गुलो दण्ड एकवीरस्य दृश्यते ।
तच्छिरः प्रान्तयोर्मानमङ्गुलद्वितयं पृथक् ॥ ५२९ ॥

द्वियवमितानि । युक्तैरिति । पञ्चदशाङ्गुले वंशे ; सपादयवाष्टमांशसहितयवपादाधिकद्विचत्वारिंशदङ्गुलो दण्डः ; शिरः प्रान्तौ त्र्यङ्गुलौ ; अन्तरालानि सप्त अर्धयवाधिकाङ्गुलद्वयमितानि । अन्यल्लक्षणं मनुवत् चतुर्दशाङ्गुलवंशवत् । सप्तदशाङ्गुले वंशे ; दण्डः द्वात्रिंशांशयुक्तसार्धपादाधिकपादोनषट्चत्वारिंशदङ्गुलः ; अङ्गुलद्वयमितान्यन्तरालानि ; अन्यत् षोडशाङ्गुलकलानिधिवत् । अपीति । अष्टादशसु वंशेषु शार्ङ्गदेवः पञ्चयवं मानमपि वक्तुं प्रगल्भते । अपिशब्दो गर्हायाम् ; "अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु" (पाणिनिसूत्रम् १-४-९६) इत्युक्तत्वात् । तस्मात् प्रगल्भत इत्यर्थः । ततो लक्षणमन्यथा प्रत्यपादयत् प्रतिपादयति स्म ॥ ५१९–५२४- ॥

(सु०) अङ्गुलमिति । अङ्गुलं गणितप्रसिद्धमेव । नहि पञ्चयवमङ्गुलं क्वचिद् दृश्यते । गणितप्रसिद्धमेवाङ्गुलमुच्यते । अङ्गुलमिति । निस्तुषैः तुषशून्यैः तिर्यक्स्थितैः षड्भिर्यवोदरमङ्गुलम् । खानिमाने खानिप्रमाणे अस्थूला अकृशा च, मूलशब्दो दक्षिणहस्तस्य कनिष्ठिकया मध्यमपर्वणा संबन्धं याति । खानिः सर्वत्र समैव कर्तव्या । विषमा चेत् स्वरभङ्गं स्वरविकारं करोति । चतुर्दशेति । एकवीरे वंशे ; चतुर्दशाङ्गुलो दण्डः ; शिरःप्रान्तौ

मानं जातिमुखाख्ये स्यात्फूत्कारसुषिरेऽङ्गुलम् ।
ताररन्ध्रं ततोऽधस्तादङ्गुलान्तरितं मतम् ॥ ५३० ॥
षोडशांशाधिकं तस्य मानमर्धाङ्गुलं विदुः ।
तदधोऽधश्च तावन्ति सप्त रन्ध्राणि कल्पयेत् ॥ ५३१ ॥
तेष्वष्टास्वूर्ध्वरन्ध्राणि सप्त स्युः स्वरसिद्धये ।
अन्तिमं वायुरन्ध्रं स्यादन्तरालानि सप्त च ॥ ५३२ ॥
पृथगर्धाङ्गुलान्येषां गर्भरन्ध्रं तु संमितम् ।
मूलतः पञ्चमांशोनकनिष्ठामध्यपर्वणा ॥ ५३३ ॥
खानिस्तदुच्यते देश्यां पूर्वोक्तास्त्रिस्वरादयः ।
त्रयोदशापरे ताररन्ध्रजातिमुखान्तरे ॥ ५३४ ॥
एकैकाङ्गुलवृद्ध्या स्युराचतुर्दशवंशतः ।
उमापतौ दण्डमानं भवेत्पञ्चदशाङ्गुलम् ॥ ५३५ ॥

द्व्यङ्गुलौ ; जातिमुखसंज्ञकं फूत्काररन्ध्रमङ्गुलप्रमाणम् । ततो जातिमुखादधस्ताद्वर्तमानं रन्ध्रं ताररन्ध्रजमित्युच्यते । तत्र अङ्गुलान्तरितं षोडशाधिकार्धाङ्गुलमितं कार्यम् । अन्यान्यपि सप्त रन्ध्राणि तावन्ति कल्पयेदिति । तेष्विति । तेषु ; ताररन्ध्रसहितेषु अष्टसु रन्ध्रेषु सप्तस्वरस्थितये अन्तिमं वायुरन्ध्रमेव । अर्धाङ्गुलप्रमाणानि अन्तरालानि । गर्भरन्ध्रं तु पञ्चमांशोनमूलतः कनिष्ठामध्यपर्वमूलमितम् । तद्गर्भरन्ध्रं तु लोके खानीत्युच्यते । त्रिस्वरादयः पूर्वमुक्ताः । अपरे त्रयोदश ; ताररन्ध्रजातिमुखान्तरे फूत्काररन्ध्रमध्ये एकैकाङ्गुलवृद्ध्या आचतुर्दशवंशतः चतुर्दशाङ्गुलपर्यन्तं ज्ञातव्याः ॥ -५२९–५३४- ॥

(सु०) उमापताविति । उमापतौ वंशे ; पञ्चदशाङ्गुलं दण्डमानं भवेत् । अन्यत्तु लक्ष्म एकवीरवत् । त्रिपुरुषे वंशे पुनः ; यवार्धसहितः सार्ध-

एकवीरवदन्यत्तु लक्ष्म त्रिपुरुषे पुनः ।
दण्डः सार्धैः षोडशभिः सयवार्धैर्मितोऽङ्गुलैः ॥ ५३६ ॥
सप्तान्तराण्यधस्तारात्पृथक्सार्धैस्त्रिभिर्यवैः ।
मितानि लक्षणं शेषं पूर्ववंशवदिष्यते ॥ ५३७ ॥
दण्डश्चतुर्मुखे सार्धाष्टादशाङ्गुलसंमितः ।
पृथक्सप्तान्तरालानि चतुर्भिः साङ्घ्रिभिर्यवैः ॥ ५३८ ॥
मितानि पूर्ववच्छेषं पञ्चवक्त्रे तु संमितिः ।
दण्डश्च यवयुग्मेनाभ्यधिकाङ्गुलविंशतिः ॥ ५३९ ॥
सप्तानामन्तरालानां पृथक्पञ्चयवा मितिः ।
अन्यत्तु पूर्ववल्लक्ष्म दण्डमानं तु षण्मुखे ॥ ५४० ॥
अङ्गुलानां यवार्धानां द्वाविंशतिरुदीरिता ।
सार्धपञ्चयवं मानं पृथगन्तरसप्तके ॥ ५४१ ॥
शेषं तु पूर्ववद्वंशे मुनौ दण्डमितिः पुनः ।
त्रयोविंशत्याङ्गुलानां सार्धयान्तरसप्तके ॥ ५४२ ॥
प्रत्येकमङ्गुलं मानं शेषं पूर्ववदिष्यते ।
वंशे वसौ दण्डमानं चतुर्भिरधिका यवैः ॥ ५४३ ॥
पञ्चविंशतिराख्याताङ्गुलानामन्तराणि तु ।
पृथक्सप्तयवानि स्युः शेषं पूर्वोक्तमिष्यते ॥ ५४४ ॥

षोडशाङ्गुलो दण्डः । ताराधःस्थितसप्तरन्ध्राणि सार्धयवत्रयमितानि । शेषं लक्षणं पूर्ववंशवत् । दण्ड इति । चतुर्मुखे वंशे ; सार्धाष्टादशाङ्गुलमितो दण्डः । अन्तरालानि सपादयवचतुष्टयमितानि । पञ्चवक्त्र इति । पञ्चवक्त्रे वंशे ; यवद्वयाधिकविंशत्यङ्गुलो दण्डः । पञ्चयवमितान्यन्तरालानि । दण्डमानमिति । षण्मुखे ; अर्धयवाधिकद्वाविंशत्यङ्गुलो दण्डः । सार्धपञ्चयवानि सप्तान्तरालानि ।

नाथेन्द्रदण्डमानं स्यात्सपादा सप्तविंशतिः ।
अङ्गुलानामन्तराणि स्युः सपादाङ्गुलानि तु ॥ ५४५ ॥
प्रत्येकं मूलतः षष्ठांशोनमध्यमपर्वणा ।
कनिष्ठाया मिता खानिरन्यल्लक्ष्म तु पूर्ववत् ॥ ५४६ ॥
मानं महानन्ददण्डे त्रिंशदङ्गुलकं मितम् ।
पृथक्सार्धाङ्गुलानि स्युरन्तरालानि सप्त च ॥ ५४७ ॥
नाथेन्द्रवत्परं लक्ष्म रुद्रे दण्डमितिः पुनः ।
सपादानि त्रयस्त्रिंशदङ्गुलान्यन्तरेषु तु ॥ ५४८ ॥
प्रत्येकं मानमाख्यातं पादन्यूनाङ्गुलद्वयम् ।
रन्ध्रेष्वष्टसु तारादिष्वष्टमांशसमन्वितम् ॥ ५४९ ॥
अङ्गुलार्धं पृथङ्मानं खानेर्मानं तु मूलतः ।
सप्तमांशविहीनं स्यात्कनिष्ठापर्व मध्यमम् ॥ ५५० ॥
पूर्वोक्तमन्यदादित्ये वंशे दण्डस्तु कथ्यते ।
अष्टमांशाधिकैः पञ्चत्रिंशता संमितोऽङ्गुलैः ॥ ५५१ ॥
अन्तरेष्वष्टमांशोनमङ्गुलद्वितयं पृथक् ।
मानं खानौ त्वष्टमांशन्यूनमामूलदेशतः ॥ ५५२ ॥

मुनौ; सार्धयवत्रयो विंशत्यङ्गुलो दण्डः। पृथगङ्गुलमितान्यन्तरालानि। वसौ वंशे; चतुर्यवाधिकपञ्चविंशत्यङ्गुलो दण्डः। अन्तरालानि सप्त यवानि। नाथेन्द्रे वंशे; सचतुर्थांशसप्तविंशत्यङ्गुलो दण्डः। सपादाङ्गुलमितान्यन्तरालानि। षष्ठांशोनकनिष्ठामध्यपर्वमूलमिता खानिः गर्भरन्ध्रम्। महानन्दे वंशे; त्रिंशदङ्गुलो दण्डः। अन्तरालानि पृथक् सार्धाङ्गुलानि। परं लक्ष्म नाथेन्द्रवत्। रुद्रवंशे; दण्डः सपादत्रयस्त्रिंशदङ्गुलः। अष्टमांशोनाङ्गुलद्वयपरिमितान्यन्तरालानि। आदित्यवंशे; अष्टमांशाधिकपञ्चत्रिंशदङ्गुलो दण्डः। अष्टमांशो-

कनिष्ठामध्यपर्वोक्तमपरं रुद्रवंशकम् ।
षोडशांशोनितैः सार्धैः सप्तत्रिंशन्मिताङ्गुलैः ॥ ५५३ ॥
मितो दण्डो विश्वमूर्तावन्तरेष्वङ्गुलद्वयम् ।
षोडशांशाधिकं माने प्रत्येकं मध्यपर्वणा ॥ ५५४ ॥
कनिष्ठाया मिता खानिः शेषमादित्यवंशवत् ।
मनौ दण्डस्तु पादोनैकचत्वारिंशताङ्गुलैः ॥ ५५५ ॥
मितः शिरः पृथक्प्रान्तदेशौ सार्धाङ्गुलद्वयौ ।
प्रत्येकमन्तरालेषु सपादद्वयङ्गुला मितिः ॥ ५५६ ॥
विश्वमूर्तिवदन्यत्तु लक्ष्म श्रीशार्ङ्गिणोदितम् ।
वंशश्चतुर्दशैवैवं प्रोक्ताः सोढलसूनुना ॥ ५५७ ॥
नातः परं तु वंशानामीदृशामस्ति संभवः ।
तेषु रन्ध्राङ्गुलीप्राप्तिर्न कस्यापि हि दृश्यते ॥ ५५८ ॥
अतिमन्द्रध्वानित्वाच्च न ते तत्त्वविदां मताः ।
गतानुगतिकत्वेन त्वेकवीरादयस्त्रयः ॥ ५५९ ॥
कथिता न तु तेष्वस्ति रक्तिमाधुर्यधुर्यता ।

नाङ्गुलद्वयपरिमितान्यन्तरालानि । षोडशांशोनितैरिति । विश्वमूर्तौ त्रयोदशाङ्गुले; षोडशांशोनसप्तत्रिंशदङ्गुलो दण्डः । मनाविति । मनौ ; पादोनैकचत्वारिंशदङ्गुलो दण्डः । शिरःप्रान्तौ पृथक् सार्धाङ्गुलद्वयौ । अन्तरालेषु चतुर्थांशद्वयङ्गुला मितिर्मानम् । अन्यत्तु लक्ष्म विश्वमूर्तिवत । एवं चतुर्दशैव वंशाः । अतः परं सुषिरेषु अङ्गुलीप्राप्त्यभावात अतिमन्द्रनादत्वाच्च वंशा न कार्याः ॥ -५३५–५५८- ॥

(सु०) ननु माधुर्याद्यभावे यदि वंशो न कर्तव्य तर्ह्याद्यास्त्रयो विमोक्तव्या इत्यत्राह—गतानुगतिकत्वेनेति । पूर्वप्रसिद्धिमाश्रित्यैव त्रय एकवीरादय उक्ताः ।

चतुर्मुखादयस्तस्मादेकादश मनोहराः ॥ ५६० ॥
स्वमतेऽभ्युपगम्यन्ते वंशाः सोढलसूनुना ।
शार्ङ्गदेवोऽन्यमानेन वंशरूपं न्यरूपयत् ॥ ५६१ ॥
तिर्यग्यवोदरैः सार्धैश्चतुर्भिर्निस्तुषैरिह ।
अङ्गुलं तेन पूर्वोक्तरीत्यारभ्यैकवीरतः ॥ ५६२ ॥
सन्ति द्वाविंशतिर्वंशविशेषास्तेषु चक्ष्महे ।
वंशश्रेणीमिमामाह निःशङ्कोऽनुपमाभिधाम् ॥ ५६३ ॥
एकवीरे दण्डमानं स्यात्षोडशभिरङ्गुलैः ।
सार्धेन यवपादेनाभ्यधिकैस्तच्छिरोन्तयोः ॥ ५६४ ॥
सार्धाङ्गुलद्वयं मानं प्रत्येकं परिकीर्तितम् ।
सपादमङ्गुलं जातिमुखे रन्ध्राष्टके पुनः ॥ ५६५ ॥
पृथक्तृतीयभागोनमङ्गुलं मानमिष्यते ।
अर्धाङ्गुलानि प्रत्येकमन्तरालानि सप्त च ॥ ५६६ ॥
मूलतः पञ्चमांशोनकनिष्ठामध्यपर्वणा ।
मिता स्वानिर्भवेत्ताररन्ध्रजातिमुखान्तरम् ॥ ५६७ ॥

वस्तुतस्तु चतुर्मुखादय एवैकादशोचिताः । शार्ङ्गदेव इति । अन्येन प्रमाणेन द्वाविंशतिसंख्याकं वंशानां रूपं शार्ङ्गदेवो निरूपितवान् । तत्र परिभाषामाह—तिर्यगिति । अन्यस्मिन् वंशलक्षणे तिर्यक् स्थितैः सार्धैश्चतुर्भिर्यवोदरैरङ्गुलम् । तेनाङ्गुलेन पूर्वोक्तरीत्या द्वाविंशतिर्वंशा एकवीरमारभ्य वक्ष्यमाणा विशेषेण ज्ञातव्याः । इयं वंशश्रेणी अनुपमेत्युच्यते । एकवीर इति । एकवीरे वंशे सार्धद्वयचतुर्थांशाधिकषोडशाङ्गुलो दण्डः । शिरःप्रान्तौ सार्धद्वयङ्गुलौ । चतुर्थांशाङ्गुलमितं फूत्काररन्ध्रम् । अष्टौ रन्ध्राणि तृतीयांशाङ्गुलमितानि । अन्तरालानि अर्धाङ्गुलमितानि । ताररन्ध्रजातिमुखयोरन्तरमेकवीरादिसंज्ञाभिरेव

एकवीरादिसंज्ञाभिः सर्ववंशेषु वेदितम् ।
अष्टमांशविहीनेन यवार्धेनाधिकैर्भवेत् ॥ ५६८ ॥
अङ्गुलैः सप्तदशभिर्दण्डमानमुमापतौ ।
एकाङ्गुलाधिकस्तस्माद्दण्डस्त्रिपुरुषे मतः ॥ ५६९ ॥
अनयोर्वंशयोः शेषं लक्ष्म स्यादेकवीरवत् ।
मानं स्याद्यवपादोनविहीनाङ्गुलविंशतिः ॥ ५७० ॥
चतुर्मुखस्य दण्डस्यान्तरालेष्वर्धमङ्गुलम् ।
अष्टमांशाधिकं मानं पृथगन्यत्तु पूर्ववत् ॥ ५७१ ॥
सद्वात्रिंशांशपादोनद्वियवाधिकया मितः ।
दण्डोऽङ्गुलैकविंशत्या पञ्चवक्त्रस्य कीर्तितः ॥ ५७२ ॥
अङ्गुलस्य त्रिभिः पादैः पादोनैरन्तराणि तु ।
मितानि सप्त प्रत्येकं पूर्ववल्लक्षणं परम् ॥ ५७३ ॥
सार्धत्रयोविंशतिः स्यादङ्गुलानां यवाधिका ।
मानं षण्मुखदण्डस्य पादोनं त्वङ्गुलत्रयम् ॥ ५७४ ॥
पृथक्शिरोन्तयोर्मानमन्तरेषु तु सप्तसु ।
यवपादाधिकं मानं पृथक्पादोनमङ्गुलम् ॥ ५७५ ॥
शेषं तु पूर्ववद्वंशे मुनौ स्याद्दण्डसंमितिः ।

पूर्वोक्तप्रकारेण ज्ञापितम् । वंशस्थैर्नवभी रन्ध्रैरित्यादिना अष्टमांशहीनयवार्धाधिकसप्तदशाङ्गुलो दण्ड उमापतेर्ज्ञातव्यः । त्रिपुरुषस्य एकाङ्गुलेनाधिको दण्ड इति । मानमिति । चतुर्मुखस्य यवचतुर्थांशहीनविंशत्यङ्गुलो दण्डः । अष्टमांशाधिकाङ्गुलपरिमितान्यन्तरालानि । द्वात्रिंशत्तमांशसहितश्चतुर्थांशोनयवद्वयाधिकैकविंशत्यङ्गुलो दण्डः पञ्चवक्त्रस्य । पादोनत्र्यङ्गुलमितान्यन्तरालानि । यवाधिकसार्धत्रयोविंशत्यङ्गुलो दण्डः षण्मुखस्य । शिरःप्रान्तौ पादोनत्र्यङ्गुलौ । यवचतुर्थांशाधिकपादोनाङ्गुलमितान्यन्तरालानि । मुनिवंशे यव-

यवपादोनपादोनाङ्गुलषड्विंशतिर्मिता ॥ ५७६ ॥
अङ्गुलं यवपादेन न्यूनमन्तरसप्तके ।
प्रत्येकं मानमाख्यातं शेषं षण्मुखवंशवत् ॥ ५७७ ॥
वसौ वंशे यवार्धेन द्वात्रिंशांशयुजाधिका ।
स्यात्सप्तविंशतिः सार्धाङ्गुलानां दण्डसंमितिः ॥ ५७८ ॥
सपादेन तु पादेन द्वात्रिंशांशयुतेन च ।
यवस्याभ्यधिकं मानमन्तरेष्वङ्गुलं पृथक् ॥ ५७९ ॥
शेषं तु मुनिवद्दण्डे नाथेन्द्रस्य तु संमितिः ।
यवाष्टमांशसहितैरेकोनत्रिंशदङ्गुलैः ॥ ५८० ॥
सार्धपादाधिकैरुक्ता पृथक्तु सुषिराष्टके ।
तारादौ यवयुक्तेनार्धाङ्गुलेन मितिर्भवेत् ॥ ५८१ ॥
अन्तरेषु पृथङ्मानमष्टमांशाधिकाङ्गुलम् ।
शेषं तु पूर्ववद्दण्डे महानन्दस्य संमितिः ॥ ५८२ ॥
उक्ता यवाष्टमांशोनाङ्गुलैकत्रिंशदिष्यते ।
सपादावन्तरालेषु प्रत्येकं मानमुच्यते ॥ ५८३ ॥
सपादमङ्गुलं शेषं पूर्वोक्तं शार्ङ्गिणोदितम् ।
अङ्गुलानि त्रयस्त्रिंशदष्टमांशयुतानि तु ॥ ५८४ ॥
यवाष्टमांशयुक्तानि रुद्रे दण्डमितिर्भवेत् ।

चतुर्थांशोनपादोनषड्विंशत्यङ्गुलो दण्डः । यवचतुर्थांशन्यूनाङ्गुलपरिमितानि सप्तान्तरालानि । वसाविति । त्रिंशत्तमांशसहितयवार्धाधिकसप्तविंशत्यङ्गुलो दण्डः । द्वात्रिंशत्तमांशसहित सपादचतुर्थांशाधिकाङ्गुलपरिमितान्यन्तरालानि । नाथेन्द्रस्य यवाष्टमांशसहितचतुर्थांशाधिकैकोनत्रिंशदङ्गुलो दण्डः । यवाधिकार्धाङ्गुलमितानिताररन्ध्रादीन्यष्टौ रन्ध्राणि । महानन्दस्य दण्डः यवाष्टमांशाधिक एकत्रिंशदङ्गुलः । सपादाङ्गुलमितान्यन्तरालानीति । रुद्रे यवाष्ट-

युक्तं सार्धेन पादेनाङ्गुलमन्तरसप्तके ॥ ५८५ ॥
प्रत्येकं मानमाख्यातं खानेर्मानं तु मूलतः ।
षष्ठांशोनं मध्यपर्व कनिष्ठायाः प्रकीर्तितम् ॥ ५८६ ॥
शेषं प्राग्वदथादित्ये स्यात्पञ्चत्रिंशताङ्गुलैः ।
यवाष्टमांशसहितैर्दण्डमानमथान्तरम् ॥ ५८७ ॥
सार्धाङ्गुलकमेकैकं खानिमानं तु कीर्तितम् ।
मूलतः सप्तमांशोनं कनिष्ठापर्व मध्यमम् ॥ ५८८ ॥
प्राग्वत्परं विश्वमूर्तौ वंशे दण्डस्य संमितिः ।
यवाष्टमांशसहितैः स्यात्सप्तत्रिंशताङ्गुलैः ॥ ५८९ ॥
सार्धपादाधिकैः शीर्षप्रान्तौ त्र्यङ्गुलकौ पृथक् ।
अन्तरेष्वष्टमांशोनाधिकं सार्धाङ्गुलं पृथक् ॥ ५९० ॥
मानं खानेस्त्वष्टमांशन्यूनमामूलतो मतम् ।
मध्यपर्व कनिष्ठायाः पूर्वोक्तं शेषमिष्यते ॥ ५९१ ॥
दण्डमानं मनोरेकोनचत्वारिंशताङ्गुलैः ।
सपादैरष्टमांशेन यवस्य सहितैरपि ॥ ५९२ ॥
पादोनमङ्गुलद्वन्द्वं पृथगन्तरसप्तके ।

मांशाधिकत्रयस्त्रिंशदङ्गुलो दण्डः । सार्धपादाधिकाङ्गुलपरिमितान्यन्तरालानि । षष्ठांशन्यूनकनिष्ठामध्यपर्वमिता खानिः । अथेति । आदित्यवंशस्य दण्डः यवाष्टमांशाधिपञ्चत्रिंशदङ्गुलः । सार्धाङ्गुलान्यन्तरालानि । विश्वमूर्ताविति । यवाष्टमांशाधिकसार्धचतुर्थांशाधिकसप्तत्रिंशदङ्गुलो दण्डः । शीर्षप्रान्तौ सार्धपादाधिकत्र्यङ्गुलौ । अष्टमांशोनाधिकसार्धाङ्गुलानान्यन्तरालानि । खानेस्तु मानं कनिष्ठाया मध्यपर्व । शेषं पूर्वोक्तवत् । दण्डमानमिति सपादयवाष्टमांशाधिकैकोनचत्वारिंशदङ्गुलो दण्डो मनुवंशस्य । चतुर्थांशोनद्व्यङ्गुलान्यन्तरालानि । खानिः कनिष्ठाया मध्य-

मानं खानिस्तु मातव्या कनिष्ठामध्यपर्वणा ॥ ५९३ ॥
पूर्वोक्तमपरं सार्धैकचत्वारिंशताङ्गुलैः ।
युक्तैर्यवस्य पादोनपादद्वन्द्वेन संमितिः ॥ ५९४ ॥
दण्डे पञ्चदशस्य स्यात्ततः सार्धयवत्रया ।
प्रत्येकमष्टरन्ध्री स्यादन्तरेष्वङ्गुलद्वयम् ॥ ५९५ ॥
अष्टमांशोनितं मानं प्रत्येकं मनुवत्परम् ।
कलानिधौ सपादैः स्यात् त्रिचत्वारिंशताङ्गुलैः ॥ ५९६ ॥
यवाधिकैर्दण्डमानमन्तरालेषु सप्तसु ।
प्रत्येकमङ्गुलद्वन्द्वं सपादं पूर्ववत्परम् ॥ ५९७ ॥
दण्डोऽष्टादशवंशस्याष्टाचत्वारिंशताङ्गुलैः ।
यवान्वितैः सपादेन सपादेनाधिकैर्मितः ॥ ५९८ ॥
प्रत्येकं षोडशांशोनसार्धाङ्गुलयुगं मतम् ।
प्रमाणमन्तरालेषु परं पूर्ववदिष्यते ॥ ५९९ ॥
दण्डे त्वेकोनविंशस्य साङ्घ्रिपञ्चाशदङ्गुलम् ।
यवेनाभ्यधिकं मानमन्तरेषु तु सप्तसु ॥ ६०० ॥
प्रत्येकं षोडशांशोनाधिकं सार्धाङ्गुलद्वयम् ।
प्राग्वत्परं मुरल्यां तु दण्डमानं यवाधिकम् ॥ ६०१ ॥

पर्वणा मातव्या । अपरमिति । गर्भरन्ध्रं कर्तव्यमित्यर्थः । पादोनयवचतुर्थांशद्वयाधिकसार्धैकचत्वारिंशदङ्गुलो दण्डः पञ्चदशस्य वंशस्य । अष्टौ रन्ध्राणि सार्धयवत्रयमितानि । अष्टमांशन्यूनद्व्यङ्गुलान्यन्तरालानि । कलानिधाविति । यवाधिकसतुर्यांशद्विचत्वारिंशदङ्गुलो दण्ड इति । सप्तदशस्य वंशस्य दण्डो यवाधिकषट्चत्वारिंशदङ्गुलः । अष्टादशवंशस्य सचतुर्थांशपादाधिकयवसहिताष्टाचत्वारिंशदङ्गुलो दण्डः । दण्डे त्विति । एकोनविंशस्य वंशस्य दण्डः सार्धयवाधिकपञ्चदशाङ्गुलः । मुरल्यामिति । मुरलीसंज्ञके वंशे

द्वापञ्चाशद्भवेत्सार्धाङ्गुलानामन्तराणि तु ।
पादोनत्र्यङ्गुलानि स्युः प्रत्येकं पूर्ववत्परम् ॥ ६०२ ॥
एकविंशे दण्डमानं पञ्चपञ्चाशदङ्गुलम् ।
सपादं षोडशांशेनाभ्यधिकं यवसंयुतम् ॥ ६०३ ॥
अङ्गुलान्यन्तराणि स्युः प्रत्येकं पूर्ववत्परम् ।
दण्डमानं श्रुतिनिधावष्टापञ्चाशदङ्गुलम् ॥ ६०४ ॥
सार्धं यवाधिकं तस्य त्वन्तरेष्वङ्गुलत्रयम् ।
सपादषोडशांशोनाधिकं मानं पृथङ्मतम् ॥ ६०५ ॥
पूर्वोक्तमपरं लक्ष्म शार्ङ्गदेवेन कीर्तितम् ।
सर्वेषामपि वंशानां पिण्डः सार्धयवो भवेत् ॥ ६०६ ॥
रक्तिमाधुर्यविरहात्पञ्चवक्त्रादधस्तनाः ।
चतुर्मुखादयो वंशा नेष्टाः श्रीशार्ङ्गिसूरिणा ॥ ६०७ ॥
देशीवंशेषु सर्वेषु मुद्रितात्पूर्ववंशतः ।
उत्तरो मुद्रितो वंशः स्वरार्धेनाधिको भवेत् ॥ ६०८ ॥
वंशानामल्पमानानां सर्वत्रोत्तरता मता ।
स्वरार्धं स्यादूर्ध्वतया दक्षिणस्य कनिष्ठया ॥ ६०९ ॥
अतस्तस्या मुद्रितायां पूर्ववंशस्य जायते ।

यवाधिकसार्धद्वापञ्चाशदङ्गुलो दण्डः । चतुर्थांशोनत्र्यङ्गुलान्यन्तरालानि । एकेति । एकविंरस्य वंशस्य यवाधिकसपादषोडशांशाधिकपञ्चपञ्चाशदङ्गुलो दण्डमानमिति । श्रुतिनिधौ वंशे यवाधिकसार्धाष्टपञ्चाशदङ्गुलो दण्डः । षोडशांशाधिकसपादत्र्यङ्गुलान्यन्तरालानि ॥ -५९९–६०६ ॥

(सु०) रक्तीति । पञ्चवक्त्रात् अधस्तनाः चतुर्मुखादयः एकवीरान्ताश्चत्वारो वंशाः रञ्जकत्वमाधुर्याभावान्न संमताः । देशीवंशेष्विति । सर्वेष्वपि

उत्तरो मुद्रितो वंशः पूर्वतुल्यस्वरोदयः ॥ ६१० ॥
उद्धृताङ्गुलिवृद्धौ तु तस्मादप्युत्तरोत्तरे ।
मिलन्ति मुद्रिता वंशा यथासंख्यं पुरातनैः ॥ ६११ ॥
स्वरोदयेऽप्यङ्गुलयः शास्त्रीये लौकिके तथा ।
वंशे तुल्यःप्रकाराः स्युरिति श्रीशार्ङ्गिणोदितम् ॥ ६१२ ॥
एकस्वराणि रन्ध्राणि संनिधौ व्यवधावपि ।
मिलन्ति सर्ववंशानामिति ब्रूते हरप्रियः ॥ ६१३ ॥
मानहीनं तु यद्रन्ध्रं खानिर्वा यत्र तादृशी ।
न तद्रन्ध्रैः स्वजातीयैर्मिलन्ति स्वरभङ्गतः ॥ ६१४ ॥
चतुर्दशादिवंशानामावंशादेकवीरतः ।
यथैकैकस्वराधिक्यं वंशे स्यादुत्तरोत्तरे ॥ ६१५ ॥

पूर्वोक्तेषु देशीवंशेषु आद्याद्यवंशात् सकाशात् द्वितीयद्वितीयवंशो मुद्रितः पिहितः सन् अर्धस्वराधिको भवति । अल्पप्रमाणानां वंशानामुत्तरत्वं द्वितीयत्वम् । दक्षिणहस्तस्य कनिष्ठायां मुक्तायां स्वरार्धं जायते । पूर्ववंशस्य कनिष्ठायां मुद्रितायां यथा ध्वनिस्तथोत्तरे वंशे मुद्रिते ध्वनिर्जायते । उद्धृतेति । उद्धृतानामङ्गुलीनां वृद्धावुत्तरोत्तरे वंशे पुरातना वंशा मुद्रिता मिलन्ति, समाननादा भवन्ति । यथासंख्यमिति । अङ्गुलिद्वयोद्धृतौ द्वितीयः पुरातनो मिलति । अङ्गुलित्रयोद्धृतौ तृतीय इति । स्वरोदय इति । शास्त्रोक्ते लौकिके च वंशेस्वरोदये अङ्गुलिप्रकारास्तुल्य एव । एकस्वरोत्पादके रन्ध्राणि संनिधौ संनिकर्षे व्यवधौ विप्रकर्षे वा समाननादानि भवन्तीति शार्ङ्गदेव आह । मानहीनमिति । प्रमाणहीनं यद्रन्ध्रमुक्तं गर्भरन्ध्रं वा, यत्रोक्तप्रमाणहीनैः रन्ध्रैः सजातीयैः समानस्वरोत्पादकैरपि स्वरभङ्गतः तत्र न मिलन्ति, समाननादा न भवन्तीत्यर्थः । मिलनं समाननादत्वं प्रसिद्धमेव लोके । इदानीमन्यथा वंशान् लक्षयितुमाह—चतुर्दशेति । चतुर्दशादीनां वंशानामेकवीरपर्यन्तं मुद्रिते उत्तरो-

मुद्रिते पूर्वपूर्वस्माद्वंशान्मुद्रितरन्ध्रकात् ।
इदानीं तादृशीं वंशस्वरूपरचनामिमाम् ॥ ६१६ ॥
शार्ङ्गदेवः समाचष्टे शिवानुग्रहशुद्धधीः ।
वंशपद्धतिरेषा च शार्ङ्गविद्याभिधीयते ॥ ६१७ ॥
अङ्गुलं षड्यवं चात्र रन्ध्रादिमितये मतम् ।
एकवीरे दण्डमानं सपादद्वादशाङ्गुलम् ॥ ६१८ ॥
यवार्धेनाधिकं तस्य शिरोन्तौ द्व्यङ्गुलौ पृथक् ।
मुखरन्ध्रेऽङ्गुलं मानं तारादौ सुषिराष्टके ॥ ६१९ ॥
प्रत्येकमङ्गुलदलं तेषां त्वन्तरसप्तके ।
यवद्वयं पृथङ्मानमुक्तं श्रीशार्ङ्गिसूरिणा ॥ ६२० ॥
सर्ववंशेषु तारस्य मुखरन्ध्रस्य चान्तरे ।
एकवीरादिसंज्ञाभिर्विज्ञेयाङ्गुलसंमितिः ॥ ६२१ ॥
उमापतौ त्रिपुरुषे चैकैकाङ्गुलवर्धितम् ।
दण्डमानं परं लक्ष्म त्वेकवीरवदिष्यते ॥ ६२२ ॥
चतुर्मुखे दण्डमानं पादन्यूनयवाधिकैः ।

त्तरे वंशे पूर्वस्मात् मुद्रितरन्ध्रात् वंशात् यथा एकैकस्वराधिक्यं जायते । इमां वंशस्वरूपरचनां शिवानुग्रहशुद्धधीः शार्ङ्गदेवः समाचष्टे । एषा वंशपद्धतिः शार्ङ्गविद्येत्यभिधीयते । अङ्गुलपरिमाणं चैकवीरादिसंज्ञाभिरेव ज्ञातव्यम् । अङ्गुलमिति । अत्र प्रकरणे षड्यवप्रमाणमङ्गुलं ज्ञातव्यम् ॥ ६०७–६१७- ॥

(सु०) एकवीर इति । एकवीरवंशस्य दण्डः यवाधिकसपाद-द्वादशाङ्गुलः । शिरःप्रान्तौ द्व्यङ्गुलौ । मुखरन्ध्रमङ्गुलप्रमाणम् । तारादीन्यष्ट रन्ध्राणि अर्धाङ्गुलानि यवद्वयमितानि । उमापतित्रिपुरुषयोः एकैकाङ्गुल-वर्धितो दण्डः । अपरं लक्ष्म तु एकवीरवत् । चतुर्मुख इति । चतुर्थांश-

अङ्गुलैः पञ्चदशभिः सार्धैरस्यान्तरेषु तु ॥ ६२३ ॥
सपादद्वियवी मानं पृथगन्यत्तु पूर्ववत् ।
सपादैः सप्तदशभिः पादन्यूनयवाधिकैः ॥ ६२४ ॥
अङ्गुलैर्दण्डमानं स्यात्पञ्चवक्त्रेऽन्तरेषु तु ।
षोडशांशाधिका मानं पादोनत्रियवी पृथक् ॥ ६२५ ॥
शेषं तु पूर्ववद्दण्डे षण्मुखस्य तु संमितिः ।
युक्ता यवेन सार्धेनाष्टमांशसहितेन च ॥ ६२६ ॥
एकोनविंशतिः प्रोक्ताङ्गुलानामन्तरेषु तु ।
यवस्य सार्धपादाभ्यां युक्तमर्धाङ्गुलं पृथक् ॥ ६२७ ॥
पूर्वोक्तमपरं लक्ष्म दण्डे तु स्यान्मितिर्मुनेः ।
अङ्गुलैरेकविंशत्या सार्धपादद्वयाधिकैः ॥ ६२८ ॥
यवस्य चाष्टमांशेन सपादेन समन्वितैः ।
सपादयवपादेन द्वात्रिंशांशयुतेन च ॥ ६२९ ॥
युक्तमन्तरमानं स्यात्पृथक्पादोनमङ्गुलम् ।
शेषं तु पूर्ववल्लक्ष्म ज्ञेयं वंशे वसौ पुनः ॥ ६३० ॥
अष्टमांशविहीनेन यवेनाधिकया भवेत् ।

न्यूनयवाधिकसार्धपञ्चदशाङ्गुलो दण्डः । रन्ध्राणि सपादयवद्वयमितानि । सपादैरिति । पादन्यूनयवाधिकसपादसप्तदशाङ्गुलो दण्डः पञ्चवक्त्रस्य । षोडशांशाधिकपादोनयवत्रयमितान्यन्तरालानि । दण्ड इति । सार्धयवाधिकाष्टमांशसहितैकोनविंशत्यङ्गुलो दण्डः षण्मुखस्य । यवस्य सार्धपादद्वयाधिकार्धाङ्गुलमितान्यन्तरालानि । दण्डे त्विति । सपादयवाष्टमांशसहितसार्धपादद्वयाधिकैकविंशत्यङ्गुलो दण्डो मुनिवंशस्य ज्ञातव्यः । सचतुर्थांशयवपादसहितद्वात्रिंशत्तमांशाधिकपादोनाङ्गुलप्रमाणान्यन्तरालानि । वंश इति । वसौ वंशे

चतुर्विंशत्यङ्गुलानां चरणन्यूनया मितिः ॥ ६३१ ॥
पृथगष्टसु रन्ध्रेषु सपादत्रियवी मितिः ।
प्रत्येकमन्तरालेषु साष्टमांशयवाधिकम् ॥ ६३२ ॥
पादोनमङ्गुलं मानमपरं लक्ष्म पूर्ववत् ।
सपादयवसंयुक्ताङ्गुलषड्विंशतिर्भवेत् ॥ ६३३ ॥
मानं नाथेन्द्रदण्डस्यान्तरालेषु तु सप्तसु ।
अष्टमांशाधिकं मानमङ्गुलं पूर्ववत्परम् ॥ ६३४ ॥
यवाष्टमांशसहिता सार्धाष्टाविंशतिर्मिता ।
अङ्गुलानां दण्डमानं महानन्देऽन्तरेषु तु ॥ ६३५ ॥
सपादमङ्गुलं सार्धयवपादाधिकं पृथक् ।
प्राग्वत्परं रुद्रदण्डे त्वङ्गुलानां यवाधिका ॥ ६३६ ॥
एकत्रिंशन्मिता मानमथ सार्धयवत्रया ।
प्रत्येकमष्टरन्ध्री स्यादन्तरालेषु सप्तसु ॥ ६३७ ॥
सार्धाङ्गुलं पृथङ्मानं पूर्वोक्तं शेषमिष्यते ।
दण्डस्य मानमादित्ये स्याच्चतुस्त्रिंशदङ्गुलम् ॥ ६६८ ॥
यवेन च सपादेन द्वात्रिंशांशयुजाधिकम् ।

अष्टमांशन्यूनयवाधिकपादोनचतुर्विंशत्यङ्गुलो दण्डः । रन्ध्राण्यष्टौ सपादयवत्रयमितानि । अन्तरालानि अष्टमांशयुक्तयवाधिकपादोनाङ्गुलप्रमाणानि । सपादेति । सचतुर्थांशयवाधिकषड्विंशत्यङ्गुलो दण्डो नाथेन्द्रस्य । परमन्यत्पूर्ववत् । यवाष्टमांशेति । यवस्याष्टमांशाधिकसार्धाष्टाविंशत्यङ्गुलो दण्डो महानन्दस्य । सार्धयवपादाधिकसपादाङ्गुलमितान्यन्तरालानि । रुद्रदण्ड इति । यवाधिकान्येकत्रिंशदङ्गुलानि प्रमाणम् । अष्टरन्ध्राणां सार्धास्त्रयो यवाः । सार्धाङ्गुलप्रमाणमन्तरालम् । दण्डस्येति । सपादयवाधिकपादोनाङ्गुलद्वय-

द्वात्रिंशांशोनपादाभ्यां यवस्य सहितं पृथक् ॥ ६३९ ॥
पादोनमङ्गुलद्वन्द्वं मानमन्तरसप्तके ।
प्राग्वत्परं विश्वमूर्तौ स्यात्सप्तत्रिंशदङ्गुलम् ॥ ६४० ॥
दण्डमानं युतं सार्धयवपादद्वयेन च ।
प्रत्येकमन्तरालेषु त्वङ्गुलद्वितयं मतम् ॥ ६४१ ॥
यवस्य सार्धपादेनाभ्यधिकं पूर्ववत्परम् ।
दण्डो यवाष्टमांशेन सपादेन समन्वितः ॥ ६४२ ॥
चतुश्चत्वारिंशता स्यादङ्गुलैः संमितो मनोः ।
सार्धाङ्गुलद्वयमितौ शिरःप्रान्तौ मतौ पृथक् ॥ ६४३ ॥
सार्धेन षोडशांशेन यवस्याभ्यधिकैस्त्रिभिः ।
पादोनैरङ्गुलैर्मानमन्तरालेषु सप्तसु ॥ ६४४ ॥
पूर्वोक्तं लक्षणं शेषमवोचत्करणाग्रणीः ।
खानिः सर्वेषु वंशेषु कनिष्ठामध्यपर्वणा ॥ ६४५ ॥
मूलेन संमिता कार्येत्युक्तं सोढलसूनुना ।
सर्वमन्यत्तु वंशानां देशीशास्त्रभुवां समम् ॥ ६४६ ॥
एकवीरादयोऽत्रापि त्रयः प्राग्वन्न संमताः ।

प्रमाणान्यन्तरालानि । विश्वमूर्ताविति । सार्धयवपादद्वयाधिकसप्तत्रिंशदङ्गुलो दण्डः सार्धयवपादाधिकांशस्य ज्ञातव्यः । शिरःप्रान्तौ सार्धाङ्गुलद्वयप्रमाणौ मितौ । मनौ यवस्य सार्धषोडशाधिकपादोनत्र्यङ्गुलानि सप्तान्तरालानि । खानिः गर्भरन्ध्रं सर्ववंशेषु कनिष्ठामध्यपर्वमूलमिति । अन्यत्सर्वं लक्षणं देशीशास्त्रसंभूतानां वंशानां समानम् । एकवीरादय इति । एकवीरादयस्त्रयो वंशा अत्रापि प्राग्वद् वृत्त्यादिहीनत्वेनानभिमताः ॥ -६१८–६४६- ॥

धातून्वृत्तित्रयं तत्त्वानुगतौघांश्च यान्पुरा ॥ ६४७ ॥
वाद्यान्याश्रवणीदीनि वीणायां यान्यवादिषम् ।
गेयं श्रुतिस्वरग्राममूर्च्छनादि च यन्मतम् ॥ ६४८ ॥
तत्सर्वं वंशवाद्येऽत्र विशेषेणोपदर्शयेत् ।
वंशवीणाशरीराणि त्रयोऽमी स्वरहेतवः ॥ ६४९ ॥
ललितो मधुरः स्निग्धस्तेषु वंशः प्रशस्यते ।
वंशवीणाशरीराणामेकीभावेन यो ध्वनिः ॥ ६५० ॥
तत्र रक्तिविशेषस्य प्रमाणं विबुधा विदुः ।
अध्वन्यानां प्रवासेषु कामिनीनिर्जितेषु च ॥ ६५१ ॥
शोकार्तेषु प्रयुञ्जीत मृदुमध्यलयध्वनिम् ।
वंशं प्रयुञ्जीत शृङ्गारे द्रुतादिललितध्वनिम् ॥ ६५२ ॥
कम्पितस्फुरितध्वानं वंशं द्रुतलयाश्रयम् ।
क्रोधाभिमानयोः कुर्यान्मतङ्गेनेति कीर्तितम् ॥ ६५३ ॥

(क०) वीणायामिव वंशेऽपि धात्वादयः कर्तव्या इत्याह— **धातूनित्यादि** ॥ -६४७–६४९- ॥

(सु०) धातूनिति । धातून्, विस्तारादीन्; वृत्तित्रयम्, चित्रादिवृत्तित्रयम्, तत्त्वादीनि वाद्यानि, आश्रावणादीनि वाद्यानि च मया यानि वीणायामवादिषम् उक्तवानस्मि, यच्च गेयं श्रुतिस्वरग्राममूर्च्छनादि स्वराध्याये श्रुतं, तत्सर्वं वंशवाद्ये विशेषेण दर्शयेत । वंशेति । वंशः वीणा शरीरं च अमी त्रयः स्वरानुत्पादयन्ति । ललितः, मधुरः, स्निग्ध इति । तेषु लालित्यमाधुर्यस्वभावाद्वंशः श्रेष्ठः ॥ -६४७–६४९- ॥

(क०) वंशवीणीशरीरमेलनोत्पन्नस्य ध्वने रक्तिं स्तौति— **प्रमाणं विबुधा विदुरिति** । वंशस्य विनियोगं दर्शयति— **अध्वन्यानामित्यादिना** ॥ -६५०–६५३ ॥

स्निग्धता घनता रक्तिर्व्यक्तिः प्रचुरता ध्वनेः ।
लालित्यं कोमलत्वं च नादानुरणनं तथा ॥ ६५४ ॥
त्रिस्थानत्वं श्रावकत्वं माधुर्यं सावधानता ।
द्वादशेति गुणाः प्रोक्ताः फूत्कारे सूरिशार्ङ्गिणा ॥ ६५५ ॥
तत्र शब्दगुणेष्वेवैकादश प्रोक्तलक्षणाः ।
फूत्कारैः सावधानत्वं न्यूनताधिक्यवर्जनम् ॥ ६५६ ॥

(सु०) ननु कथं माधुर्यादिविशेषो ज्ञातुं शक्यते तत्राह—वंशेति । वंशादीनामेकीभावेन समुदायेन यो ध्वनिः जायते, तेषु रञ्जकविशेषेण परिमाणं सुज्ञा जानन्ति । अध्वन्यानामिति । पान्थानां प्रवासे, स्त्रीनिर्जितेषु पुरुषेषु, दुःखितेषु च मन्द्रमध्यलयनादं वंशं प्रयुञ्जीत वादयेत् । द्रुतललितध्वनिं शृङ्गारे, कम्पितस्फुरितनादं द्रुतलयाश्रयं च वंशं क्रोधाभिमानयोः प्रयुञ्जीतेत्युक्तं मतङ्गाचार्येण ॥ -६९०–६९३ ॥

(क०) अथ फूत्कारस्य गुणानाह—**स्निग्धतेत्यादि** । **तत्र शब्दगुणेष्वेवैकादश प्रोक्तलक्षणा इति** । तत्र; द्वादशगुणेषु मध्ये, **एकादश** सावधानताव्यतिरिक्ताः स्निग्धतादय एकादश गुणाः । **शब्दगुणेष्वेवेति**; प्रकीर्णकाध्याये मृष्टादयः पञ्च गुणा उक्ताः । तत्रैव प्रोक्तलक्षणा द्रष्टव्याः । प्रोक्तलक्षणं च शरीरस्य वंशस्य च शब्दस्यैकरूपतासंपादनादिति भावः । सावधानतां लक्षयति—**फूत्कारैरिति** । अत्र फूत्कारशब्देन मुखरन्ध्रजनितः शब्द उच्यते ॥ ६५४–६५६ ॥

इति द्वादश फूत्कारगुणाः

(सु०) फूत्कारगुणानाह—स्निग्धतेति । स्निग्धता स्नेहः, घनता, अन्तःसारत्वम्; रक्तिः, रञ्जकत्वम्; व्यक्तिः, प्राकट्यम्; प्रचुरता, बाहुल्यम्; लालित्यम्, लावण्यमिवाङ्गनासु वैदग्ध्यं प्रसिद्धम्; कोमलत्वम्,

फूत्कारो यमलः स्तोकः कृतः स्खलित इत्यमी ।
फूत्कारदोषा यमलं ब्रुवते प्रतिफूत्कृतिम् ॥ ६५७ ॥
एवमन्वर्थनामत्वान्नोच्यते लक्षणं पृथक् ।
कम्प्रितस्तुम्बकी काकी संदष्टश्चाऽव्यवस्थितः ॥ ६५८ ॥
पञ्चेति फूत्कृतेर्दोषानपरानूचिरे परे ।
यः कफोपहताद्वक्त्राद्विस्वरः स्फुरितो भवेत् ॥ ६५९ ॥
कपिलोऽसौ तुम्बध्वानप्रायः प्रोक्तस्तु तुम्बकी ।
तारन्यूनतया काकस्वरः काकीति कथ्यते ॥ ६६० ॥
अल्पः संदष्टवद्भाति योऽसौ संदष्ट उच्यते ।
ऊनोऽधिको वा रूक्षः कथ्यते सोऽव्यवस्थितः ॥ ६६१ ॥
कण्ठस्य गुणदोषा ये पुरोक्तास्तेषु केचन ।
फूत्कारेऽपि यथायोगं योजनीया मनीषिभिः ॥ ६६२ ॥

इति दश फूत्कारदोषाः

सौकुमार्यम्; अनुरणनम्, प्रतिशब्दः; त्रिस्थानत्वम्, स्थानत्रयव्याप्तिः; श्रावकत्वम्, श्रोतृणां सुखकरत्वम; माधुर्यम्, मधुरता; सावधानत्वम्, अवहितत्वम्; एते द्वादश फूत्कारगुणाः । तत्र एकादश शब्दगुणेषु लक्षिताः । सावधानत्वं लक्षयति—फूत्कारैरिति ॥ ६५४–६५६ ॥

इति द्वादश फूत्कारगुणाः

(क०) अथ फूत्कारदोषानाह—**फूत्कार इत्यादि** । मतान्तरेणान्यानपि दोषानाह—**कपिल इत्यादि** । **कफोपहतात्** श्लेष्मणा निबद्धात् । **तुम्बध्वानप्रायः**; तुम्ब इत्यनुकरणशब्दः, तुम्बध्वानः तेन प्रचुर इत्यर्थः । तुसु इत्यपि पाठो दृश्यते, सोऽप्यनुकरणशब्दः । **तारन्यूनतयेति** । तारस्थाने श्रुतिहीनत्वेनेत्यर्थः । **संदष्टवदल्प इति** । यथा लोके संदष्टमुपदंशादिकं

अङ्गुलीसारणाभ्यासः सुस्थानत्वं सुरागता ।
सुरागव्यक्तिमाधुर्यान्विता वेगाद्रतागते ॥ ६६३ ॥
गीतवादनदक्षत्वं गातॄणां तानदायिता[1] ।

कतिपयावयवशून्यमल्पं दृश्यते तथा फूत्कारोऽप्यल्पतया संदष्टवत् संदष्ट उच्यते । **कण्ठस्येति** । शरीरस्य ध्वनेः गुणाः मृष्टादयः, दोषा रूपादयः ॥ ६५७–६६२ ॥

इति दश फूत्कारदोषाः

(सु०) फूत्कारदोषानाह—**फूत्कार** इति । फूत्कारे चत्वारो दोषाः ; यमलः, स्तोकः, कृशः, स्खलित इति । तत्र फूत्कारान्तरेण फूत्कृतिपूरणं प्रतिफूत्कृतिः यमल इत्युच्यते । अन्ये त्रयः सार्थकनामधेयाः । स्तोकः, स्थूलोऽपि स्थानप्राप्त्यसमर्थः । कृशः, स्थानप्राप्तिसमर्थोऽपि तनीयान् । स्खलितः, मध्ये मध्ये स्थगितः । मतान्तरमाह—**कम्पित** इति । कम्पितादीन् पञ्च दोषान् केचिदाहुः । तेषां लक्षणमाह—**य** इति । यः कफोपहताद् वक्त्रात् विकृतस्फुरणे यो ध्वनिर्जायते स कम्पितः (१); तुम्बनादसदृशः तुम्बकी (२); तारप्राप्तिरहितः काकसदृशः स्वरः काकी (३); स्वल्पः संदष्ट इव प्रतीयते स संदष्टः (४); यस्तु कदाचिदूनः कदाचिदधिको रूक्षः स्वरः प्रतीयते सोऽव्यवस्थितः (५); **कण्ठस्येति** । ये गुणदोषाः प्रकीर्णकाध्याये कण्ठस्योक्ताः ; तेऽपि यथासंभवं योजनीयाः ॥ ६५७–६६२ ॥

इति दश फूत्कारदोषाः

(क०) अथ वांशिकगुणानाह—**अङ्गुलीसारणाभ्यास इत्यादि** । **वेगाद्रतागते सुरागव्यक्तिमाधुर्यान्वितेति** । गतमारोहः आगतमवरोहः,

[1] स्थानदायितेति सुधाकरपाठः ।

**तद्दोषाच्छादनं मार्गदेशीरागेषु कौशलम् ॥ ६६४ ॥**
**स्वस्थानवदपस्थाने रागोद्भूतिप्रगल्भता ।**
**वांशिकस्य गुणानेतान्वक्ति श्रीकरणाग्रणीः ॥ ६६५ ॥**

इति वांशिकगुणाः

आरोहावरोहयोः वेगकृतयोरपि सुरागव्यक्तिमाधुर्यान्वितत्वं गुण इत्यर्थः । **गातॄणां तानदायितेति** । गातृभिः गातुमिष्यमाणस्य तानस्य तत्तद्रागानुगुण्येन प्रथमं प्रदर्शनम् । स्थानदायितेति पाठे तु स्थानानि मन्द्रमध्यताराणि, तेषां प्रदर्शनम् । **तद्दोषाच्छादनमिति** । तेषां गातॄणां दोषाः संदष्टत्वादयः पूर्वोक्ताः पञ्चविंशतिः, तेषामाच्छादनम् । यथा श्रोतॄणां रागभङ्गो न भवति, तथा तद्दोषतिरोधानं वांशिकः कुर्यादित्यर्थः । **स्वस्थानवदपस्थाने रागोत्पत्तिप्रगल्भतेति** । स्वस्थानानि पूर्वोक्तानि मुखचालनादीनि चत्वारि । ततोऽतिरिक्तानि स्वस्थानान्यपस्थानान्युच्यन्ते । अत्र यद्यपि स्वस्थान एव रागाभिव्यक्तिर्भवति, नापस्थाने; तथापि वांशिकः स्वप्रगल्भतया अपस्थानेऽपि स्वस्थानवद्रागमुत्पादयति चेत्, स तस्य गुणः ॥ ६६३–६६५ ॥

इति वांशिकगुणाः

(सु०) वांशिकगुणानाह—अङ्गुलीति । अङ्गुलीसारणे पिधानमोचनादौ अभ्यासः, सुस्थानत्वम्, सम्यक्स्थानप्राप्तिः; सुरागता, यथोक्तरागाभिव्यक्तिमाधुर्यान्विता, तद्वेगात् गतागतिः, प्रबन्धवादने शक्तिः, गायकानां स्थानप्रदायित्वं, गायकदोषाच्छादनं, सर्वरागपरिज्ञानं, स्वस्थानवदपस्थानेऽपि रागोद्भवशक्तत्वमेते वांशिकस्य गुणाः ॥ ६६३–६६९ ॥

इति वांशिकगुणाः

मिथ्याप्रयोगबाहुल्यमेतद्गुणविपर्ययः ।
इष्टस्थानानवाप्तिश्च शिरसः कम्पनं तथा ॥ ६६६ ॥
वांशिकस्येति दोषाः स्युर्वर्जनीयाः प्रयत्नतः ।

इति वांशिकदोषाः

एकः स्याद्वांशिको मुख्यश्चत्वारोऽस्यानुयायिनः ॥ ६६७ ॥
वांशिकानामिति प्रायस्तज्ज्ञैर्बृन्दं निगद्यते ।

इति वांशिकबृन्दम्

(क०) अथ वांशिकदोषानाह—मिथ्याप्रयोगेत्यादि । मिथ्याप्रयोगेऽस्थाने गमकालापः । यथोक्तं प्राक्—

'आलापो गमकालप्तिरक्षरैर्वर्जिता मता ।
सैव प्रयोगशब्देन शार्ङ्गदेवेन शब्दिता ॥' इति ।

(संगीतरत्नाकरे ४—३६०)

तस्य बाहुल्यं प्रचुरता । एतद्गुणविपर्यय इति । एतेषामङ्गुलीसारणाभ्यासादीनां गुणानां विपर्ययोऽन्यथाभावः ॥ ६६६- ॥

इति वांशिकदोषाः

(सु०) वांशिकदोषानाह—मिथ्येति । मिथ्यारञ्जका ये प्रयोगाः पूर्वोक्तगुणव्यत्यासाः ॥ ६६६- ॥

इति वांशिकदोषाः

(क०) अथ वांशिकानां बृन्दमाह—एकः स्यादित्यादि ॥ ६६७- ॥

इति वांशिकबृन्दम्

अधुना मुग्धबोधार्थमुदाहरणमात्रतः ॥ ६६८ ॥
वंशे देशीस्थरागाणां केषांचिद्वादनं ब्रुवे ।
मध्यमं स्थायिनं कृत्वा तृतीये कम्पिते स्वरे ॥ ६६९ ॥
विलम्बिते द्वितीयेऽथ स्थायिनि न्यस्यते यदा ।
स्वस्थानं प्रथमं प्रोक्तं मध्यमादेस्तदा बुधैः ॥ ६७० ॥
तृतीयकम्पनादूर्ध्वं चतुर्थं पञ्चमं ततः ।

(सु०) अथ वांशिकानां बृन्दमाह—एक इति । एको मुख्यो वांशिकः, चत्वारः तदनुगताः; एतद्वांशिकबृन्दम् ॥ ६६७- ॥

इति वांशिकबृन्दम्

(क०) किंनर्यामिव वंशेऽपि केषांचिद्देशीरागाणां वादनक्रमं दर्शयितुमाह—अधुनेत्यादि ॥ ६६८- ॥

(सु०) अधुनेति । अज्ञपरिज्ञानार्थं देशीरागाणां केषांचित् दृष्टान्तत्वेन वादनं कथयामि ॥ ६६८- ॥

(क०) तत्र तावन्मध्यमादेर्वादनक्रमं दर्शयति—मध्यममित्यादि । **स्थायिनं कृत्वा**; ग्रहं कृत्वा । **तृतीय इति**; अत्र मध्यमोदाहरणक्रमेण तृतीयो धैवतः, तस्यात्र विवादित्वात् वादने क्रियमाणे रागहानिर्भवत्येव । अतः तं विहाय तदुत्तरो निषादोऽत्र तृतीयत्वेन ग्राह्य इति मन्तव्यम् । यथैवं तथा पूर्वोक्तम्—

"असंभवे पूर्वपूर्वस्वरस्य तु परं परम् ।
क्रमेण स्वरमारोहेत्सर्वरागेष्विति स्थितिः ॥" (६-३३३)

इति । वर्ज्यत्वेनासंभव इति पूर्वमेवोक्तं व्याख्यातं च । तस्मात् तृतीये स्वरे निषादे कम्पिते सति द्वितीये पञ्चमे विलम्बिते सति स्थायिनि मध्यमे यदा न्यस्यते तदा मध्यमादेः प्रथमं स्वस्थानं प्रोक्तम् । तृतीयकम्पनादिति ।

तुर्यस्वरं द्वितीयं च कृत्वा न्यासो ग्रहे यदा ॥ ६७१ ॥
तदा द्वितीयं स्वस्थानं शार्ङ्गदेवेन कीर्तितम् ।
चतुर्थस्वरमाहत्य स्थायिनं तत्परं ततः ॥ ६७२ ॥
समुच्चार्य स्वरं तुर्यं पञ्चमं तु विलम्ब्य च ।
षष्ठं च पञ्चमं कृत्वा द्वितीयं च ग्रहे यदा ॥ ६७३ ॥
न्यासस्तदा तृतीयं स्यात्स्वस्थानमिति तद्विदः ।
ग्रहद्वितीयतुर्यांश्च पञ्चमं सप्तमं ततः ॥ ६७४ ॥

तृतीयस्य निषादस्य कम्पनं कृत्वा, ऊर्ध्वमनन्तरं चतुर्थं तं निषादमेव । ननु एकस्यैव निषादस्य तृतीयत्वं चतुर्थत्वं च कथमिति चेत्, उच्यते—तस्य तृतीयत्वं लक्षणया आश्रितम्। चतुर्थत्वं तु मुख्यमेव। नहि गौणमुख्यव्यवहारयोरेकत्र विरोधो दृष्टः। यथा गङ्गायां घोष इत्यत्र गङ्गाशब्देन तटो लक्ष्यत इति तस्य तटशब्दवाच्यत्वं न हीयते । तद्वदत्रापीति न दोषः । लक्षणवाक्येऽपि लक्षणावृत्त्याश्रयणे संनिहितस्वर इवासंनिहितस्वरेण संसृज्य प्रयोगप्रयोजनं द्रष्टव्यम् । एवं लक्ष्यानुसारेण देश्यां सर्वत्र लक्ष्यविरोधि शास्त्रमन्यथा नेयम् । **पञ्चममिति** । षड्जमित्यर्थः । ततः षड्जानन्तरं तुर्यस्वरं निषादम् । द्वितीयं पञ्चमस्वरं च कृत्वा वादयित्वा, यदा ग्रहे मध्यमे न्यासः क्रियते, तदा द्वितीयं स्वस्थानं कीर्तितम् । **चतुर्थस्वरमाहत्येति** । निषादमाहत्य गमकयुक्तं कृत्वा, ततः स्थायिनं मध्यमं तत्परं च समुच्चार्य, तुर्यं निषादम् । **पञ्चमं तु** षड्जं **विलम्ब्य च षष्ठमिति** । ऋषभस्यात्र विवादित्वात्परं गान्धारमित्यर्थः । पञ्चमं षड्जम् , द्वितीयं पञ्चमस्वरं च कृत्वा ग्रहे मध्यमे न्यासः तदा तृतीयं स्वस्थानं भवति । **ग्रहद्वितीयतुर्यांश्चेति** । मध्यमपञ्चमनिषादानित्यर्थः । ततः **पञ्चमं**; षड्जमित्यर्थः । **सप्तमं**;

कृत्वाष्टमं विलम्ब्याथ द्वितीयं तत्परं ततः ।
द्वितीयं सप्तमं कृत्वा पञ्चमं च चतुर्थकम् ॥ ६७५ ॥
द्वितीयं च ग्रहे न्यासः स्वस्थानं तुर्यमिष्यते ।
दृश्यते मध्यमादेस्तु ग्रहो वंशेषु मुद्रितः ॥ ६७६ ॥

इति मध्यमादिः

गान्धारमित्यर्थः । एतान् कृत्वा, अथ **अष्टमं** तारस्थितं मध्यममित्यर्थः । **पञ्चमं चतुर्थकं द्वितीयं चेति** । सनिपानित्यर्थः । ग्रहे मध्यमे न्यास इत्यनेनात्रापि वंशप्रकरणे स्थायिग्रहशब्दयोरेकार्थत्वं द्रष्टव्यम् । एवं स्थायिनि मध्यमे न्यासः कृतश्चेत्, चतुर्थं स्वस्थानमिष्यते । **दृश्यते मध्यमादेस्तु ग्रहो वंशेषु मुद्रित** इति । वंशेष्विति बहुवचनेन अष्टादशाङ्गुलादिषु तत्तन्मतोक्तलक्षणेषु यस्मिन् वंशे यो मुद्रितः स्वरो भवति, यथाष्टादशाङ्गुले वंशे सप्तसु स्वररन्ध्रेषु मुद्रितेषु षड्जो जायते स तत्र मुद्रित उच्यते; कलानिधौ वंशे मन्द्रर्षभो मुद्रितः स्वरः, तथा मनौ वंशे मन्द्रगान्धारो मुद्रित इति । यस्मिन् वंशे मध्यमादिरागः क्रियते तस्मिन् वंशे यो मुद्रितः स्वरः स एव मध्यमादेर्ग्रहो दृश्यत इत्यनेन लक्ष्यत इति गम्यते । उत्तरत्रापि मुद्रितो ग्रह इति यत्र वक्ष्यते तत्रैवं द्रष्टव्यम् ॥ ६६९–६७६ ॥

इति मध्यमादिः

(सु०) तत्र मध्यमादेर्वादनं कथयति—मध्यममिति । मध्यमस्वरं स्थायिनं मुख्यं गीत्वा ततस्तृतीयस्वरे धैवते कम्पिते सति, द्वितीये पञ्चमे विलम्ब्य गीते स्थायिनि मध्यमे समाप्तिः, इदं मध्यमादिरागस्य प्रथमं स्वस्थानम् । तृतीयं कम्पयित्वा, चतुर्थपञ्चमचतुर्थद्वितीयान् गीत्वा ग्रहे समाप्तिः द्वितीयं स्वस्थानम् । चतुर्थस्वरमाहत्य ताडिते स्थायिनं गीत्वा तत्परं द्वितीयमुच्चार्य, चतुर्थपञ्चमौ विलम्ब्य षष्ठपञ्चमद्वितीयान् गीत्वा ग्रहे समाप्तिः तृतीयं स्वस्थानम् ।

षड्जे ग्रहे ममाहत्य षड्जं कृत्वा हतौ रिमौ।
पमान्दोल्य प्रकम्प्यापि पमगान्द्विः प्रयुज्य च ॥ ६७७ ॥
आन्दोल्य मं प्रकम्प्यापि लघुषड्जं विधाय च।
कम्पयित्वा रिमौ द्वित्रान् वारानावर्त्य षड्जगौ ॥ ६७८ ॥
स्थायिन्यासाद्भवेदाद्यं स्वस्थानं मालवश्रियः।
आद्यस्वस्थानविधिना विधाय स्वरपञ्चकम् ॥ ६७९ ॥
निं विलम्ब्यावरोही चेत्पूर्वः स्वस्थानगः कृतः।
तदा द्वितीयं स्वस्थानमास्थितं रागवेदिभिः ॥ ६८० ॥
कृत्वा द्वितीयं स्वस्थानं धान्तमान्दोल्य सप्तमम्।
आहत्य च द्वितीयस्य स्वस्थानस्यावरोहणम् ॥ ६८१ ॥
कृतं यत्र तृतीयं तत्स्वस्थानमुदितं बुधैः।
आहत्य मं द्विगुणसं कृत्वा रिं तत्परं ततः ॥ ६८२ ॥
तं सं प्रोच्य निमाहत्य विलम्ब्य पुनरप्यमुम्।
कृत्वा तृतीयं स्वस्थानावरोही क्रियते यदा ॥ ६८३ ॥

ग्रहद्वितीयचतुर्थपञ्चमसप्तमान् गीत्वा, अष्टमं च विलम्ब्य, द्वितीयतृतीयद्वितीयसप्तमपञ्चमचतुर्थद्वितीयगानानन्तरं ग्रहे समाप्तिः चतुर्थं स्वस्थानम्। लोके मध्यमादेः ग्रहस्वरो मुद्रितो दृश्यते ॥ -६६९–६७६ ॥

इति मध्यमादिः

(क०) अथ मालवश्रियः स्वस्थानानि कथयति—षड्जे ग्रह इत्यादि। षड्जे ग्रहे सतीति। अनेन स्वरान्तरस्यापि लक्ष्यानुसारेण ग्रहत्वमभ्युपगन्तव्यमिति गम्यते। अतो यदा षड्जो ग्रहो भवति स्थायी भवति। तदा षड्जापेक्षया यो मो मध्यमः तमाहत्य। एव-

तदा चतुर्थं स्वस्थानमाख्यातं मालवश्रियः ।
षड्जोऽन्यो वा स्वरो वंशे ग्रहोऽस्या मुद्रितः स्वरः ॥ ६८४ ॥
प्रकल्प्य तस्य षड्जत्वं परेषामृषभादिताम् ।
लक्ष्मेदं योजयेत्सर्वमित्युक्तं सूरिशार्ङ्गिणा ॥ ६८५ ॥

इति मालवश्रीः

मन्येऽपि स्वराः षड्जापेक्षयोन्नेयाः । इममेवार्थं ग्रन्थकारः स्वयमेवाह— **षड्जोऽन्यो** वेत्यादिना । अत्रापि मध्यमादिवत् मुद्रितस्वर एव स्थायी भवति ॥ ६७७–६८५ ॥

इति मालवश्रीः

(सु०) अथ मालवश्रिया उत्पत्तिप्रकारमाह—षड्ज इति । षड्जे ग्रहस्वरे कृते सति मं मध्यमस्वरमाहत्य, तारं गीत्वा ततः षड्जमुच्चार्य, रिमौ, ऋषभमध्यमौ आहतौ ताडितौ, मम्, मध्यममान्दोल्य, पमगान् पञ्चममध्यमगान्धारान् प्रकम्प्य प्रकटं द्विवारं गीत्वा, मं मध्यममान्दोल्य कम्पयित्वा, षड्जं लघु विधाय शीघ्रं गीत्वा, रिमौ, ऋषभमध्यमौ कम्पितौ गीत्वा, षड्जगौ, षड्जगान्धारौ द्वित्रिवारानावर्त्य, स्थायिनि समाप्तौ प्रथमं स्वस्थानं भवति। प्रथमस्वस्थानप्रकारेण पञ्च स्वरान् गीत्वा, धैवतं विलम्ब्य अवरोहेण पूर्वं स्वस्थास्नं क्रियते चेत्, तदा द्वितीयं स्वस्थानं भवति । पुनश्च धैवतपर्यन्तं कृत्वा सप्तमं स्वरमान्दोल्य ताडयित्वा च द्वितीयस्य स्वस्थानस्य आरोहणे कृते सति तृतीयं स्वस्थानम् । मं मध्यमेनाहत्य तत्परमृषभं द्विगुणमुच्चारितं कृत्वा, तमेव सं प्रोच्य समुच्चार्य निं निषादमाहत्य पुनरमुं निषादं विलम्ब्य, विलम्बितं गीत्वा तृतीयं स्वस्थानमवरोहेण क्रियते चेत् तदा चतुर्थं स्वस्थानम् । षड्ज इति । षड्जो वा अन्यो वा मुद्रितः स्वरः वंशे ग्रहः स्यात्, तस्य वंश इव षड्जं प्रकल्प्य अन्येषामृषभादित्वं कल्पयित्वा पूर्वोक्तं लक्षणं योजयेत् ॥ ६७७–६८९ ॥

इति मालवश्रीः

स्थायिनं मध्यमं कृत्वा कम्पयित्वा परं स्वरम् ।
तुर्यं विलम्ब्य कृत्वा च तृतीयं तं द्रुताहतम् ॥ ६८६ ॥
विधाय तं पुनः प्रोच्य ग्रहन्यासेन जायते ।
स्वस्थानं प्रथमं तोड्याः प्रोक्तं मुनिवरैरिति ॥ ६८७ ॥
प्राक्स्वस्थानवदारुह्य पञ्चमादवरुह्यते ।
स्थायिस्वरान्तं यत्रादः स्वस्थानं स्यात्तृतीयकम् ॥ ६८८ ॥
प्राग्वदाषष्ठमारोहावरोही च ग्रहावधिः ।
अस्यास्तृतीये स्वस्थाने चतुर्थे त्वष्टमावधौ ॥ ६८९ ॥
आरोहिण्यवरोही स्यात्पूर्ववत्तद्विदां मतः ।
मुद्रितस्तु ग्रहः प्रोक्तो लक्ष्ये स्याल्लक्ष्मवेदिभिः ॥ ६९० ॥

इति तोडी

(क०) इतः परं तोड्यादीनां स्वस्थानानि ग्रन्थत एव सुबोधानि ॥ ६८६–६९० ॥

इति तोडी

(सु०) अथ तोडीमाह—स्थायिनमिति । मध्यमं गीत्वा तत्परं पञ्चमं कम्पयित्वा, चतुर्थं विलम्बितं गीत्वा, तृतीयमुच्चार्य तृतीयं त्वाहतं वेगेन ताडितं कृत्वा तमेव पुनरुच्चार्य ग्रहे समाप्तौ तोडीरागस्य प्रथमं स्वस्थानम् । पूर्वस्य स्थानप्रकारेण आपञ्चमात्तु पञ्चमपर्यन्तमारुह्य स्थायिस्वरपर्यन्तमवरोहणं यत्र अदः इदं द्वितीयं स्वस्थानम् । पूर्ववत् आषष्ठस्वरपर्यन्तमारोहः, ग्रहस्वरपर्यन्तमवरोहश्च तृतीयं स्वस्थानम् । आष्टस्वरपर्यन्तमारोहः, पूर्ववद् ग्रहस्वरपर्यन्तमवरोहश्च चतुर्थं स्वस्थानम् । अस्यास्तु लक्ष्ये मुद्रितस्वरः ग्रहो दृश्यते ॥ ६८६–६९० ॥

इति तोडी

मध्यमं ग्रहमास्थाय प्राञ्चं प्रोच्य ततो ग्रहम् ।
सद्वितीयं कम्पयित्वा तृतीयं सचतुर्थकम् ॥ ६९१ ॥
लघूकृत्य तृतीयं चोच्चार्याहत्य च तं ततः ।
प्राचीनं स्वरमुच्चार्य स्थायिनि न्यस्यते यदा ॥ ६९२ ॥
भवेद्बङ्गालरागस्य स्वस्थानं प्रथमं तदा ।
आरोही पञ्चमान्तः स्यात्स्वस्थानेऽस्य द्वितीयके ॥ ६९३ ॥
सप्तमान्तस्तृतीये स्यात्तुर्ये स्यादष्टमावधि ।
प्राक्प्राग्वदवरोही स्यात्स्वस्थाने तूत्तरोत्तरम् ॥ ६९४ ॥
लक्ष्ये तु सर्ववंशस्थो द्वितीयोऽस्य ग्रहो मतः ।

इति बङ्गालः

(क०) तत्र बङ्गालरागे—लक्ष्ये तु सर्ववंशस्थो द्वितीयोऽस्य ग्रह इति । षड्जादिषु मध्ययोर्मुद्रितस्वरो भवति । तदपेक्षया द्वितीयऋषभादिरत्र स्थायी भवति । सोऽपि द्वितीयोऽन्तिमरन्ध्रद्वये मुक्ते सति जायत इति पूर्वमेवोक्तम् । उत्तरत्रापि भैरवादौ द्वितीयोऽस्य स्वरः स्थायीत्येवमादिषु मुक्तान्त्यरन्ध्रद्वयस्वरः स्थायी कर्तव्य इति वेदितव्यम् ॥ ६९३–६९४- ॥

इति बङ्गालः

(सु०) अथ बङ्गालमाह—मध्यममिति । मध्यमं ग्रहस्वरं विधाय प्राच्यं पूर्वस्वरमुच्चार्य, ततो ग्रहद्वितीयस्वरं कम्पितं गीत्वा, द्वितीयचतुर्थौ लघूकृत्य शीघ्रमुच्चार्य तमेव तृतीयं ताडयित्वा पूर्वस्वरमुच्चार्य स्थायिनि समाप्तौ बङ्गालरागस्य प्रथमं स्वस्थानं भवति । पञ्चमपर्यन्तमारोहणं द्वितीयं स्वस्थानम् । सप्तमपर्यन्तमारोहणं तृतीयं स्वस्थानम् । अष्टमपर्यन्तमारोहणं चतुर्थं स्वस्थानमिति । अवरोहस्तु उत्तरोत्तरे स्वस्थाने पूर्वपूर्वस्वस्थानवत् । लक्ष्ये द्वितीयस्वरो ग्रहः ॥ ६९३–६९४- ॥

इति बङ्गालः

धैवतं स्थायिनं कृत्वा प्राञ्चं तं च तृतीयकम् ॥ ६९५ ॥
पुनः प्राञ्चं विधायाथ कम्पयित्वा तृतीयकम् ।
विलम्ब्य चाहतं कृत्वा द्वित्रिद्वारं द्वितीयकम् ॥ ६९६ ॥
ग्रहे न्यासाद्भैरवस्य स्वस्थानं प्रथमं भवेत् ।
द्वितीये पञ्चमान्तः स्यादारोहोऽथ तृतीयके ॥ ६९७ ॥
षष्ठान्तः सप्तमान्तो वा चतुर्थे त्वष्टमावधिः ।
परे परेऽवरोही स्यात्स्वस्थाने पूर्वपूर्ववत् ॥ ६९८ ॥
द्वितीयोऽत्र स्वरः स्थायी सर्ववंशेषु दृश्यते ।

इति भैरवः

स्थायिनं द्विगुणं षड्जं कृत्वार्धं वादयेत्ततः ॥ ६९९ ॥
पूर्वं ग्रहं द्वितीयं च तृतीयमथ वादयेत् ।
अथ द्वितीयमागत्य न्यस्यते स्थायिनि स्वरे ॥ ७०० ॥
यदा वराट्याः स्वस्थानं प्रथमं जायते तदा ।
इह भैरववत्कार्यं स्वस्थानत्रितयं परम् ॥ ७०१ ॥
स्वस्थानप्रक्रियैवैष ज्ञेया रागान्तरेष्वपि ।

(सु०) अथ भैरवमाह—धैवतमिति । धैवतं स्थायिनं कृत्वा पूर्वस्थायी तृतीयपूर्वावुच्चार्य तृतीयं कम्पितं गीत्वा द्वितीयस्वरं द्विस्त्रिरुच्चार्य ग्रहे स्वरे समाप्तौ भैरवरागस्य प्रथमं स्वस्थानम् । पञ्चमपर्यन्तमारोहे द्वितीयं स्वस्थानम् । षष्ठपर्यन्तमारोहे तृतीयं स्वस्थानम् । अष्टमपर्यन्तमारोहे चतुर्थं स्वस्थानम् । उत्तरोत्तरस्वरस्थाने पूर्वपूर्ववदारोहणम् ॥ -६९५–६९८- ॥

इति भैरवः

(क०) वराट्याम्—स्थायिनं द्विगुणं षड्जमिति; मध्यमं षड्जं

द्वितीयोऽस्याः स्वरो लक्ष्ये ग्रहत्वेनोपलक्ष्यते ॥ ७०२ ॥

इति वराटी

ऋषभे स्थायिनि प्राञ्चं कम्पयित्वार्धमस्य च ।
कृत्वा ग्रहं द्वितीयं च तृतीयं तदधः स्वरम् ॥ ७०३ ॥
ग्रहमेत्य ततः पाञ्चं प्रकम्प्योक्त्वार्धमस्य च ।
ग्रहे न्यासेन गुर्जर्याः स्वस्थानं प्रथमं भवेत् ॥ ७०४ ॥
तृतीयो दृश्यते प्रायो ग्रहोऽस्यां लक्ष्यगोचरे ।

तारषड्जं वेत्यर्थः । तयोः पूर्वपूर्वापेक्षया द्विगुणत्वसंभवात् । अर्धं द्व्यर्धं, स्थायिनश्चतुर्थस्वरमित्यर्थः ॥ -६९९–७०२ ॥

इति वराटी

(सु०) अथ वराटीमाह—स्थायिनमिति । वराट्यां द्विगुणमुच्चारितं षड्जं स्थायिनं कृत्वा, ततोऽर्धं वादयेत् । ततः पूर्वं स्थायिद्वितीयतृतीया वादनीयाः । द्वितीयं प्राप्य स्थायिनि न्यासे वराट्याः प्रथमं स्वस्थानम् । अन्यत् स्वस्थानत्रितयं भैरववत्कार्यम् ॥ -६९९–७०२ ॥

इति वराटी

(क०) गुर्जर्याम्—तृतीयो दृश्यते प्रायो ग्रहोऽस्यां लक्ष्यगोचर इति । अत्रापि मुद्रितस्वरात् तृतीयो ग्राह्यः । सोऽप्यन्तिमरन्ध्रत्रयमोचनात् जायत इति पूर्वमुक्तम् । उत्तरत्र वसन्तादिष्वप्येवं द्रष्टव्यम् ॥७०३, ७०४-॥

इति गुर्जरी

(सु०) अथ गुर्जरीमाह—ऋषभ इति । ऋषभे स्थायिनि प्राञ्चं पूर्वस्वरं कम्पितं कृत्वा, अन्यः अस्यैवार्धमुच्चार्य ग्रहद्वितीये तृतीयद्वितीयग्रहा गेयाः । ततः

षड्जे ग्रहे द्वितीयं च तृतीयं सकृदाहतम् ॥ ७०५ ॥
वेगात्कृत्वाथ तुर्यं च तृतीयं तदधस्तनम् ।
उक्त्वा तृतीयतुर्यौ च तृतीयं तदधस्तनम् ॥ ७०६ ॥
ग्रहे न्यासो वसन्तस्य स्वस्थाने प्रथमं भवेत् ।
तृतीयस्त्वस्य वंशेषु स्थायित्वेनोपलभ्यते ॥ ७०७ ॥

इति वसन्तः

स्थायिनि द्विगुणे षड्जे तदर्धं लघु वादयेत् ।
ततस्तत्सकृदाहत्य ग्रहं तस्मात्तृतीयकम् ॥ ७०८ ॥
तुर्यं चोक्त्वा तृतीयं च सकृदाहत्य तत्परम् ।
द्रुतं कृत्वा पञ्चमं तु विलम्ब्यास्मादधस्तनौ ॥ ७०९ ॥
लघूकृत्य ग्रहे न्यासः स्वस्थाने प्रथमे भवेत् ।
धन्नास्या दृश्यते वंशे स्याद् द्वितीयस्वरो ग्रहः ॥ ७१० ॥

इति धन्नासी

पूर्वं कम्पितमर्धमुच्चार्य ग्रहे समाप्तौ गुर्जर्याः प्रथमं स्वस्थानम् । अन्यत् स्वस्थानं पूर्ववत् वराटीवत् ॥ ७०३, ७०४- ॥

इति गुर्जरी

(सु०) अथ वसन्तमाह—षड्ज इति । षड्जे स्थायिनि कृते सति, द्वितीयतृतीयौ ताडितौ सकृद्वा शीघ्रं गीत्वा, चतुर्थतृतीयद्वितीयानन्तरं ग्रहस्वरे समाप्तौ वसन्तस्य प्रथमं स्वस्थानम् ॥ ७०९–७०७ ॥

इति वसन्तः

(सु०) अथ धन्नासीमाह—स्थायिनीति । स्थायिनि द्विगुणं षड्जं स्थायिनं कृत्वा तस्यार्धं शीघ्रं वादयेत् । ततस्तदर्धं सकृदाहत्य, ग्रहद्वितीय-

तमेव स्थायिनं कृत्वा द्वितीयं वादयेद् द्रुतम् ।
लघू ग्रहद्वितीयौ च कृत्वा ताभ्यां परं स्वरम् ॥ ७११ ॥
विलम्ब्य स्फुरितं तु द्विर्विदध्यात्पञ्चमं ततः ।
अधरांस्त्रीन्क्रमादुक्त्वा स्थायिनि न्यस्यते यदा ॥ ७१२ ॥
देश्यास्तदाद्यं स्वस्थानं द्वितीयोऽस्या ग्रहो जने ।

इति देशी

गान्धारे स्थायिनि प्रोच्य द्वितीयं च तृतीयकम् ॥ ७१३ ॥
तुर्यं विलम्ब्य तत्प्राश्वं कृत्वा स्पृष्ट्वा द्वितीयकम् ।
दीर्घीकृत्य तृतीयं चोक्त्वा द्वितीयं ग्रहस्वरे ॥ ७१४ ॥
न्यासो यदा स्यात्स्वस्थानं देशाख्यायास्तदादिमम् ।
मुद्रितोऽस्या ग्रहो वंशे लक्ष्यते लक्ष्यवेदिभिः ॥ ७१५ ॥

इति देशाख्या

इति रागाङ्गानि

तृतीयानुच्चार्य ग्रहं सकृत्ताडयित्वा द्वितीयमाशूच्चार्य पञ्चमं विलम्ब्य तृतीयतुर्यौ शीघ्रं गीत्वा आरोहे समाप्तौ धन्नास्याः प्रथमं स्वस्थानम् ॥ ७०८–७१० ॥

इति धन्नासी

(सु०) अथ देशीमाह—तमेवेति । षड्जं स्थायिनं विधाय द्वितीयं शीघ्रं वादयेत् । तत आरोहः । ग्रहद्वितीयं लाघवेनोच्चार्य तत्परं तृतीयं स्वरं विलम्बितमुच्चार्य पञ्चमं द्विःस्फुरितं कुर्यात् । अधरात् अधःस्थितान् त्रीन् क्रमादुच्चार्य स्थायिनि यदा समाप्यते तदा देशीरागस्य प्रथमं स्वस्थानम् ॥ ७११, ७१२- ॥

इति देशी

(सु०) अथ देशाख्यामाह—गान्धार इति । गान्धारस्वरे स्थायिनि

ग्रहं द्विगुणसं कृत्वा पूर्वं स्पृष्ट्वा तृतीयकम् ।
कृत्वा स्पृष्ट्वा ग्रहं प्रोच्य तत्परं स्फुरितौ भवेत् ॥ ७१६ ॥
द्विस्त्रिर्वा ग्रहतत्पूर्वौ न्यस्यते कम्पिते ग्रहे ।
यदा डोम्बक्रियः प्रोक्तं स्वस्थानं प्रथमं तदा ॥ ७१७ ॥
सा भूपाली श्रुता लोके द्वितीयं ग्रहमाश्रिता ।

इति डोम्बक्री:

(लोके प्रसिद्धा भूपाली)

धैवते स्थायितां नीते द्विरुच्चार्य परं लघुम् ॥ ७१८ ॥
तं चाथ प्राञ्चमस्यार्धं पूर्वं पूर्वं विधाय तम् ।
विलम्ब्य कम्पयित्वार्धं तस्याहत्य च तन्मुहुः ॥ ७१९ ॥

सति द्वितीयमुक्त्वा, तृतीयतुर्यं च विलम्ब्य तृतीयं गीत्वा द्वितीयं सकृदुच्चार्य तृतीयं दीर्घं विधाय, द्वितीयानन्तरं ग्रहे समाप्तौ देशाख्याया: प्रथमं स्वस्थानम् ॥ -७१३–७१९ ॥

इति देशाख्या

इति रागाङ्गानि

(सु०) अथ डोम्बक्रीमाह—ग्रहमिति । द्विगुणसं द्विगुणं षड्जग्रहं विधाय पूर्वं सकृद्गीत्वा, तृतीयानन्तरं ग्रहं स्पृष्ट्वा ईषदुच्चार्य, ततोऽन्तरं ग्रहं तत्परं तद् द्विःस्फुरितं विधाय कम्पिते ग्रहसमाप्तौ डोम्बक्रिया स्वस्थानम् । इयं लोके भूपालीत्युच्यते । द्वितीयश्च ग्रह: ॥ ७१६, ७१७- ॥

इति डोम्बक्री:

(लोके प्रसिद्धा भूपाली)

(सु०) अथ वेलावलीमाह—धैवत इति । धैवतं स्थायिनं कृत्वा अपरं द्वितीयं स्वरं लाघवेन द्विरुच्चार्य, तं च स्थायिनमुच्चार्य तस्य प्राच्यं पूर्वपूर्वमर्धं

पूर्वं प्रकम्प्य तस्यार्धं दीर्घीकृत्य ग्रहं व्रजेत् ।
अथोऽर्धप्रेरितौ पूर्वग्रहौ कृत्वा द्वितीयकम् ॥ ७२० ॥
प्रोच्य स्पृष्ट्वा ग्रहं तस्मात्परं प्रोच्य प्रकम्प्य तु ।
तृतीयं ग्रहपाश्चात्यग्रहौ तूच्चारयेन्मुहुः ॥ ७२१ ॥
ततस्तृतीयमाकम्प्य विलम्ब्य तदधस्तनम् ।
ईषद्विरम्य स्पृष्ट्वा च द्वितीयं न्यस्यते ग्रहे ॥ ७२२ ॥
यदा तदाद्यं स्वस्थानं वेलावल्याः प्रकीर्तितम् ।
तृतीयग्रहता त्वस्या दृश्यते वंशगोचरे ॥ ७२३ ॥

इति वेलावली

पञ्चमं ग्रहमास्थायारोहिणा पञ्चमं ततः ।
गत्वा विलम्ब्य तं तस्मादधरं द्रुततां नयेत् ॥ ७२४ ॥
ततोऽधःस्थं द्राघयित्वा स्पृष्ट्वा च द्राघितात्परम् ।
तत्परं दीर्घतां नीत्वा पुनः प्रोच्यावरोहिणा ॥ ७२५ ॥

कृत्वा, अन्ते स्थायिनं विलम्बितं गीत्वा, तस्यैव स्थायिनोऽर्धं कम्पयित्वा, तत्पुनरारोहेण गीत्वा पूर्वस्वरं कम्पयित्वा तस्यार्धं विधाय ग्रहमागच्छेत् । ततोऽर्धोच्चारितौ ग्रहाधस्तनस्वरौ विधाय द्वितीयं मुक्त्वा ग्रहमल्पं गान्धारादिकमुक्त्वा तृतीयकम्पनानन्तरं ग्रहं तदधस्तनं वा सकृदुच्चार्य ततस्तृतीयस्वरं कम्पयित्वा तदधस्तनं द्वितीयं विलम्बं च गीत्वा ईषद्विरम्य द्वितीयस्पर्शानन्तरं ग्रहे समाप्तौ वेलावल्याः प्रथमं स्वस्थानम् ॥ -७१८–७२३ ॥

इति वेलावली

(सु०) अथ प्रथममञ्जरीमाह—पञ्चममिति । पञ्चमं ग्रहस्वरं कृत्वा आरोहेण पञ्चमपर्यन्तं प्राप्य तं पञ्चमं विलम्ब्य तस्मादधःस्थितस्वरं शीघ्रं गीत्वा

तस्मादेत्य ग्रहन्यासे स्वस्थानं प्रथमं भवेत् ।
रागे प्रथममञ्जर्या द्वितीयोऽस्या ग्रहो जने ॥ ७२६ ॥

इति प्रथममञ्जरी

स्थायिनोऽर्धात्समारुह्य तृतीयादिचतुःस्वरीम् ।
कम्पयित्वा विलम्ब्यापि षष्ठतुर्यं विधाय च ॥ ७२७ ॥
एत्य पञ्चममेतस्माद् ग्रहान्तमवरुह्य च ।
ग्रहार्धं ग्रहपूर्वं च गत्वा स्पृष्ट्वा ग्रहं ततः ॥ ७२८ ॥
द्वितीयं कम्पितं कृत्वा तृतीयं स्फुरितं ततः ।
स्थायिनि न्यस्यते यत्र स्वस्थानं स्यात्तदादिमम् ॥ ७२९ ॥
आदिकामोदिकायाः स्याद् द्वितीयग्रहता जने ।

इत्यादिकामोदी

स्थायिनि द्विगुणे षड्जे द्विराहत्य तृतीयकम् ॥ ७३० ॥

ततोऽधःस्थितं द्रावितात् परमीषत्संस्पृश्य ततः परं द्रावयित्वा पुनरुच्चार्य आरोहिणा वर्णेन ग्रहपर्यन्तप्राप्तौ प्रथममञ्जर्याः प्रथमं स्वस्थानम् ॥ ७२४–७२६ ॥

इति प्रथममञ्जरी

(सु०) अथादिकामोदिकामाह—स्थायिन इति । धैवतं स्थायिनं कृत्वा ततस्तृतीयमारभ्य स्वरचतुष्टयमारोहेण गीत्वा षष्ठं स्वरं कम्पितं विलम्बितं च विधाय चतुर्थं गीत्वा पञ्चममेत्य ग्रहपर्यन्तमवरुह्य ग्रहस्वरस्य पूर्वार्धं तत्पूर्वं च स्वरं प्राप्य ग्रहस्वरं स्पृष्ट्वा द्वितीयं कम्पितं कृत्वा तृतीयस्फुरणात् इतरं स्थायिनि समाप्तौ आद्यं स्वस्थानम् ॥ ७२७–७२९- ॥

इत्यादिकामोदिका

(सु०) अथ शुद्धवराटीमाह—स्थायिनीति । षड्जं द्विरुच्चारितं विधाय

त्रिश्चतुर्वा ततः स्पृष्ट्वा ग्रहं पूर्वमुदीर्य च ।
कम्पिते स्थायिनि न्यासात्स्वस्थानं प्रथमं भवेत् ॥ ७३१ ॥
रागे शुद्धवराट्यां सा द्वितीयस्थायिका जने ।

इति शुद्धवराटी

तमेव स्थायिनं कृत्वा तं तदर्धे द्विराहतम् ॥ ७३२ ॥
द्विस्त्रिर्वोक्त्वाथ द्वितीयं कम्पयित्वा विलम्ब्य च ।
आहत्य द्विश्चतुर्वास्मात्परं कृत्वा लघुं ग्रहम् ॥ ७३३ ॥
उक्त्वा ग्रहार्धपूर्वे तु दीर्घीकृत्य ग्रहे यदा ।
न्यस्यते शुद्धनट्टायाः स्वस्थानं प्रथमं तदा ॥ ७३४ ॥
वंशेष्वस्यामपि प्रायो द्वितीयो दृश्यते ग्रहः ।

इति शुद्धनट्टा

इति भाषाङ्गानि

तृतीयमारुह्य त्रिवारं गीत्वा ग्रहस्पर्शानन्तरं पूर्वमुच्चार्य कम्पिते स्थायिनि समाप्तौ शुद्धवराट्याः प्रथमं स्वस्थानम् ॥ ७३०, ७३१- ॥

इति शुद्धवराटी

(सु०) अथ शुद्धनट्टामाह—तमेवेति । तमेव षड्जं स्थायिनं विधाय तस्यार्धे द्विस्त्रिर्वा आघात् अर्धस्वरमुच्चार्य ग्रहात् तृतीयं कम्पयित्वा विलम्बयेत्। अथ अस्मात्परं द्विश्चतुर्वा ताडयित्वा ग्रहं लाघवेनोच्चार्य ग्रहपूर्वोच्चारणानन्तरं दीर्घीकृते ग्रहे समाप्तौ शुद्धनट्टायाः प्रथमं स्वस्थानम् ॥ -७३२-७३४- ॥

इति शुद्धनट्टा

इति भाषाङ्गानि

ग्रहं द्विगुणसं प्रोच्य तदर्धं च द्वितीयकम् ॥ ७३५ ॥
विलम्बिते तृतीयेऽथ द्वितीयं द्रुततां नयेत् ।
ग्रहार्धे च स्थिरीभूय कम्पयित्वा ग्रहं ततः ॥ ७३६ ॥
परौ स्वरौ द्रुतीकृत्य लघूकृत्य परं ग्रहे ।
न्यासे कृते रामकृतेः स्वस्थानं प्रथमं भवेत् ॥ ७३७ ॥
द्वितीयस्वरमेवास्या वंशे वीक्षामहे ग्रहम् ।

इति रामक्रीः

तस्मिन्नेव ग्रहे कृत्वा द्वितीयं च तृतीयकम् ॥ ७३८ ॥
ग्रहार्धं द्रुतमुच्चार्य स्पृष्ट्वा पूर्वं ग्रहस्य च ।
अर्धं प्रोच्य विरम्याथ पूर्वं स्पृष्ट्वा तृतीयकम् ॥ ७३९ ॥
लघूकृत्य लघोः पूर्वौ स्पृष्ट्वाथ स्थायिनः परौ ।
लघूकृत्य द्रुतं कृत्वा द्वितीयं न्यस्यते ग्रहे ॥ ७४० ॥
यदा तदा गौडकृतेर्भवेत्स्वस्थानमादिमम् ।
द्वितीयोऽस्यामपि प्रायो ग्रहो लक्ष्येषु दृश्यते ॥ ७४१ ॥

इति गौडक्रीः

(सु०) अथ रामक्रियमाह—ग्रह इति । द्विगुणं षड्जं ग्रहं च गीत्वा तस्यार्धं द्वितीयं च स्वरमुच्चार्य तृतीयं विलम्ब्य द्वितीयं शीघ्रं गायेत् । ततो स्थिरग्रहार्धगानानन्तरं ग्रहं प्रकम्प्य परौ ग्रहौ द्वितीयतृतीयौ स्वरावाशूच्चार्य, परं च तुर्यं लाघवेन गीत्वा ग्रहे समाप्तौ रामक्रिया आद्यं स्वस्थानं भवति ॥ -७३९–७३७- ॥

इति रामक्रीः

(सु०) अथ गौडक्रियमाह—तस्मिन्निति । तस्मिन्नेव द्विगुणे षड्जे ग्रहे कृते सति, द्वितीयतृतीयौ गीत्वा ग्रहस्यार्धं शीघ्रं गीत्वा पूर्वस्पर्शात् ग्रहार्धो-

धैवते स्थायिनि प्राश्वं ग्रहं ग्रहतृतीयकम् ।
तुर्यं कृत्वा तमाहत्य द्वितीयं कम्पयेत्ततः ॥ ७४२ ॥
अवरुह्य तृतीयादिक्रमेण चतुरः स्वरान् ।
ग्रहन्यासादेवकृतेराद्यं स्वस्थानमादिशेत् ॥ ७४३ ॥
तृतीयग्रहतां त्वस्याः पश्यामो वंशगोचरे ।

इति देवक्रीः

इति क्रियाङ्गानि

धैवतं ग्रहमास्थाय तृतीयादवरुह्य च ॥ ७४४ ॥
स्वरत्रयं विरम्याथ ग्रहं परमथ ग्रहम् ।
पूर्वं कृत्वा तमाहत्य ग्रहन्यासेन जायते ॥ ७४५ ॥
स्वस्थानमाद्यं भैरव्यास्तृतीयोऽस्या ग्रहो जने ।

इति भैरवी

च्चारणे विश्रम्य पूर्वं किंचिद्गीत्वा तृतीयं लाघवेनोच्चार्य तत्पूर्वस्वरद्वयं स्पृष्ट्वा, स्थायिनः परौ स्वरौ द्वौ लघूकृत्य, द्रुतद्वितीयानन्तरं ग्रहे समाप्तौ गौडक्रिया आद्यं स्वस्थानं भवति ॥ -७३८–७४१ ॥

इति गौडक्रीः

(सु०) अथ देवक्रियमाह—धैवत इति । धैवते ग्रहे कृते सति पूर्वग्रहे तृतीयचतुर्थावुच्चार्य आरोहेण द्वितीयं कम्पयित्वा, अवरोहेण तृतीयादीन् चतुःस्वरान् क्रमेण गीत्वा, ग्रहे समाप्तौ देवक्रिया आद्यं स्वस्थानं भवति ॥ ७४२, ७४३- ॥

इति देवक्रीः

इति क्रियाङ्गानि

(सु०) अथ भैरवीमाह—धैवतमिति । धैवताद् ग्रहात् तृतीयादवरुह्य

**स्थायिनि द्विगुणे षड्जेऽधस्तृतीयं विधाय च ॥ ७४६ ॥**
**अधस्तनं प्रकम्प्याथ विलम्ब्य स्थायिनं ततः ।**
**प्राचीनं लघुतां नीत्वा द्विस्त्रिर्वाहत्य तं ग्रहम् ॥ ७४७ ॥**
**लघूकृत्याधरस्यार्धमास्पृश्य ग्रहपञ्चमम् ।**
**विलम्ब्य तं द्रुतीकृत्य तृतीयस्पर्शमाचरेत् ॥ ७४८ ॥**
**अथोक्त्वा पञ्चमं तं च दीर्घीकृत्याधरं मनाक् ।**
**कम्पयित्वा ग्रहन्यासाद्भवेत्स्वस्थानमादिमम् ॥ ७४९ ॥**
**छायानट्टाख्यरागस्य ग्रहो वंशे तृतीयकः ।**
**एतां सालगनट्टां तु भाषन्ते लक्ष्यवेदिनः ॥ ७५० ॥**

त्रीन् स्वरान् क्षणमात्रं विरम्य ग्रहद्वितीयग्रहतत्पूर्वानुच्चार्य तं पूर्वं ताडयित्वा ग्रहे समाप्तौ भैरव्या आद्यं स्वस्थानं भवति ॥ ७४४, ७४९- ॥

इति भैरवी

(क०) छायानट्टायाम् —**अधरस्यार्धमिति** । अधरोऽधस्तनः । अत्र ग्रहीभूतषड्जापेक्षयाधरो निषादः । तस्यार्धमीषत्स्पर्शनं भवति, तमीषत्स्पृष्ट्वेत्यर्थः । **एतां सालगनट्टां तु भाषन्ते लक्ष्यवेदिन इति** । अत्र तुशब्दोऽवधारणे भिन्नक्रमश्च । **एतां त्विति**, च्छायानट्टामेवेत्यर्थः । **गमृषभार्धं चेति** । गं गान्धारं स्पृष्ट्वा । ऋषभार्धमिति ऋषभमीषत्स्पृष्ट्वेत्यर्थः । **अर्धं पुनर्व्रजेदिति** । पुनःशब्देन तदेवर्षभार्धमिति गम्यते । ऋषभार्धं द्विः कुर्यादित्यर्थः ॥ -७४६—७५२- ॥

(सु०) अथ च्छायानट्टामाह—स्थायिनीति । द्विगुणे षड्जे स्थायिनि कृते सति तृतीयानन्तरं स्थायिनोऽधःस्थं प्रकम्प्य स्थायिनं विलम्बेन गीत्वा ततः पूर्वं लघुतां नीत्वा द्विस्त्रिस्ताडयित्वा च लाघवेन ग्रहं गीत्वा अधःस्थित-स्यार्धं स्पृष्ट्वा विलम्बितं पञ्चमानन्तरमेवाशु गीत्वा तृतीयस्वरानन्तरं पञ्चम-

अन्ये तु पञ्चमं कृत्वा स्थायिनं रिं विधाय च ।
मं प्रकम्प्य स्थिरीभूय पञ्चमे द्विः पमध्यमौ ॥ ७५१ ॥
कृत्वा गमृषभार्धं च संस्पृश्यार्धं पुनर्व्रजेत् ।
ततो दीर्घौ रिमौ कृत्वा ग्रहे चेन्न्यस्यते तदा ॥ ७५२ ॥
आद्यं सालगनट्टायाः स्वस्थानं तद्विदो विदुः ।

इति च्छायानाट्टा

मं विधाय ग्रहं तं च द्रुतीकृत्य परं ततः ॥ ७५३ ॥
उक्त्वा तुर्यं विलम्ब्याथ परमास्पृश्य पञ्चमम् ।
विलम्ब्यातोऽवरोहेण ग्रहमेति यदा तदा ॥ ७५४ ॥
स्वस्थानमादिमं रामकृतेर्वंशे द्वितीयकः ।
ग्रहश्चिन्धमरामक्रीः सा सिद्धा लोकवर्त्मनि ॥ ७५५ ॥

इति चिन्धमरामक्रीः

मुक्त्वा तमेव दीर्घीकृत्य अधःस्थितं किंचित्कम्पयित्वा ग्रहे समाप्तौ छायानट्टायाः प्रथमं स्वस्थानं भवति । एतामिति । अत्र तुशब्दोऽवधारणे भिन्नक्रमश्च । एतां तु लक्ष्यवेदिनः सालगनट्टामित्याहुः ॥ -७४६–७५० ॥

(सु०) मतान्तरमाह—अन्ये त्विति । स्थायिपञ्चमानन्तरं ऋषभः ततो मध्यमं कम्पयित्वा विलम्ब्य च पञ्चमस्वरे पञ्चममध्यमौ द्विर्गायेत् । ततो गान्धारमृषभस्यार्धं च स्पृष्ट्वा पुनः ऋषभार्धं व्रजेत् । ततः रिमौ ऋषभमध्यमौ दीर्घौ कृत्वा ग्रहे न्यस्यते समाप्यते तदाद्यं स्वस्थानमिति ॥ ७५१–७५२ ॥

इति च्छायानट्टा

(सु०) अथ चिन्धमरामक्रियमाह—ममिति । मध्यमं स्थायिनं कृत्वा तमेवाशूच्चार्य ततो द्वितीयमुक्त्वा चतुर्थं विलम्बेन गीत्वा, परस्पर्शानन्तरं तृतीय-पञ्चमौ अवरोहेण ग्रहागतौ आद्यं स्वस्थानम् ॥ -७५३–७५५ ॥

इति छिन्धमरामक्रीः

रिमेव ग्रहमाश्रित्य द्विस्त्रिर्वाहत्य मं ततः ।
तं विलम्बिततां नीत्वा दीर्घीकृत्य तु मध्यमम् ॥ ७५६ ॥
रिगौ रिद्लमेतानि द्रुतीकृत्य विलम्ब्य निम् ।
पुनरुच्चार्य तं कृत्वा धैवतं सकृदाहतम् ॥ ७५७ ॥
वादयित्वा निषादं च ग्रहन्यासेन जायते ।
नाठ्यरामकृतेराद्यं स्वस्थानमिति तद्विदः ॥ ७५८ ॥
अथवा मध्यमं कृत्वा ग्रहमाहत्य पञ्चमम् ।
द्विस्त्रिर्वाप्यवरोहेण धात्क्रमादृषभं द्रुतम् ॥ ७५९ ॥
एत्यार्धं तस्य षड्जं च रेरर्धं वादयेत्पुनः ।
अथोच्चार्य रिमौ पं तु विलम्ब्य न्यस्यते ग्रहे ॥ ७६० ॥
यत्र स्वस्थानमाद्यं तन्नाठ्यरामकृतेर्मतम् ।

इति नाट्यरामक्री:

ग्रहं कृत्वा धमाहत्य सकृद् ग्रहपरं स्वरम् ॥ ७६१ ॥

(सु०) अथ नाठ्यरामक्रियमाह—रिमेवेति । ऋषभे ग्रहे सति, गान्धारं द्विस्त्रिस्ताडयित्वा, विलम्ब्य च मध्यमं द्राघयित्वा, ऋषभगान्धारौ शीघ्रं गीत्वा, निषादं विलम्ब्य, पुनरुच्चार्य धैवतं, सकृदाहतं गीत्वा निषादानन्तरं ग्रहे समाप्तौ नाठ्यरामक्रियाः प्रथमं स्वस्थानम् ॥ ७५६–७५८ ॥

(सु०) मतान्तरमाह—अथवेति । मध्यमग्रहानन्तरं पञ्चमं द्विस्त्रिस्ताडयित्वा धैवतादृषभपर्यन्तमाश्वागत्य, तस्यार्धमृषभस्यार्धं षड्जं च निषादार्धं च वादयेत् । ततः रिमौ ऋषभमध्यमौ विलम्बितं पञ्चमान्ते ग्रहे समाप्तिरिति ॥ ७५९, ७६०- ॥

इति नाट्यरामक्री:

(सु०) अथ मल्हारमाह—ग्रहमिति । धैवतं ग्रहं कृत्वा ग्रहात्परं

कृत्वा ग्रहात्परौ द्विस्तु ग्रहमाहत्य पूर्वकम् ।
द्वितीयं च क्रमादुक्त्वा ग्रहे चेन्न्यस्यते तदा ॥ ७६२ ॥
स्वस्थानमाद्यं मल्हारे ग्रहो वंशे द्वितीयकः ।

इति मह्लारः

ग्रहं द्विगुणसं कृत्वा द्रुतीकृत्य ततोऽधरम् ॥ ७६३ ॥
तमान्दोल्य द्वितीयं तु विधायाथ तृतीयकम् ।
स्फुरितं ग्रहतत्पूर्वौ वादयित्वा ग्रहे यदा ॥ ७६४ ॥
न्यासः कर्णाटगौडस्य स्वस्थानं प्रथमं तदा ।
वंशे ग्रहस्तृतीयोऽस्य गृह्यते लक्ष्यवेदिभिः ॥ ७६५ ॥

इति कर्णाटगौडः

ग्रहं तमेव सं कृत्वा प्रोच्य तुर्यतृतीयकौ ।
स्थायिनं तद्दलं चोक्त्वा पूर्वस्थायिदलं ततः ॥ ७६६ ॥

द्वितीयं स्वरं सकृदाहत्य ग्रहं गीयते, ततो ग्रहं द्विस्ताडयित्वा ग्रहात्पूर्वं द्वितीयं चोच्चार्य ग्रहे समाप्तौ मल्हारस्याद्यं स्वस्थानम् ॥ -७६१, ७६२- ॥

इति मल्हारः

(सु०) अथ कर्णाटगौडमाह—ग्रहमिति । द्विगुणे षड्जे ग्रहे सति तत्पूर्वमाशु गीत्वा, तमेवाध आन्दोल्य द्वितीयं द्विर्गीत्वा, स्फुरिततृतीयानन्तरं ग्रहं तत्पूर्वं च वादयित्वा, ग्रहे न्यासे कर्णाटगौडस्य प्रथमं स्वस्थानम् ॥ -७६३–७६९ ॥

इति कर्णाटगौडः

(क०) देशवालगौडे—ग्रहं तमेव समिति । पूर्वरागग्रहपरामर्शेन द्विगुणं षड्जमित्यर्थः । तद्दलमिति । स्थायिनः प्रकृतत्वात्तच्छब्देन

स्थायिन्यासाद्देशवालगौडस्वस्थानमादिमम् ।
जायतेऽस्यापि वंशे तु द्वितीयो दृश्यते ग्रहः ॥ ७६७ ॥
निषादे स्थायिनि प्रोच्य पूर्वं ग्रहमथोत्तरम् ।
तुर्यं द्वितीयतस्तु त्रीनवरुह्य ग्रहे यदा ॥ ८६८ ॥
न्यासस्तुरुष्कगौडस्य तदा स्वस्थानमादिमम् ।
लोके मालवगौडोऽसौ तृतीयोऽस्य ग्रहो गतः ॥ ७६९ ॥

स्थायीभूतः परामृश्यते । तस्य दलं पूर्वस्थायिदलमिति । द्विगुणशब्देन मध्यषड्जो गृहीतश्चेत्तदा पूर्वस्थायी मन्द्रषड्जः । तारषड्जो गृहीतश्चेत्तदा स्थायी मध्यषड्जः । तस्य दलमर्धम् । देशवालगौड एव केदारगौड इति जनैरुच्यते ॥ ७६६, ७६७ ॥

इति देशवालगौडः

(सु०) अथ देशवालगौडमाह—ग्रहमिति । सं षड्जं ग्रहं विधाय चतुर्थं तृतीयस्थायि तदर्धानि गीत्वा, स्थायिनः पूर्वार्धानन्तरं स्थायिनि समाप्तौ देशवालगौडस्य प्रथमं स्वस्थानम् ॥ ७६६–७६७ ॥

इति देशवालगौडः

(क०) **मालवगौडे—निषादे स्थायिनीति** । स्थायिनि सतीत्यर्थः । पूर्वमादौ ग्रहं निषादं प्रोच्य । **अथोत्तरमिति** । द्वितीयमित्यर्थः ॥ ७६८, ७६९ ॥

इति तुरुष्कगौडः

(मालवगौड इति लोके)

(सु०) अथ तुरुष्कगौडमाह—निषाद इति । निषादे स्थायिनि सति

निषादाद् ग्रहतां नीतादारोहेदाचतुर्थकम् ।
तं विलम्ब्य ततो गच्छेद् ग्रहे चेदवरोहिणा ॥ ७७० ॥
तदा द्राविडगौडस्य स्वस्थानं प्रथमं भवेत् ।
लोके सालगगौडोऽयं द्वितीयोऽस्य ग्रहो मतः ॥ ७७१ ॥
पञ्चमं ग्रहमास्थाय तृतीयं च द्वितीयकम् ।
मुक्त्वा तृतीयं स्पृष्ट्वा च प्रान्तमुक्त्वा तृतीयकम् ॥ ७७२ ॥

तत्पूर्वग्रहद्वितीयतुर्यान् गीत्वा, द्वितीयतस्त्रीन् स्वरानवरुह्य ग्रहे न्यासे तौरुष्कगौडस्य प्रथमं स्वस्थानम् ॥ ७६८, ७६९ ॥

इति तुरुष्कगौडः

(मालवगौड इति लोके)

(क०) **द्राविडगौडे**—लोके सालगगौड इत्युक्तम् । इदानीं तु लोके सालग इत्येतावतैव व्यवहारो दृश्यते, स कथमुपपद्यत इति चेत्; सोऽपि भीमसेने भीम इति व्यवहारवदुपपन्न एव ॥ ७७०, ७७१ ॥

इति द्राविडगौडः

(लोके सालगगौडः)

इत्युपाङ्गानि

(सु०) द्राविडगौडमाह—निषादादिति । ग्रहान्निषादात् स्वतुर्यस्वरपर्यन्तमारुह्य तं चतुर्थस्वरं विलम्बितं गीत्वा, अवरोहे ग्रहसमाप्तौ द्राविडगौडस्य आद्यं स्वस्थानम् ॥ ७७०, ७७१ ॥

इति द्राविडगौडः

(लोके सालगगौडः)

इत्युपाङ्गानि

(सु०) अथ कैशिकीमाह—पञ्चममिति। ग्रहपञ्चमानन्तरं द्वितीयतृतीयौ

स्पृष्ट्वा विलम्ब्य द्वितीये न्यस्यते कम्पिते ग्रहे ।
यदा भवति कैशिक्याः स्वस्थानं प्रथमं तदा ॥ ७७३ ॥
तृतीयोऽस्याः स्वरो वंशे ग्रहो लक्ष्येषु दृश्यते ।

इति कैशिकी

स्थायिनं द्विगुणं षड्जं द्रुतीकृत्य द्वितीयकम् ॥ ७७४ ॥
उक्त्वा द्वितीयतृतीयौ द्रुतीकृत्याधराधरम् ।
उदीर्य तं द्रुतीकृत्य द्वितीयं वादयेत्ततः ॥ ७७५ ॥
तृतीयं द्विस्त्रिराहत्य स्थायिनि न्यस्यते यदा ।
ललितायास्तदा प्रोक्तं स्वस्थानं प्रथमं बुधैः ॥ ७७६ ॥
अस्यामपि स्वरो लक्ष्ये तृतीयो दृश्यते ग्रहः ।

इति ललिता

इति भाषाद्वयम्

गेयौ, ततस्तृतीयमीषद्गीत्वा पूर्वमुक्त्वा, तृतीयस्य स्पर्शानन्तरं द्वितीयं विलम्ब्य कम्पिते ग्रहे समाप्तौ कैशिक्याः प्रथमं स्वस्थानम् ॥ ७७२, ७७३- ॥

इति कैशिकी

(सु०) अथ ललितामाह—स्थायिनमिति । द्विगुणं षड्जं स्थायिनं शीघ्रमुच्चार्य, द्वितीयानन्तरं तृतीयद्वितीयावाशूच्चार्य द्वितीयादधराधरं स्थायिपूर्वमुदीर्य तमेवाशु गीत्वा द्वितीयानन्तरं तृतीयं द्वित्रिवारं ताडयित्वा स्थायिनि समाप्तौ ललितायाः प्रथमं स्वस्थानम् ॥ -७७४–७७६ ॥

इति ललिता

इति भाषाद्वयम्

ग्रहं द्विगुणसं कृत्वाधस्तनं स्थायिनं तथा ॥ ७७७ ॥
कृत्वा द्वितीयतुर्यौ च द्वितीयस्थायिनौ स्पृशेत् ।
विलम्बिते द्वितीयेऽथ स्थायिनि न्यस्यते यदा ॥ ७७८ ॥
श्रीरागस्य बुधैः प्रोक्तं तदा स्वस्थानमादिमम् ।
स्वरो वंशे द्वितीयोऽस्य ग्रहत्वेनोपलक्षितः ॥ ७७९ ॥

इति श्रीरागः

यो ग्रहः क्रियते वंशे तमपेक्ष्यात्र योजयेत् ।
लक्षणस्थं द्वितीयादि यदा किंतु ग्रहादयः ॥ ७८० ॥
यावन्तो यत्र रागे स्युः स्वरा लक्ष्मणि तावताम् ।
संभवः स्थायिना येन स्थायिनं तत्र तं श्रयेत् ॥ ७८१ ॥
अनुग्रहाय मुग्धानामित्येते कतिचिन्मया ।
रागाः प्रोक्ताः पथानेन संपश्यध्वं बुधाः परान् ॥ ७८२ ॥

इति वंशप्रकरणम्

(सु०) अथ श्रीरागमाह—ग्रहमिति । द्विगुणं षड्जं ग्रहं विधाय तदधस्तनं च गीत्वा, द्वितीयतुर्यौ द्विरुच्चार्य द्वितीयस्थायिना स्पृष्ट्वा विलम्बित-द्वितीयानन्तरं स्थायिनि न्यासे श्रीरागस्य प्रथमं स्वस्थानम् ॥ -७७७–७७९ ॥

इति श्रीरागः

(क०) अथ सकलरागसाधारणन्यायं दर्शयति—यो ग्रह इति । तत्र विशेषमाह-—किंत्विति । यत्र यस्मिन् रागे ग्रहादयः स्वरा यावन्तः स्युः । लक्ष्मणि तद्रागलक्षणे येन स्थायिना तावतां स्वराणां संभवस्तत्र रागे तं स्थायिनं श्रयेदिति । अयमर्थः— यस्य देशीरागस्य मन्द्रतारावधित्वेन यौ स्वरौ भवतः, तन्मध्यस्थाः स्वरास्ताभ्यां सह यावत्संख्या ये भवन्ति, तेषां

पावो वेणुसमुत्पन्नः स्यान्नवाङ्गुलवंशवत् ।
कृतावेष्टो वंशपत्रैर्लोकरीत्यैष वाद्यते ॥ ७८३ ॥

इति पावलक्षणम्

पाविका वैणवी कार्या द्वादशाङ्गुलदैर्घ्यभाक् ।
स्थौल्येऽङ्गुष्ठमिता गर्भे स्वदैर्घ्ये सुषिरं श्रिता ॥ ७८४ ॥

न्यूनता यथा न भवति तथा स्थायिस्वरो ग्रहः कर्तव्य इति प्रयोजनवत्त्वेनोक्तमन्यत्राप्यतिदिशन् प्रकरणमुपसंहरति—अनुग्रहायेति ॥ ७८०–७८२ ॥

इति वंशप्रकरणम्

(सु०) यो ग्रह इति । वंशे यः ग्रहत्वेन परिकल्प्यते तदपेक्षया द्वितीयादिपदं योजनीयम् । अयं तु विशेषः—ग्रहादधःस्थितस्वरा यावन्त उच्चारणीयत्वेनोक्ताः, यस्मिन् स्थायिनि कृते सति यत्र तावतां संभवः स स्थायिनमाश्रयेत् । अनुग्रहायेति । अज्ञानामनुकम्पया केचिद्रागा मया प्रोक्ताः । अनेन पथा मार्गेण हे बुधाः परान् रागान् प्रति संपश्यध्वं विचारयन्तु । अत्रावश्यं प्रतिरध्याहर्तव्यः । अन्यथा सकर्मकेऽस्य संपूर्वकस्य दृशेरात्मनेपदत्वं न सिध्यति ॥ ७८०–७८२ ॥

इति वंशप्रकणरम्

(क०) पावादीनां लक्षणानि ग्रन्थत एव सुबोधानि ॥ ७८३–८०४ ॥

(सु०) पावं लक्षयति—पाव इति । वेणुकृतो नवाङ्गुलपरिमितः वंशपत्रिकाभिरावेष्टितः पावः । एष लोकानां रीत्या वादनीयः ॥ ७८३ ॥

इति पावलक्षणम्

(सु०) पाविकाया लक्षणमाह—पाविकेति । वेणुमयी द्वादशाङ्गुलदीर्घा अङ्गुष्ठस्थूला गर्भे स्वदैर्घ्ये कनिष्ठाग्रप्रमाणं रन्ध्रमाश्रिता पाविका कार्या ।

कनिष्ठाप्रमितस्थौल्यमस्या लोकानुसारतः ।
फूत्काररन्ध्रमेकं स्यात्पञ्च स्युः स्वरसिद्धये ॥ ७८५ ॥
वादनं विविधं नागयक्षावेशविधायकम् ।

इति पाविकालक्षणम्

हस्तद्वयाधिका माने मुखरन्ध्रसमन्विता ॥ ७८६ ॥
चतुःस्वरच्छिद्रयुता मुरली चारुनादिनी ।

इति मुरली

शृङ्गजा दारवी वा स्यात्काहलाकृतिधारिणी ॥ ७८७ ॥
अष्टाविंशत्यङ्गुला च दैर्घ्ये मधुकरी शुभा ।
मुखरन्ध्रं च तस्याः स्यात्तुवरीबीजसंनिभम् ॥ ७८८ ॥
मुखरन्ध्रादङ्गुलानि त्यक्त्वा चत्वारि वंशवत् ।

अस्या कनिष्ठाङ्गुलिमितं स्थौल्यं लोकरीत्या एकं फूत्काररन्ध्रं कार्यम् । पञ्च स्वरोत्पादकानि रन्ध्राणि, अनेकप्रकारं वादनं रागयुक्तवेगकारि ॥७८४,७८५-॥

इति पाविकालक्षणम्

(सु०) मुरलीं लक्षयति—हस्तेति । हस्तकद्वयाधिकविस्तारा मुखरेन्ध्रेण चतुर्भिश्च स्वररन्ध्रैः प्रयुक्ता मुरली ॥ -७८६- ॥

इति मुरली

(सु०) मधुकरीं लक्षयति—शृङ्गजेति । शृङ्गजा शृङ्गकृता, दारवी वा काष्ठकृता वा काहलावत् अष्टाविंशत्यङ्गुलदीर्घा मधुकरी । तस्याः मुखरन्ध्रं च, तुवरीबीजसंनिभम्; तुवरी आढकी, तस्या बीजवत् कार्यम् । ततः मुखरन्ध्रात् चतुरङ्गुलानि त्यक्त्वा सप्त रन्ध्राणि कार्याणि । तेषामन्तः अन्त-

विधाय सप्त रन्ध्राणि कुर्वीत विवरान्तरम् ॥ ७८९ ॥
तेषां च मुखरन्ध्रस्य मध्येऽधोभागसंस्थितम् ।
मधुरध्वानसिद्ध्यै तन्मुखरन्ध्रे तु ताम्रजा ॥ ७९० ॥
निधातव्या यवस्थूला नलिका चतुरङ्गुला ।
तदूर्ध्वे चक्रिका स्थाप्या दन्तजा शुक्तिजाथवा ॥ ७९१ ॥
रन्ध्रमध्ये काशमयीं यद्वा देवनलोद्भवाम् ।
शुक्तिकां किंचिदुभ्दिन्नमालतीकलिकाकृतिम् ॥ ७९२ ॥
मृदुलां क्षीरपाकेन क्षिप्त्वा मधुकरीं ततः ।
वंशवद्वादयेद्रन्ध्रं पिदधीताप्यधस्तनम् ॥ ७९३ ॥
वामाङ्गुष्ठाग्रभागेनेत्युक्तं निःशङ्कसूरिणा ।

इति मधुकरीलक्षणम्

ताम्रजा राजती यद्वा काञ्चनी सुषिरान्तरा ॥ ७९४ ॥
धत्तूरकुसुमाकारवदनेन विराजिता ।
हस्तत्रयमिता दैर्ध्ये काहला वाद्यते जनैः ॥ ७९५ ॥
हाहूवर्णवती वीरविरुदोच्चारकारिणी ।

इति काहलालक्षणम्

रालानि मुखरन्ध्रस्य मध्ये अधोभागमितानि, मधुरनादसिद्धये यववत् स्थूला, ताम्रजा ताम्रमयी नलिका चतुरङ्गुला मुखरन्ध्रे स्थापयितव्या । ततोऽर्धं मुखरन्ध्रे गजदन्तजाता शुक्तिकृता वा चक्रिका स्थाप्या । वंशाग्रे काशमयीं देवनलोद्भवां वा शुक्तिकाम्, ईषद्विकसितमालतीकोरकसंनिभां सपयः पाकात् मृदुलां निक्षिप्य मधुकरीं वंशवद्वादयेदिति संबन्धः ॥ -७८७–७९३- ॥

इति मधुकरीलक्षणम्

(सु०) काहलां लक्षयति—ताम्रजेति । ताम्रेण राजतेन सौवर्णेन वा मध्ये

हस्तद्वयकृता या सा सैव तुण्डकिनी मता ॥ ७९६ ॥
तुरुतुर्यपि सा लोके तित्तिरी च निगद्यते ।
यमलं तुण्डकिन्योश्च वाद्यं वाद्यविदो विदुः ॥ ७९७ ॥

इति तुण्डकिनीलक्षणम्

तुण्डकिन्येव चुका स्याद्दैर्घ्ये हस्तचतुष्टया ।

इति चुकालक्षणम्

करेणुवदनाकारवदनं दोषवर्जितम् ॥ ७९८ ॥
शृङ्गं यन्माहिषं श्लक्ष्णं स्निग्धं सुघटितं कृतम् ।
शृङ्गस्यानडुहस्याथ धत्तूरकुसुमाकृति ॥ ७९९ ॥

छिद्रसंयुक्ता धत्तूरपुष्पाकारमुखी त्रिहस्तदीर्घा च काहला हाहूवर्णयुक्ता वीरविरुदोच्चारकारिणी जनैर्वाद्यते ॥ -७९४, ७९५- ॥

इति काहलालक्षणम्

(सु०) तुण्डकिनीं लक्षयति—हस्तेति । द्विहस्तदीर्घा काहलेव तुण्डकिनी । सा लोके तुरुतुरु तित्तिरीति च उच्यते । एतद् वाद्यं यमलेमिति कथ्यते ॥ -७९६–७९७ ॥

इति तुण्डकिनीलक्षणम

(सु०) चुकां लक्षयति—हस्तचतुष्टयदीर्घा तुण्डकिनी चुकुकेत्युच्यते ॥ ७९७- ॥

इति चुकालक्षणम्

(सु०) शृङ्गं सक्षयति—करेण्विति । हस्तिशुण्डावत् निर्दोषं मसृणं स्नेहवत् सुघटितं महिषशृङ्गं यत्, तस्य मूले अनडुहस्य वृषभसंबन्धिनः शृङ्गस्य धत्तूरकुसुवत् अष्टाङ्गुलं खण्डं न्यसेत् । अग्रतश्च द्व्यङ्गुलपरिमितं

खण्डमष्टाङ्गुलं न्यस्य मूलेऽस्य ध्वनिवृद्धये ।
अग्रं द्वित्र्याङ्गुलं तस्य च्छित्वा फूत्काररन्ध्रकम् ॥ ८०० ॥
विधाय तुथुकारेण वादयेद्द्विविधध्वनिम् ।
एतद्वै ध्वानगम्भीरं वाद्यं गोपालकेलिषु ॥ ८०१ ॥

इति शृङ्गलक्षणम्

छित्वा फूत्काररन्ध्रं कृत्वा, तुथु इतिशब्देन गोपालकेलिषु वादयेदिति। एतद्वाद्यं ध्वानगम्भीरमित्युच्यते ॥ -७९८–८०१ ॥

इति शृङ्गलक्षणम्

निर्दोषस्योत्खातनाभेः शङ्खस्यैकादशाङ्गुलम् ।
शिखरं निर्मितं धातुसिक्थकाभ्यां मनोहरम् ॥ ८०२ ॥
मूलतश्चाग्रपर्यन्तं ह्रस्वमानाकृति क्रमात् ।
रन्ध्रमर्धाङ्गुलमितं शिखरस्य मुखे भवेत् ॥ ८०३ ॥
अन्तस्तु माषमात्रं स्याच्छङ्खमेवंविधं सुधीः ।
धृत्वा कर्कटहस्तेन भूरिश्वासभृतोदरम् ॥ ८०४ ॥
हुंधुंथो दिगिदित्येतद्वर्णौद्बोधेन वादयेत् ।

इति शङ्खलक्षणम्

इति सुषिरवाद्यलक्षणम्

(सु०) शङ्खं लक्षयति—निर्दोषस्येति। उत्खाता नाभिर्यस्य, तथाविधशङ्खस्य द्वादशाङ्गुलम्, शिखरं धातुना मधूच्छिष्टेन कार्यम्। मूलादारभ्य अग्रपर्यन्तं भासमानाकृतिरन्यूनप्रमाणम्। शिखरस्य मुखे रन्ध्रमर्धाङ्गुलप्रमाणम्। अन्तर्मध्यं माषप्रमाण भवेत्। एवंविधं शङ्खं कर्कटकाख्येन हस्तेन धृत्वा

मार्गदेशीगतत्वेन पटहो द्विविधो भवेत् ॥ ८०५ ॥
मार्गस्थपटहस्यात्र लक्षणं तावदुच्यते ।
सार्धहस्तद्वयं तस्य दैर्घ्यं स्यात्परिधिः पुनः ॥ ८०६ ॥
षष्ट्यङ्गुलो मध्यदेशः पृथुलो दक्षिणं मुखम् ।
कर्तव्यं संमितं सार्धैरेकादशभिरङ्गुलैः ॥ ८०७ ॥
वामं तु दशभिः सार्धैः संमितं दक्षिणे मुखे ।
आयसं वलयं कार्यं वामे वल्लीसमुद्भवम् ॥ ८०८ ॥
षाण्मासिको मृतो वत्सो यस्तस्यादाय पारिकाम् ।
तयावगुण्ठ्य वलयं वल्लीजं वामवक्त्रगम् ॥ ८०९ ॥
सप्तरन्ध्रान्वितं कृत्वा सुदृढैः सूक्ष्मदोरकैः ।
निक्षिप्तैस्तेषु रन्ध्रेषु बन्धव्याः कलशाः श्लथम् ॥ ८१० ॥
ते हेमादिमयाः सप्त दैर्घ्येण चतुरङ्गुलाः ।
त्यक्त्वाङ्गुलानि चत्वारि वामे स्याल्लोहपत्रिकाम् ॥ ८११ ॥

श्वासपूर्णोदरं हुंधुंथुमादिवर्णोच्चारेण वादयेत् । कर्कटकस्य लक्षणं नृत्ताध्याये वक्ष्यते, " अन्योन्यान्तरनिष्क्रान्ता स्फुरद् गुल्भस्तु कर्कटः " इति ॥ ८०२–८०४- ॥

इति शङ्खलक्षणम्

इति सुषिरवाद्यलक्षणम्

(सु०) अथानद्धाख्यं विवक्षुः प्रथमं पटहं लक्षयितुं विभजते—मार्गेति। पटहो द्विविधः—मार्गपटहो देशीपटहश्चेति। तत्र मार्गपटहस्य लक्षणं कथ्यते—सार्धेति। सार्धौ द्वौ हस्तौ दीर्घता, परिधिः पुनः षष्ट्यङ्गुलपरिमितः, मध्यदेशः स्थूलः, दक्षिणं मुखं सार्धैकादशाङ्गुलम् । वाममुखं तु सार्धदशाङ्गुलम् । दक्षिणे मुखे लोहमयं वलयं कर्तव्यम् । वाममुखे वल्लीसमुद्भवम् । षाण्मासिकेति। यस्य तर्णकस्य जातस्य षाण्मासजातस्य पारिकामादाय गृहीत्वा, तया वल्लीजं

अङ्गुलत्रयविस्तारां पटहे वेष्टयेद् दृढम् ।
बाह्यकायस्य यच्चर्म पशोस्तेन घनेन च ॥ ८१२ ॥
कवलाख्येन बध्नीयात्पिहितं वदनद्वयम् ।
दक्षिणास्यस्य कवलं परितः कृतरन्ध्रकम् ॥ ८१३ ॥
रन्ध्रक्षिप्तैर्गुणैर्गाढमाकृष्येतरवक्त्रगैः ।
वलये तान्गुणान्सम्यग्बध्नीयाद्दार्ढ्यसिद्धये ॥ ८१४ ॥
वामास्यकवलान्तःस्थसप्तरन्ध्रनिवेशितैः ।
गुणैरावेष्ट्य कलशानायसैर्वलयैर्दृढैः ॥ ८१५ ॥
अन्तःक्षिप्त्वा समाकृष्टैर्वलये गाढतां नयेत् ।
कलशेभ्यो बहिर्वामवलयान्ते च बध्यते ॥ ८१६ ॥
वेष्टनाय कटेः कच्छेत्युक्तोऽयं स्कन्ददैवतः ।
श्रीयज्ञपुरवर्येण पटहो मार्गसंभवः ॥ ८१७ ॥

इति मार्गपटहः

वामवक्त्रगं वलयमवकुण्ठ्य, उभयविधं सप्तरन्ध्रयुतं कृत्वा रन्ध्रेषु क्षिप्तैः सूक्ष्मदोरकैः कलशान् श्लथं बन्धनीयाः । त इति । ते कलशाः सुवर्णादिधातुमयाः चतुरङ्गुलदीर्घाः सप्त कार्याः । वाममुखात् अङ्गुलचतुष्टयं परित्यज्य लोहकृतां पत्रिकामङ्गुलत्रयविस्तारां दृढतया पटहे आवेष्टयेत् । बाह्यमिति । पशोः तर्णकस्य छागस्य वा शरीरबाह्यं यच्चर्म तेन निबिडेन कवलनामधेयेन पिहितं मुखद्वयं बध्नीयात् । दक्षिणेति । दक्षिणमुखस्य कवलं सर्वतः छिद्रयुतं कार्यम् । रन्ध्रेषु क्षिप्तैर्दोरकैः कलशानाकृष्य इतरमुखगतैः वलये तान् दोरकान् बध्नीयात् । वामेति । वाममुखस्य कवलं तु अन्तःस्थेषु सप्तरन्ध्रेषु निवेशितैः दोरकैः कलशानावेष्ट्य आयसैः लोहमयैः वलयैः अन्तर्निक्षिप्य आकृष्टैः स्वैर्दोरकैः वलयं दृढं कुर्यात् । कलशेभ्य इति । कलशःसकाशात् बहिःप्रदेशे वामवलयप्रान्ते च कलशे बध्यते । अयं पटहः कच्छेत्युच्यते । स्कन्दो गुहो दैवतं यस्य ॥ -८०९–८१७- ॥

इति मार्गपटहः

देशीस्थोऽप्येवमेव स्याद्दैर्घ्येऽसौ सार्धहस्तकः ।
सप्ताङ्गुलं दक्षिणास्यमन्यत्सार्धषडङ्गुलम् ॥ ८१८ ॥
आन्तरं जाठरं वाङ्क्षणं पशोर्गदितमुद्दली ।
तया तु स्वेच्छया वक्त्रं वाममस्य निबध्यते ॥ ८१९ ॥
विशेषोऽयं भवेदस्मिन्नुभौ खादिरदारुजौ ।
त्रिधोक्तोऽयं द्वयोरन्यैरुत्तमो मध्यमोऽधमः ॥ ८२० ॥
उत्तमः प्रोक्तमानः स्याद् द्वादशांशोनितः पुनः ।
मध्यमः षष्ठभागेन विहीनस्त्वधमो भवेत् ॥ ८२१ ॥

इति देशीपटहः

अथाद्यवर्णाः—

ङवर्जितः कवर्गश्च टतवर्गौ रहावपि ।
इति षोडश वर्णाः स्युरुभयोः पाटसंज्ञकाः ॥ ८२२ ॥

(सु०) एवं मार्गपटहं लक्षयित्वा देशीपटहं लक्षयति—देशीस्थ इति । मार्गपटहवत् देशीपटहः कार्यः । परं तु दीर्घत्वे सार्धहस्तः कर्तव्यः । दक्षिणं मुखं सप्ताङ्गुलम् । वाममुखं सार्धं षडङ्गुलम् । **आन्तरमिति** । पशोरन्तर्जठरे यत्स्थितं चर्म, वङ्क्षणात् जातं वाङ्क्षणं तत् उद्दलीत्युच्यते । तया निर्मलया उद्दल्या वाममुखं बन्धनीयम् । एतावान् विशेषः—उभावपि पटहौ खदिरकाष्ठेन कार्यौ । त्रिधेति । अयं मार्गदेशीगतत्वेन द्विधा पटहः, प्रत्येकमुत्तमादिभेदेन त्रिप्रकारः, पूर्वोक्तप्रमाणेनोमुत्तमः, ततो द्वादशांशेन न्यूनो मध्यमः, षष्ठांशेन न्यूनोऽधम इति ॥ -८१८–८२१ ॥

इति देशीपटहः

(क०) **ङवर्जित इत्यादि** । कखगघटठडढणतथदधनरह इति षोडश वर्णाः । **उभयोः**; मार्गदेशीपटहयोः । **पाटसंज्ञका इति** ।

संयोगविप्रयोगाभ्यां क्रमव्युत्क्रमयोगतः ।
सस्वरत्वास्वरत्वाभ्यां पाटास्ते स्युरनेकधा ॥ ८२३ ॥
उद्दल्यामेव झेंकारो देंकारः कवलेऽधिकः ।
देशीपटहमेवाहुरिममङ्गावजं जनाः ॥ ८२४ ॥
अष्टादशाङ्गुलः किंचिन्नताग्रो मध्यतः पृथुः ।
कोणः कार्यो मूलदेशे मदनाम्बरवेष्टितः ॥ ८२५ ॥
पद्मासनोपविष्टेन गोष्ठ्यामूरुद्वयोपरि ।
संस्थाप्य मार्गपटहो वाद्यो वर्णोद्भवे पटुः ॥ ८२६ ॥
नाटके त्वर्धवक्त्रोऽयं वाद्यते घटवाद्यवत् ।
कोणेन पाणिना वास्य वादनं सूरयो विदुः ॥ ८२७ ॥

इति पटहलक्षणम्

पटहपाटा इत्युच्यन्त इत्यर्थः । **संयोगविप्रयोगाभ्यामिति** । संयोगः "हलोऽनन्तराः संयोगः" (पाणिनिसूत्रम् १-१-७) इत्युक्तलक्षणः, विप्रयोगस्तद्विपर्ययः । **क्रमव्युत्क्रमयोगत इति** । वर्णानुपूर्व्या समुच्चारणं क्रमः, तद्विपर्ययेणोच्चारणं व्युत्क्रमः । **सस्वरत्वास्वरत्वाभ्यामिति** । अत्र स्वराः षड्जादय एव विवक्षिताः, न त्वकारादयः । तेषां विप्रयोगशब्देनैव गृहीतत्वात् । षड्जादिग्रहणेऽपि सस्वरमिति रागसाहित्यमेव विवक्षितम् । अन्यथा अस्वरत्वस्यापि व्यवच्छेद्याभावादनर्थकत्वमापद्येत । स्वरस्थायिशब्दस्य षड्जाद्यन्यतमस्वरराहित्याभावात् । अतोऽत्र स्वरशब्दो रागोपलक्षणत्वेन द्रष्टव्यः । एवमुक्तैर्विशेषणैस्ते पाटाः **अनेकधा स्युरिति**, बहुभेदभिन्ना भवन्तीत्यर्थः । **उद्दल्यामेव झेंकार इति** । उद्दली नाम देशीपटहस्य वामवक्त्रपिधायकश्चर्मविशेष उच्यते; तत्र वादनेन झेंकार एवाधिक इति । पूर्वोक्तेभ्यः षोडशवर्णेभ्योऽधिक उत्पद्यत इत्यर्थः । **देंकारः कवलेऽधिक इति** । कवलं

**ये पाटाः पटहे प्रोक्तास्तेषां विविधगुम्फनात् ।**
**हस्तोद्भवाः पाटभेदा हस्तपाटाः प्रकीर्तिताः ॥ ८२८ ॥**
**ते चानन्ता न शक्यन्ते प्रत्येकं वेदितुं जनैः ।**
**प्रदर्शनार्थमेतेषु कतिचित्प्रतिपादये ॥ ८२९ ॥**

नाम मार्गपटहस्य दक्षिणवक्त्रपिधायकश्चर्मविशेषः ; तत्र वादनेन देंकारः पूर्ववदधिक उत्पद्यते । **पद्मासनोपविष्टेनेति** । पद्मासनबन्धं कृत्वोपविष्टेन पटहवादकेन ॥ ८२२–८२७ ॥

इति पटहलक्षणम्

(सु०) अस्य वर्णानाह—**ङवर्जित इति** । ङकारेण वर्जितो हीनः, तेन कवर्गटवर्गतवर्गा रेफहकाराश्च षोडश वर्णाः पाटाः । उत्तमो मार्गदेशीपटहयोर्भवेत् । ते पाटाः संयोगादिविशेषेण अनेकप्रकारा भवन्ति । पूर्वोक्तायामुद्दल्यां झेंकार एवोत्पद्यते । कवले देंकारः पूर्वोक्तवर्णेभ्योऽधिको जायते । देशीपटहो लोके अड्डावज इत्युच्यते। **अष्टादशेति** । अस्य पटहस्य कोणः वादनकाष्ठमष्टादशाङ्गुलप्रमाणम् । अग्रे किंचिन्नम्रं, मध्ये स्थूलं, मूलदेशे मदनाम्बरेण सिक्थकच्छेन च त्रिवेष्टितं कार्यम् । वादनप्रकारमाह—**पद्मेति** । पद्मासने लोकप्रसिद्धे उपविष्टेन वादकेन ऊर्वोर्निधाय मार्गपटहो वाद्यो वादनीयः । नाटके तु अयं पटहः, अर्धमुखः घटवाद्यवद्वाद्यत इत्यर्थः। अथवा अस्य वादनं कोणेन पाणिना कार्यम् ॥ ८२२–८२७ ॥

इति पटहलक्षणम्

(क०) अथ पटहोद्भवान् हस्तपाटान् लक्षयति—**ये पाटा इति । तेषामिति** । यथायोगं झेंकारदेंकारसहितानां कादीनां षोडशवर्णानाम् । **विविधगुम्फनात्**; संयोगादिभिर्बहुधा विविधकारणात् । हस्तोद्भवा इति हेतुगर्भितं विशेषणम् । हस्तोद्भवत्वादिति हेतुर्द्रष्टव्यः । कोणस्यापि हस्तव्यापाराधीन

सद्योजातान्नागबन्धः स्वस्तिको वामदेवतः।
अलग्नोऽभूदघोरात्तु शुद्धिस्तत्पुरुषाभिधात्॥ ८३० ॥
आसीदीशानवक्त्रात्तु समस्खलितसंज्ञकः।
जाताः पञ्चेति पञ्चभ्यो मुखेभ्यः पार्वतीपतेः॥ ८३१ ॥
अतस्ते सर्वपाटानां पाटा मुख्यतमा मताः।
क्रमात्तद्देवता ब्रह्मविष्णुशर्वरवीन्दवः॥ ८३२ ॥
नागबन्धश्च पवनस्तथैकैकसराभिधौ।
ततो दुःसरसंचारविक्षेपा नागबन्धजाः॥ ८३३ ॥
सप्तेत्यथ स्वस्तिकजाः स्वस्तिको बलिकोहलः।
फुल्लपूर्वश्च विक्षेपः कुण्डलीपूर्वकश्च सः॥ ८३४ ॥
संचारविखली खण्डनागबन्धश्च पूरकः।
भेदाः सप्तेत्यलग्नस्य त्वेते सप्त प्रकीर्तिताः॥ ८३५ ॥
अलग्नोत्सारविश्रामा विषमाद्या खली सरी।
स्फुरी स्फुरणकश्चेति शुद्धेः स्याच्छुद्धिरादिमः॥ ८३६ ॥
स्वरस्फुरणकोत्फुल्लवलितावघटास्ततः।

व्यापारत्वात्तदुद्भवेऽपि हस्तोद्भवत्वमेव द्रष्टव्यम्। ततवाद्ये हस्तव्यापारसद्भावेऽपि तत्राङ्गुलिव्यापारस्य प्राधान्यान्न हस्तोद्भवत्वव्यपदेशः॥८२८, ८२९॥

(सु०) अधुना पटहपाटान् निरूपयति—य इति। ये पाटाः षोडशवर्णाः कवर्गादयः पूर्वमुक्ताः, तेषां विविधगुम्फनात् क्रमात् क्रमवद्योगात् हस्तेनोत्पन्नाः पाटभेदाः हस्तपाटा इत्युच्यन्ते॥ ८२८, २८९॥

(क०) तेषु मुखपाटानां नागबन्धादीनामुत्पत्तिं दर्शयति—सद्योजातादिति॥ नागबन्धादीनां पञ्चानां नामसाम्येन नागबन्धादयो-

तकारो माणिक्यवल्ली भेदाः सप्तेति संमताः ॥ ८३७ ॥
समस्खलितकस्याद्यः समस्खलितसंज्ञकः ।
विकटः सदृशः पाटखली चाडुखली ततः ॥ ८३८ ॥
अनुच्छल्लस्तथा खुत्तो भेदाः सप्तेति सन्त्यमी ।
पञ्चत्रिंशद्धस्तपाटास्तलपाटाश्च कीर्तिताः ॥ ८३९ ॥
कोणाहतश्च संभ्रान्तो विषमार्धसमाविति ।
चत्वारो हस्तपाटाः स्युर्नन्दिकेश्वरभाषिताः ॥ ८४० ॥
उत्फुल्लः खलकस्तद्वत्पाण्यन्तरनिकुट्टकः ।
दण्डहस्तः पिण्डहस्तो युगहस्तोर्ध्वहस्तकौ ॥ ८४१ ॥

ऽवान्तरभेदाः क्रमेण द्रष्टव्याः। **एकैकसराभिधाविति**। एकश्चैकसराभिधश्च। **तलपाटाश्चेति** ; हस्तपाटानामेव संज्ञान्तरम् ॥ ८३०–८३९ ॥

(सु०) सद्योजात इति । ईश्वरस्य सद्योजातमुखात् नागबन्धाख्यः पटहो जातः, वामदेवमुखात् स्वस्तिकः, अघोरमुखादलग्नः, तत्पुरुषाच्छुद्धिः, ईशानमुखात् समस्खलित इति। एते पञ्च पाटाः ईश्वरमुखेभ्यो जाताः। तस्मान्मुख्याः। एतेषां क्रमेण देवता आह—क्रमादिति। ब्रह्मविष्णुशर्वरवीन्दवः क्रमाद् देवताः। एतेषां भेदानाह—नागबन्धश्चेति। नागबन्धपाटस्य, नागबन्धादयो विक्षेपान्ताः सप्त भेदाः। स्वस्तिकपाटस्य, स्वस्तिकादयः पूरकान्ताः सप्त भेदाः। अलग्नस्य, अलग्नादयः स्फुरणकान्ताः सप्त भेदाः। शुद्धेः, शुद्ध्यादयो माणिक्यवल्ल्यन्ताः सप्त भेदाः। समस्खलितस्य, समस्खलितादयः खुत्तान्ताः सप्त भेदाः। सर्वे मिलिताः पञ्चत्रिंशद्धस्तपाटाः। त एव तलपाटा इत्युच्यन्ते ॥ ८३०–८३९ ॥

(क०) मतान्तरेण पटहे चतुरः पाटानुद्दिशति—**कोणाहतश्चेत्यादि**। पटहादिसाधारणानेकविंशतिहस्तपाटानुद्दिशति—**उत्फुल्ल इत्यादि**।

स्थूलहस्तोऽर्धार्धपाणिः पार्श्वपाण्यर्धपाण्यपि ।
कर्तरीसमकर्तर्यौ ततो विषमकर्तरी ॥ ८४२ ॥
समपाणिश्च विषमपाणिः स्यात्पाणिहस्तकः ।
नागबन्धोऽप्ययवघटः स्वस्तिकश्च समग्रहः ॥ ८४३ ॥
इत्येकविंशतिर्हस्तपाटाः स्युः पटहादिषु ।
उल्लोलः पाण्यन्तरश्च निर्घोषः खण्डकर्तरी ॥ ८४४ ॥
दण्डहस्तः समनखो बिन्दुर्यमलहस्तकः ।
रेचितो भ्रमरो विद्युद्विलासोऽप्यर्धकर्तरी ॥ ८४५ ॥
अलग्नाख्यस्ततो रेफः समपाणिरतः परम् ।
परिवृत्तः षोडशेति वाद्येषु पटहादिषु ॥ ८४६ ॥
एतान्प्रायो हुडुक्कायां कुर्वते वाद्यवेदिनः ।
अष्टौ विषमपाटाः स्युरपाटाख्यान् ब्रुवेऽधुना ॥ ८४७ ॥
तलप्रहारः प्रहरो वलितो गुरुगुञ्जितः ।
अर्धसश्चस्त्रिसश्चश्च विषमोऽभ्यस्त इत्यमी ॥ ८४८ ॥
स्यातामलगपाटौ द्वौ सश्चविच्छुरिताभिधौ ।
भ्रमरः कुञ्चितश्चेति चित्रपाटावुभौ मतौ ॥ ८४९ ॥
अष्टाशीतिरिमे हस्तपाटा निःशङ्ककीर्तिताः ।

पटहादिसाधारणत्वेऽपि प्रायेण हुडुक्कागतान् षोडश पाटानुद्दिशति— **उल्लोल** इत्यादि । अपाटापरसंज्ञकानष्टौ विषमपाटानुद्दिशति—**तलप्रहार** इति । अथापरांश्चतुरः पाटानुद्दिशति—**सश्चेत्यादि** । मिलितां हस्तपाटसंख्यामाह—**अष्टाशीतिरिति** ॥ ८४०–८४९- ॥

(सु०) मतान्तरेण पटहे पाटभेदानाह—**कोणाहत इति** । कोणाहतादयश्चा-

शिववक्त्रोत्थपाटानां स्वरूपं प्रतिपादये ॥ ८५० ॥
तेषामुत्पादकान्पाणीँल्लोकतो लक्षयेत्सुधीः ।

तद्यथा—(१) टनगिन गिननगि, इति नागबन्धः, (२) ननगिड गिडदगि, इति पवनः, (३) गिडगिड गिडदत्था, इत्येकः, (४) किटतत २, इत्येकसरः, (५) नखु नखु, इति दुःसरः, (६) खिरतकिट, इति संचारः, (७) थोंगि थोंथि, इति विक्षेपः ।

इति सद्योजातोद्भवाः सप्त हस्तपाटाः

त्वारः पाटाः नन्दिकेश्वरप्रोक्ता हस्तपाटाः । उत्फुल्लादयः समप्रहान्ता एकविंशतिः पटहादिषु हस्तपाटाः । उल्लोलादयः परिवृत्तान्ताश्च षोडश । तलप्रहारादयोऽष्टौ विषमपाटाः, त एव अपाटा इत्युच्यन्ते । सञ्चविच्छुरितौ चालग्नपाटौ स्याताम् । भ्रमरकुञ्चितौ च चित्रपाटौ । एवमष्टाशीतिर्हस्तपाटाः ॥ ८४०–८४९- ॥

(क०) अथ नागबन्धादीनां पञ्चत्रिंशद्धस्तपाटानां स्वरूपाणि लोकप्रसिद्ध्या दर्शयति—**शिववक्त्रोत्थेत्यादि** । तत्रैकसराख्ये हस्तपाटे किटततेति वर्णान् लिखित्वा अनन्तरं द्व्यङ्को लिखितः । तेन तेषां द्विरुच्चारणमवगन्तव्यम् । किटतट, किटतटेति । एवं सर्वत्र पाटसंख्याङ्कान् विहाय मध्ये विन्यस्तैः द्व्यादिसंख्याङ्कैः तत्पूर्वस्य वर्णसमुदायस्य द्विरुच्चारणादिकं द्रष्टव्यम् ॥ -८५०, ८५०- ॥

(सु०) तत्र ईश्वरमुखोद्भवानां पञ्चत्रिंशद्धस्तपाटानां स्वरूपं प्रतिज्ञाय कथयति—शिववक्त्रोत्थेत्यादिना । क्रमेण, तेषां लक्षणान्याह—तद्यथेति । तत्र नागबन्धादयो विक्षेपान्ताः सप्त हस्तपाटा यथा—टनगिन गिननगि इति नागबन्धः (१) ; ननगिड गिडदगि इति पवनः (२) ; गिडगिड गिडदत्था इत्येकः (३) किटतट २, इत्येकसरः (४) ; नखु नखु इति दुःसरः (५) ; खिरतकिट इति संचारः (६) ; थोंगि थोंथि इति विक्षेपः (७) इति सद्योजातोद्भवाः सप्त हस्तपाटाः ॥ १ ॥

(१) ततकिटकि, इति स्वस्तिकः, (२) थों हंता, इति बलिकोहलः, (३) थोंगिन थोंगिन थोंगिन, इति फुल्लविक्षेपः, (४) थोंथों गोंगों, इति कुण्डलीविक्षेपः, (५) थोंगिणतत्ता, इति संचारविलिखी, (६) किटथोंथों गिनखेंखें, इति खण्डनागबन्धः, (७) टक्कु झेंझें, इति पूरकः ।

इति वामदेवोद्भवाः सप्त हस्तपाटाः

(१) नग गिडगिड दगिदा, इत्यलग्नः, (२) दत्थरिकि दत्थरिकि, इत्युत्सारः, (३) तकि धिकि तकि धिकि, इति विश्रामः, (४) टगुनगु टगुनगु, इति विषमखली, विषमस्खलितो वा, (५) खिरितु खिरितु, इति सरी, (६) खिरि खिरि, इति स्फुरी, (७) नरकित्थरिकि, इति स्फुरणः ।

इत्यघोरोद्भवाः सप्त हस्तपाटाः

(१) दरिगिड गिडदगिदा, इति शुद्धिः, (२) टटकुटट, इति

(सु०) स्वस्तिकादयः पूरकान्ताः सप्त पाटभेदा यथा—ततकिटकिट इति स्वस्तिकः (१); थो हंता इति बलिकोहलः (२); थोंगिन थोंगिन थोंगिन इति फुल्लविक्षेपः (३); थोंथों गोंगों इति कुण्डलीविक्षेपः (४); थोंगिणतत्ता इति संचारविलिखी (५) किटथोंथों गिनखेंखे इति खण्डनागबन्धः (६); टकु झेंझें इति पूरकः (७) वामदेवोद्भवाः सप्त हस्तपाटाः ॥ २ ॥

(सु०) अलग्नादयः स्फुरणान्ताः सप्त पाटभेदा यथा—ततकिट दगिडदा इत्यलग्नः (१); दत्थरिकि दत्थरिकि इत्युत्सारः (२); तकि धिकि तकि धिकि इति विश्रामः (३); टगुनगु टगुनगु इति विषमस्खलितः (४); खिरितु खिरितु इति सरी (५); खिरि खिरि इति स्फुरी (६) नरकित्थरिकि इति स्फुरणः (७) इत्यघोरोद्भवाः सप्त हस्तपाटाः ॥ ३ ॥

(सु०) शुद्धादयो माणिक्यवल्ल्यन्ताः सप्त पाटभेदा यथा—दरिगिड गिड-

स्वरस्फुरणः, (३) ननगिन खरिखरि, इत्युच्छलः, (४) दखें दखें दखें खे, इति वलितः, (५) थों गिनगि थों गिनगि, इत्यवघटः, (६) तत्ता इति तकारः, (७) धिधि, इति माणिक्यवल्ली ।

इति तत्पुरुषोद्भवाः सप्त पाटाः

(१) तझें तझें झें, इति समस्खलितः, समस्खली वा, (२) गिरिग्ड गिरिग्ड, इति विकटः, (३) किणकिणकि, इति सदृशः, (४) धिधिकिटकि, इति खली, स्खलितो वा, (५) दिगिनगि दिगिनगि, इत्यडुखली, अडुस्खलितो वा, (६) घरकट घरकट, इत्यनुच्छलः, (७) दोंनकट द्रोंनकट, इति खुत्तः ।

इतीशानोद्भवाः सप्त पाटाः

इति सदाशिवपञ्चवक्त्रोद्भवाः पञ्चत्रिंशद्धस्तपाटाः

दगिदा इति शुद्धिः (१); टटकुटट इति स्वरस्फुरणः (२); ननगिन खरिखरि इत्युत्फुलः (३); दंखे दंखे खे इति वलितः (४) थों गिनगि थों गिनगि इत्यवघटः (५) तत्ता इति तकारः (६) धिधि इति माणिक्यवल्ली (७) इति तत्पुरुषोद्भवाः सप्त हस्तपाटाः ॥ ४ ॥

(सु०) समस्खलितादयः खुत्तान्ताः सप्त पाटभेदा यथा—तझें तझें झें इति समस्खलितः, समस्खली वा (१); गिरिग्ड गिरिग्ड इति विकटः (२); किणकिणकि इति सदृशः (३); धिधिकिटकि इति पाटखली, पाटस्खलितो वा (४); दिगिनगि दिगिनगि इत्यड्डुखली, अड्डुस्खलितो वा (५); घरकट घरघट इत्यनुच्छलः (६); दोंनकट दोंनकट इति खुत्तः (७) इतीशानोद्भवाः सप्त हस्तपाटाः। एवं सर्वे मिलित्वा पञ्चत्रिंशद्धस्तपाटा भवन्ति ॥ ५ ॥ -८९०, ८९०- ॥

इति सदाशिवपञ्चवक्त्रोद्भवाः पञ्चत्रिंशद्धस्तपाटाः

कनिष्ठाङ्गुष्ठसंयोगाच्छेषाङ्गुलिविवर्तनात् ॥ ८५१ ॥
कोणाहतो हस्तपाटः शार्ङ्गदेवोदितो यथा ।

खुंखुंथरि खुंखुंथरि करगिड करगिड ।

इति कोणाहतः (१)

सर्वाङ्गुल्यग्रघातश्च सर्वाङ्गुलिविवर्तनम् ॥ ८५२ ॥
यस्य निष्पादकं सोऽत्र संभ्रान्तः कथितो यथा ।

दरगिड दरगिड गिरिगिडद दाणकिट मटटकु ।

इति संभ्रान्तः (२)

चलनं मणिबन्धस्य पताकस्याथ कम्पनम् ॥ ८५३ ॥
पादकम्पोऽथ जनको यस्यासौ विषमो यथा ।

दद्दें दद्दें खुंखुं दद्दें खुंखुं दद्दें ततकि ततकि ।

इति विषमः (३)

पूर्वलक्ष्मविपर्यासाद्भवेदर्धसमो यथा ॥ ८५४ ॥

ददगिद गिगिरिकिटदगि थों थों गिद्थोंगिद ।

इत्यर्धसमः (४)

इति नन्दिकेश्वरोक्ताश्चत्वारो हस्तपाटाः ।

(क०) नन्दिकेश्वरोक्तानां पाटानां स्वरूपं वादनप्रकारपूर्वकं दर्शयति—कनिष्ठाङ्गुष्ठेत्यादि ॥ -८५१–८५४ ॥

(सु०) तत्र नन्दिकेश्वरप्रोक्तं कोणाहतादिपाटचतुष्टयं लक्षयति—कनिष्ठेति । कनिष्ठाङ्गुष्ठैः संयोगात् अपरासामङ्गुलीनां विवर्तनात् कोणाहताख्यो हस्तपाटो जायते । सर्वासामङ्गुलीनामग्रैर्घातः विवर्तनं च यन्निष्पादयति स

उत्फुल्लो नखराघातादलपद्मस्य जायते ।

कऱ्हें कऱ्हें ।

इत्युत्फुल्लः (१)

यदा प्रसारिताङ्गुष्ठः शुकतुण्डस्य हन्यते ॥ ८५५ ॥

विरलाङ्गुलिभिर्वाद्यं क्रमेण खलकस्तदा ।

दांगिड गिडदगिदा ।

इति खलकः (२)

यस्तु दक्षिणहस्तस्य तर्जन्यङ्गुष्ठघाततः ॥ ८५६ ॥

क्रमव्युत्क्रमघातात्तु वामहस्तेन रेफवत् ।

जायते शार्ङ्गिणोक्तोऽसौ पाण्यन्तरनिकुट्टकः ॥ ८५७ ॥

दगिडदां खरिकदां खरिक खरिकदांदां खरिखरिदां गिडदां ।

इति पाण्यन्तरनिकुट्टकः (३)

संभ्रान्तः । मणिबन्धरूपस्य कटिपूर्वप्रदेशस्य चलनं पताकहस्तावकम्पनं च ईदृक् यश्च यस्य जनको निष्पादकः स विषमः । एतल्लक्षणविपर्ययेण अर्धसमः ॥ -८९१-८९४ ॥

इति नन्दीश्वरोक्ताश्चत्वारो हस्तपाटाः

(क०) अथैकविंशतिं हस्तपाटान् दर्शयति—उत्फुल्ल इत्यादि । अलपद्मस्य नखराघातादिति ।

"व्यावर्तिताख्यकरणं कृत्वैव समवस्थिताः ।
यस्याङ्गुल्यः करतले पार्श्वगाः सोऽलपल्लवः ॥
अलपद्मः स एव स्यादङ्गुलीनां तु केचन ।
अस्य व्यावर्तितस्थाने परिवर्तितमूचिरे (७-१४६)"

ऊर्ध्वघातं पताकेन कृत्वैकमथ रेफतः ।
कृतौ यत्रोर्ध्वघातौ द्वौ दण्डहस्तो भवेदसौ ॥ ८५८ ॥

दातरिकिट दां खरिखरिदां ।

इति दण्डहस्तः (४)

क्रमाद्रेफोर्ध्वहस्ताभ्यां पिण्डहस्तः प्रजायते ।

थरिकटझें थरिकटझें ।

इति पिण्डहस्तः (५)

रेफात्मभ्यां कराभ्यां चेदूर्ध्वघातद्वयं पृथक् ॥ ८५९ ॥
क्रियते पाटनिष्पत्त्यै युगहस्तस्तदा भवेत् ।

द्रेंद्रें दांदां ।

इति युगहस्तः (६)

ऊर्ध्वहस्तो दक्षिणेन तलेनोद्गाढघातकः ॥ ८६० ॥

दरगिड दांदां ।

इत्यूर्ध्वहस्तः (७)

इत्यलपद्महस्तस्य लक्षणं वक्ष्यति । तस्य नखराघातादिव्यावृत्तिकरणेन कृतादित्यर्थः । उत्तरत्रापि वादनोपयोगित्वेनोक्तानां हस्तानां लक्षणानि नृत्ताध्यायत एवावगन्तव्यानि ॥ ८५५–८६० ॥

(सु०) उत्फुल्लादीनामेकोनविंशतिहस्तपाटान् लक्षयति—उत्फुल्ल इति । अलपद्मसंज्ञिकस्य हस्तस्य नृत्ताध्याये वक्ष्यमाणस्य नखाघातात् उत्फुल्लः (१) प्रसारितोऽङ्गुष्ठो यस्मिन्, तथाविधस्य वक्ष्यमाणशुकतुण्डाख्यहस्तस्य विरलाभिरङ्गुलीभिः क्रमेण यदा वाद्यते तदा खलकः (२) दक्षिणहस्ते तर्जन्यङ्गुष्ठया ताडितवामहस्तस्य च पूर्वोक्तरेफवत् क्रमाघातेन व्युत्क्रमा-

ऊर्ध्वघातद्वयं कृत्वा तलहस्तेन हन्यते ।
यदा वाद्यपुटद्वन्द्वं स्थूलहस्तस्तदोदितः ॥ ८६१ ॥

खुंखुंद खुंखुंद ।

इति स्थूलहस्तः (८)

अर्धार्धपाणिरर्धाभ्यां करयोस्ताडनाद्भवेत् ।

खुदां खुदां ।

इत्यर्धार्धपाणिः (९)

वादनं नखराग्रेण पार्श्वपाणिरुदाहृतः ॥ ८६२ ॥

थरगिड दागिड दगिड दगिड ।

इति पार्श्वपाणिः (१०)

अर्धपाणिर्भवेदेककराग्रकृतताडनात् ।

दगिड दगिड दरगिड दरगिड ।

इत्यर्धपाणिः (११)

(क०) वाद्यपुटद्वन्द्वमिति । वाद्यस्य पटहादेः पुटद्वन्द्वं वामदक्षिणमुखद्वयम् ॥ ८६१–८७० ॥

घातेन वा यत्र जायते स पाण्यन्तरनिकुट्टकः (३) पताकाख्येन वक्ष्यमाणहस्तेन ऊर्ध्वप्रदेशे घातं कृत्वा सर्वाङ्गुलीकृतरेफहस्तेन द्वौ घातौ यत्र क्रियते असौ दण्डहस्तः (४) क्रमेण रेफस्योर्ध्वहस्तस्य च करणे पिण्डहस्तः (५) रेफाभ्यां हस्ताभ्यामूर्ध्वघातद्वयं पाटनिष्पत्त्यर्थं पृथक् क्रियते चेत् तदा युगहस्तः (६) दक्षिणहस्तेन तीव्रघातात् ऊर्ध्वहस्तः (७) ऊर्ध्वं घातद्वयं विधाय तलहस्तेन यदा वाद्यस्य पुटद्वयं हन्यते तदा स्थूलहस्तः (८) करयोरर्धाभ्यां ताडने कृते सति अर्धार्धपाणिः (९) नखाग्रेण वादनं पार्श्वपाणिः

प्रचालनाद्वामहस्ताङ्गुलीनां कर्तरी मता ॥ ८६३ ॥

टिरि टिरि टिरि किटथों दिगिदां तिरि टिरि किटझेंझें तकिकिट ।

इति कर्तरी (१२)

कर्तरीभ्यां समं घातः कराभ्यां समकर्तरी ।

झिनकिट कनकिट किटझेंथों दिगिद तिरिटि तिरिटिकि ।

इति समकर्तरी (१३)

क्रमेण ताडनाद् द्वाभ्यां भवेद्विषमकर्तरी ॥ ८६४ ॥

टिरि टिरि थों दिगिद टिरि टिरि किद ।

इति विषमकर्तरी (१४)

अङ्गुष्ठाङ्गुलिसंघातौ हस्तयोर्युगपद्यदा ।
पीडयेतां पुटद्वन्द्वं समपाणिस्तदा भवेत् ॥ ८६५ ॥

दां गिड गिड दांदां ।

इति समपाणिः (१५)

व्यत्ययाद्व्यापृतौ हस्तौ साङ्गुष्ठाङ्गुलिभिः क्रमात् ।
यस्मिन्विषमपाणिं तं ब्रूते शंकरवल्लभः ॥ ८६६ ॥

दांदां गिड गिड दांदां ।

इति विषमपाणिः (१६)

(१०) एकस्य करस्याग्रेण ताडनेन अर्धपाणिः (११) वामहस्तस्य अङ्गुलिचालनात् कर्तरी (१२) कर्तरीद्वयेन समकालं घातात् समकर्तरी (१३) द्वाभ्यां कराभ्यां क्रमेण ताडने विषमकर्तरी (१४) पुटद्वयं पीडयित्वा हस्तयोरङ्गुष्ठाङ्गुलिघाते समपाणिः (१५) द्वौ हस्तौ अङ्गुष्ठसहिताभिरङ्गुलीभिः व्यत्ययात् व्यापृतौ,

समपाणेस्तु विरलाङ्गुलित्वे पाणिहस्तकः ।

तरगिड दरगिड ।

इति पाणिहस्तकः (१७)

नागबन्धो विपर्यासात्पुटयोः करघाततः ॥ ८६७ ॥
प्रत्येकं वा पुटद्वन्द्वे कराभ्यां ताडनादयम् ।

इति नागबन्धः (१८)

तलेन हत्वा प्रहरेत्साङ्गुष्ठाङ्गुलिभिः क्रमात् ॥ ८६८ ॥
पुटमेकैकपाणिश्चेद्भवेदवघटस्तदा ।

ततगिड गिड दगिटन गिनगिननगि ।

इत्यवघटः (१९)

पुटमेकं निहन्यातां स्वस्तिके स्वस्तिकौ करौ ॥ ८६९ ॥

तकिट तकिटतकि ।

इति स्वस्तिकः (२०)

समं करतलाभ्यां तु पुटघातात्समग्रहः ।
तले केचिदिह प्राहुरङ्गुष्ठाङ्गुलिवर्जिते ॥ ८७० ॥

तकिट किटतक ।

इति समग्रहः (२१)

इत्येकविंशतिर्हस्तपाटाः ।

दक्षिणहस्तो वामतः, वामो दक्षिणतः तदा विषमपाणिः (१६) समपणिर्विरलाङ्गुलित्वे पाणिहस्तकः (१७) करयोर्विपर्यासात् कराघातात्पुटयोः प्रत्येकं पुटद्वयताडनादयं नागबन्धः (१८) एकैकेन हस्ततलेन घातं कृत्वा अङ्गुष्ठसहिताङ्गुलीभिः क्रमात् यदा प्रहारं करोति तदा अवघटः (१९) स्वस्तिक-

लोलो व्यवहिताङ्गुष्ठो दक्षिणो यस्य साधकः ।
वामश्चोच्छलितो हस्तमुल्लोलं तं प्रचक्षते ॥ ८७१ ॥
अङ्गुष्ठमध्यमन्येऽत्र ब्रुवते दक्षिणं करम् ।
पुटमध्ये दक्षिणेन साङ्गुष्ठेन हतिं परे ॥ ८७२ ॥

झेंथां झेंथां थांथां झें ।

इति लोलः (१)

व्यङ्गुष्ठो दक्षिणो हस्तः पुटे चेन्मुहुरुल्लसेत् ।
स्वपुटं पीडयेद्वामस्तदा पाण्यन्तरो भवेत् ॥ ८७३ ॥
विश्लिष्टाङ्गुलिसंचारमङ्गुष्ठार्धार्धताडनम् ।
पाण्यन्तरस्य जनकं केचिदाचक्षते बुधाः ॥ ८७४ ॥

संज्ञकौ द्वौ करौ एकं पुटं हत्वा नृत्ताध्याये वक्ष्यमाणस्वस्तिकावन्ते भवेताम्, इति स्वस्तिकः (२०) करतलाभ्यां समकालं पुटे हन्यमाने समग्रहः (२१) इह केचित् अङ्गुष्ठाङ्गुलिवर्जितं तलमाहुः ॥ ८५९–८७० ॥

इत्येकविंशतिर्हस्तपाटाः

(क०) अथ प्रायिकहौडुकान् षोडश हस्तापाटान् दर्शयति—**लोलो व्यवहिताङ्गुष्ठ इत्यादि** ॥ ८७१–८८६ ॥

(सु०) षोडश प्रायिकहौडुक्कपाटान् लक्षयति—**लोल इति**। **दक्षिणो हस्तो** व्यवहिताङ्गुष्ठः, वामहस्तश्चोच्छलितः, यस्य साधकः यं साधयति स **लोलः** । अन्ये त्वाचार्याः अङ्गुष्ठो मध्यस्थो यस्य तथाविधं दक्षिणहस्तमाहुः । केचिदङ्गुष्ठसहितेन दक्षिणहस्तेन हतिमाघातमाहुः (१) अङ्गुष्ठेन विना दक्षिणो हस्तः पुटमध्ये पुनरुल्लासं प्राप्नोति, वामहस्तश्च स्वपुटं पीडयति चेत्, तदा **पाण्यन्तरः** । केचिद् विरलाङ्गुलिसंचारो यस्मिन्, तथा विश्लिष्टाङ्गु-

अन्ये पाण्यन्तरं प्राहुर्व्यङ्गुष्ठाद्युक्तलक्षणम् ।
हस्तान्तरं ततो भिन्नं विश्लिष्टादिकलक्षणम् ॥ ८७५ ॥

नखें नखें नखें खेंखेंखें नखें नखें नखें खेंखेंखेंखें दखुं खुंद खुंद ।

इति पाण्यन्तरः (२)

कोणघातेन निर्घोषं निःशङ्कः समभाषत ।

नखखि थोंथों दिगिदा ।

इति निर्घोषः (३)

घाताद्दक्षिणहस्तेन विरलाङ्गुलिना ततः ॥ ८७६ ॥
अङ्गुष्ठघातैर्वामेन पीडनात्खण्डकर्तरी ।

दां खुखुदां२ खुखुग थोंटझेंदें झेंदों गिथोंटे ।

इति खण्डकर्तरी (४)

अङ्गुल्यग्रैः पीडयित्वाङ्गुष्ठेन परिघट्टनात् ॥ ८७७ ॥
वामेन पीडनाद्वाद्ये दण्डहस्तोऽभिजायते ।

खुखुणं खुखुणं झेंद्रझेंद्र टिरिटिरि ।

इति दण्डहस्तः (५)

समत्वं पाटवर्णानामङ्गुलीनखराहते ॥ ८७८ ॥

लिना अर्धार्धताडनं पाण्यन्तरं जनयतीत्याहुः। अपरे तु अङ्गुष्ठाद्युक्तलक्षणहीनमन्ते हस्ते मध्ये लग्नं पूर्वोक्तलक्षणमेवमाहुः (२) कोणेन घाते कृते सति निर्घोषः (३) विरलाङ्गुलिना दक्षिणहस्तेन घातात् वामेनाङ्गुष्ठघातैः पीडनात् खण्डकर्तरी (४) दक्षिणहस्तेन अङ्गुल्यग्रैः पीडनानन्तरमङ्गुष्ठेन घट्टनं वामहस्तेन पीडनं चेत्, तदा दण्डहस्तः (५) अङ्गुलीभिर्नखैश्च संघातात्

दृश्यते यत्र तं प्राहुः पाटं समनखाभिधम् ।

रह रह तरकिट थिकिट तकिधकि टेंहेंटहेंत्रः ।

इति समनखः (६)

अवष्टभ्य पुटं वामपाणिना तर्जनीहते ॥ ८७९ ॥
बिन्दुरुत्पद्यते प्रोक्तमिति सोढलसूनुना ।

देंदिगि देंदिगि गिरिगिड २ ।

इति बिन्दुः (७)

समवष्टभ्य वामेन पुटं दक्षिणपाणिना ॥ ८८० ॥
संपीडनं वादयेच्चेत्तदा यमलहस्तकः ।

कुंद कुंद झेंद्र झेंद्र झेंहें झेंहें ।

इति यमलहस्तः (८)

उत्तुङ्गीकरणं वाद्ये स्कन्धस्य स्फुरणं तथा ॥ ८८१ ॥
अङ्गुष्ठतर्जनीघातः पाटं कुर्वन्ति रेचितम् ।

देंदें थांथों देंदें नखझें२ नहनझें ।

इति रेचितः (९)

भ्रमरो हस्तपाटः स्यात्समस्ताङ्गुलिताडनात् ॥ ८८२ ॥

खेखेणं खुखुणं खु२ णं झेंद्र२ णह करें झें ।

इति भ्रमरः (१०)

पाटवर्णानां साम्यं यत्र, स समनखः (६) वामहस्तेन पुटं धृत्वा दक्षिणतलेन घातात् बिन्दुः (७) वामेन पुटं धृत्वा दक्षिणेन संपीडनात् यमलहस्तः (८) वामस्योर्ध्वीकरणं, स्कन्धस्य स्फूर्तिः, अङ्गुष्ठेन तर्जन्या च घातः, एतै रेचिताख्यं पाटं यत्र जनयन्ति स रेचितः (९) समस्ताङ्गुलीनां भ्रमररूपताड-

अङ्गुष्ठतर्जनीघाताद्वलितार्धार्धहस्तकः ।
विद्युद्विलासो भणितो विद्युद्विलसितोऽथवा ॥ ८८३ ॥

तणे२ तिर झोंझों द्रि२ त्रां ।

इति विद्युद्विलासः (११)

तर्जनीमध्यमानामा विरलाः प्रहरन्ति चेत् ।
श्रीश्रीकरणनाथेन तदा प्रोक्तार्धकर्तरी ॥ ८८४ ॥

दोखुंखुं२ ग्रेह घेट२ झेहें धिगिगि थोंटें ।

इत्यर्धकर्तरी (१२)

हस्तौ न कुण्डलीलग्नौ यत्रालग्नं तमूचिरे ।

खुंखु२ नखें झेहेगि२ थोंटें ।

इत्यलग्नः (१३)

स्याद्रेफः स्कन्धसञ्चेन समस्ताङ्गुलिघाततः ॥ ८८५ ॥

हनथों झेंझें द्रं२ झेंद्र झेंहेंद्र ।

इति रेफः (१४)

समपाणिरविश्रान्तविरलाङ्गुलिघाततः ।

ननगि२ देगि थों गिनह२ झें ।

इति समपाणिः (१५)

नात् भ्रमरः (१०) अङ्गुष्ठतर्जनीभ्यां घातात् वलितार्धार्धहस्तकेन वादने विद्युद्विलासः, विद्युद्विलसितो वा (११) तर्जन्यादयस्तिस्रोऽङ्गुलयो विरलाः प्रहारे कुर्वन्ति चेत्, तदा अर्धकर्तरी (१२) हस्तौ कुण्डली सर्पाकारत्वेन यत्र लग्नौ सोऽवलग्नः (१३) स्कन्धनल्या समहस्ताङ्गुलिघातात् रेफः (१४) अनवरतं विरलाङ्गु-

परिवृत्तो हस्तपाटः स्यात्पुटद्वन्द्वताडनात् ॥ ८८६ ॥

झें थों४ गिणना२ ।

इति परिवृत्तः (१६)

इति षोडश प्रायिकहौडुक्कहस्तपाटाः ।

तलप्रहारहेतुः स्याद्वामस्कन्धप्रचालनम् ।
मध्येवामपुटं वामपाणिना च निपीडनम् ॥ ८८७ ॥

दें थों द्रें धिकिट किट झेंधितिरि२ त्रा ।

इति तलप्रहारः (१)

तलाङ्गुष्ठप्रहारेण प्रहरोऽभिहितो बुधैः ।

झेदां थों गिदिगिद२ किट धों धों ।

इति प्रहरः (२)

ऊर्ध्वाग्रे पटहादौ तु तर्जन्यङ्गुष्ठधारिते ॥ ८८८ ॥

लिघातात् समापाणिः (१९) पुटद्वयताडनात् परिवृत्तः (१६) ॥ ८७१-८८६ ॥

इति षोडश प्रायिकहौडुक्कहस्तपाटाः

(क०) अथापाटाख्यानष्टौ पाटान् दर्शयति—**तलप्रहारहेतुरित्यादि** ॥ ८८७-८९२- ॥

(सु०) अथाष्टौ अपाटाख्यहस्तपाटान् लक्षयति—तलेति । वामस्कन्धेन चालनं वामपुटस्य मध्ये मध्येवामपुटम्, "पारे मध्ये षष्ठ्या वा" (पाणिनिसूत्रम् २-१-१८) इति समासः । तत्र वामपाणिना पीडनं च तलप्रहाराख्यस्य हेतुः कारणम्, इति तलप्रहारः (१) तलेनाङ्गुष्ठेन च प्रहारेण प्रहराख्यः पाटः, इति **प्रहरः** (२) ऊर्ध्वाग्रे पटहादौ पटहे हुडुक्कायां वा तर्जन्यङ्गुलीभ्यां

वादनेन समुद्भूतमपाटं वलितं विदुः ।

खुंखुदरि२ दां थोंगि थोंगि ।

इति वलितः (३)

अङ्गुष्ठानामिकाभ्यस्तवलनाद्दक्षिणे पुटे ॥ ८८९ ॥
उच्छ्वासाद्वामपाणेश्च जायते गुरुगुञ्जितः ।

थुकर४ थोंरगिडिदा२ धिकि थोंटें ।

इति गुरुगुञ्जितः (४)

कम्पनं वामपादस्य नितम्बचलनं तथा ॥ ८९० ॥
उच्छ्वासनं करतलस्यार्धसश्वप्रपश्चकम् ।

खें खें दरि२ खें खेंटः२ ।

इत्यर्धसश्वः (५)

त्रिकस्य चलनाद्वामाङ्गुष्ठस्य परिघट्टनात् ॥ ८९१ ॥
स्कन्धसश्चाच संजातं त्रिसश्वं परिचक्षते ।

खेंद खें खें दखेंद ।

इति त्रिसश्वः (६)

धारिते सति यद्वादनं तस्मात् वलिताख्योऽपाटो जायते, इति वलितः (३) दक्षिणे पुटे अङ्गुष्ठानामिकाभ्यामभ्यस्तात् पुनःकृतात् वलनात् वामपाणेरुच्छ्वासाच गुरुगुञ्जित उत्पद्यते, इति गुरुगुञ्जितः (४) वामपादस्य कम्पः, तथा नितम्बस्य चलनम्, करतलस्योच्छ्वासः, एते अर्धसश्वाख्यमपाटं प्रपञ्चयति, इत्यर्धसश्वः (५) त्रिकस्य चलनम्, वामाङ्गुष्ठस्य परिघट्टनम्,

**हस्तवैषम्यसंजातो विषमः संमतः सताम् ॥ ८९२ ॥**

खेंदंधरि२ थों दिगिधरिखें४ खरकट२ ।

इति विषमः (७)

**अपाटोऽभ्यस्तसंज्ञस्तु भवेत्करविवर्तनात् ।**

खणगिणखङ्कि२ तकिधिकित्त ।

इत्यभ्यस्तः (८)

इत्यष्टावपाटाख्या हस्तपाटाः ।

**अर्धाङ्गुल्यग्रघातोत्थं सञ्चमाचक्षते यथा ॥ ८९३ ॥**

थुकर२ गिणणं२ ।

इति सच्चः (१)

**करसञ्चेन शुद्धेनाङ्गुष्ठघातेन च क्रमात् ।**
**उत्पन्नोऽलगपाटः स्यान्नाम्ना विच्छुरितो यथा ॥ ८९४ ॥**

झेंद्र२ झेंगिरि गिडिदा नगिरि गिडनम् ।

इति विच्छुरितः (२)

स्कन्धस्येषन्नमनम्, एतेभ्यस्त्रिसञ्चो जायते, इति त्रिसच्चः (६) हस्तवैषम्येणोत्पन्ने विषमः, इति विषमः (७) करविवर्तनात् अभ्यस्तः, इत्यभ्यस्तः (८) ॥ ८८७-८९२- ॥

इत्यष्टौ अपाटाख्या हस्तपाटाः

(क०) अथालगपाटस्य भेदद्वयं दर्शयति—**अर्धाङ्गुल्यग्रेत्यादि** ॥ -८९३, ८९४ ॥

इत्यलगपाटद्वयम्

(सु०) अलगपाटद्वयं लक्षयति—अर्धेति । अर्धेनाङ्गुल्यग्रेण घातात्

तलप्रहारो वलितभेदितो भ्रमरो यथा ।

दं थं द्रें झेंद्र४ खुंखुंधुरि दथोंगिं ।

इति भ्रमरः (१)

संकरात्करपाटानां कुञ्चितः कथितो यथा ॥ ८९५ ॥

खुंखुंधरि२ धरिगिगिड२ दऱ्हें२ खुंखुं दऱ्हें२ गिरिगिड्दि२
दत्थोंगि थोंगि२ ।

इति कुञ्चितः (२)

इति चित्रपाटद्वयम्

इत्यष्टाशीतिहस्तपाटलक्षणम् ।

पटहस्य हुडुकायाः पञ्च सञ्चान्ब्रुवेऽधुना ।
स्कन्धकूर्परयोस्तद्वदङ्गुष्ठमणिबन्धयोः ॥ ८९६ ॥

उत्थितः सञ्चाख्यः पाटः, इति सञ्चः (१) करसञ्चेनाङ्गुष्ठघातेन चोत्पन्नो विच्छुरितः, इति विच्छुरितः (२) ॥ -८९३-८९४ ॥

इत्यलग्नपाटद्वयम्

(क०) अथ चित्रपाटस्य भेदद्वयं दर्शयति—**तलप्रहार इत्यादि** ॥ ८९५ ॥

(सु०) चित्रपाटयोर्लक्षणमाह—तलेति । पूर्वोक्ततलप्रहारेण, पूर्वोक्तवलितेन च मिश्रितो भ्रमरः, इति भ्रमरः (१) अन्येषां करपाटानां संकरात् कुञ्चितः, इति कुञ्चितः (२) ॥ ८९५ ॥

इति चित्रपाटद्वयम्

इत्यष्टाशीतिहस्तपाटलक्षणम्

(क०) अथ पञ्च सञ्चान् लक्षयति—**पटहस्येत्यादि**॥८९६–८९९॥

**वामस्य चरणस्यापि कम्पः सञ्चोऽभिधीयते ।**
**श्रेष्ठः पाटहिकः सञ्चादङ्गुष्ठमणिबन्धयोः ॥ ८९७ ॥**
**स्कन्धकूर्परसञ्चात्तु नीचः पटहवादकः ।**
**वरो हौडुक्किकोऽङ्गुष्ठकूर्परस्कन्धसञ्चतः ॥ ८९८ ॥**
**सञ्चाभ्यां मणिबन्धोत्थकूर्पराभ्यां तु मध्यमः ।**
**असौ वामाङ्घ्रिसञ्चेन वादनादधमो भवेत् ॥ ८९९ ॥**

इति पञ्चसञ्चलक्षणम्

**पाटविन्यासभेदाः स्युर्वाद्यानि पटहादिषु ।**
**बोल्लावणी च चल्लावण्युड्डवश्च कुचुम्बिणी ॥ ९०० ॥**

(सु०) पञ्च सञ्चान् प्रतिज्ञाय कथयति—पटहस्येति । यस्तु पटहस्य हुडुक्कायाश्च पाटान् जानाति, तत्संबन्धिनः पञ्च सञ्चान् अधुना ब्रुवे कथयामि । सञ्चस्य लक्षणमाह—स्कन्धेति । स्कन्धकूर्पराङ्गुष्ठमणिबन्धवामचरणानां कम्पः सञ्च इत्युच्यते । पाटहिकः पटहवादकः, अङ्गुष्ठमणिबन्धयोः सञ्चात् श्रेष्ठः । स एव स्कन्धकूर्पराभ्यां नीचः । हौडुक्किकः हुडुक्कावादकः अङ्गुष्ठ-कूर्परस्कन्धानां सञ्चात् वरो श्रेष्ठः । स एव मणिबन्धोत्थकूर्पराभ्यां मध्यमः । वामाङ्घ्रिसञ्चेनासौ अधम इति ॥ ८९६–८९९ ॥

इति पञ्चसंचलक्षणम्

(क०) अथ पञ्चविंशतिपटहादिजातिसाधारणानि वाद्यान्युद्दिश्य लक्षयितुं तेषां सामान्यलक्षणं तावदाह—**पाटविन्यासभेदाः स्युरिति ।** पाटाः पूर्वोक्ता अष्टाशीतिसंख्याः ; तेषां विन्यासभेदाः । पाटानां यथायोगं योजनावशाद्वाद्यानि भवन्तीत्यर्थः । तत्र पटहादिसाधारणानि द्वादश वाद्यान्युद्दिशति—**बोल्लावणीत्यादि** ॥ ९००, ९०१- ॥

चारुश्रवणिकालग्नपरिश्रवणिका ततः ।
समप्रहारः कुडुवचारणा करचारणा ॥ ९०१ ॥
दण्डहस्तो घनरवस्तानीति द्वादशावदन् ।
वल्लिश्च वल्लिपाटः स्याद्धत्ताभेदौ झडप्पणी ॥ ९०२ ॥
अनुश्रवणिका हस्तो जोडणी त्रिगुणा ततः ।
पञ्चहस्तः पञ्चपाणिर्वाद्यं स्यात्पञ्चकर्तरी ॥ ९०३ ॥
ततश्चन्द्रकला प्राहुर्वाद्यानीति त्रयोदश ।
प्रायेणैतानि दृश्यन्ते हुडुक्कावाद्यगोचरे ॥ ९०४ ॥
वाद्यानामुभयेषां स्यात्पञ्चविंशतिरित्यसौ ।
आदिमध्यावसानेषु देंकारबहुलं भवेत् ॥ ९०५ ॥

(क०) अथ त्रयोदश प्रायिकहुडुक्कावाद्यान्युद्दिशति—**वल्लिश्चेत्यादि**। **घत्ताभेदाविति**। घत्ता च भेदश्चेति द्वन्द्वः। झडप्पणीत्येकोऽन्ये च बोल्लावण्यादयो रूढितः संज्ञाशब्दा द्रष्टव्याः ॥ -९०२—९०४- ॥

(सु०) वाद्यानि लक्षयितुमाह—**पाटेति**। पूर्वोक्तपाटविन्यासविशेषाः पटहादिषु वाद्येषु विधीयमाना वाद्यानीत्युच्यन्ते। तानि च बोल्लावण्यादीनि घनरवान्तानि द्वादश; वल्ल्यादीनि चन्द्रकलान्तानि च त्रयोदश। तानि हुडुक्कावाद्यविशेषा एव भवन्ति; एते मिलिताः पञ्चविंशतिः ॥ ९००, ९०४- ॥

(क०) तत्र बोल्लावणीं लक्षयति—**आदिमध्यावसानेष्विति**। **देंकारबहुलमिति**। यदा पटहे वाद्यत्वेन बोल्लावणी वाद्यते, तदा देंकारेण बहुलं प्रचुरं भवेत्। **द्वितीयं च तादृशमिति**। द्वितीयमपि खण्डं देंकारबहुलं कर्तव्यमित्यर्थः। **अस्याः खण्डद्वयं वाद्यान्तरे स्याद्योजनान्वितमिति**। अस्या बोल्लावण्याः खण्डद्वयमुक्तरूपं योजनान्वितं तत्तद्वाद्योक्तप्रधानाक्षरैर्योजितेतरसाधारणाक्षरान्वितं चेदित्यर्थः। वाद्यान्तरे हुडु-

आद्यखण्डं द्वितीयं च तादृशं वाद्यते पृथक् ।
यत्र बोल्लावणी सोक्ता पटहे वाद्यवेदिभिः ॥ ९०६ ॥

यथा—दें३ थों३ दें३ ।

अस्याः खण्डद्वयं वाद्यान्तरे स्याद्योजनान्वितम् ।
झेंकृतिर्देंकृतिस्थाने हुडुक्कायां भवेदिह ॥ ९०७ ॥
डक्कायां मर्दले चैव थों त्रिवल्यां तु दों भवेत् ।
करटायां तु टेमेव प्रधानाक्षरयोजना ॥ ९०८ ॥
वाद्यान्तरेष्वपि प्राज्ञैः प्रोह्यतामनया दिशा ।

इति बोल्लावणी

कादौ बोल्लावणी स्यादित्यर्थः । तदेव केषुचिद्वाद्येषु दर्शयति—**झेंकृति-रित्यादि । इह,** खण्डद्वये ; **देंकृतिस्थाने,** पटहापेक्षया आदिमध्यावसानेषु प्रयुक्तस्य देंकारस्य प्रसङ्गे, **झेंकृतिः,** झेंकारः प्रयुक्तश्चेत् ; तदा हुडुक्कायां बोल्लावणी भवेत् । हुडुक्कायां झेंकारो भवति । थोमित्यादिमध्यावसानेषु प्रयुज्यते चेत् ; तदा डक्कायां भवति । थोमिति तु प्रयुज्यते चेत् ; तदा मर्दले भवति । दोमिति त्रिवल्यां भवेत् । टेमित्येव तु करटायां भवेत् । एवं प्रधानाक्षरयोजनाद्वाद्यान्तरेष्वपि ढक्कादिष्वपि । **अनया दिशा प्रोह्यतामिति** । तत्तद्वाद्योक्तप्रधानाक्षराणां यथायोगं कादिभिः षोडशवर्णैः सह योजनात्तत्तद्बोल्लावणी कार्येत्यर्थः । ननु प्रधानाक्षरस्यैकत्वादितरेषां बहुत्वात्कथं वाद्यान्तरप्रतीतिरिति चेदुच्यते । यथा षड्जादिष्वेकतमस्यांशत्वेनेतरेषां बहुत्वेऽप्यंशस्यैव तत्र प्रधानत्वेन प्रयोगबाहुल्यादितरेषां तद्रागरूषितत्वे सति रागान्तरप्रतीतिः, तद्वदत्रापि देंकारादिभिः प्रधानाक्षरैरितरेषां तत्र तत्र योगात्तेषां तत्तद्ध्वनिरूषितत्वे सति तत्तद्वाद्यप्रतीतिरिति न किंचिदेतत् ॥ -९०५–९०८- ॥

इति बोल्लावणी

मण्डले चाल्यते यत्र प्रोचुश्चल्लावणीममूम् ॥ ९०९ ॥

इति चल्लावणी (२)

वामेन तलहस्तेन दक्षिणेन तु पाणिना ।
लुलितेन सकोणेन ताडनादुड्डवो भवेत् ॥ ९१० ॥

इत्युड्डवः (३)

उद्दलीपिहिते वक्त्रे हस्तस्वस्तिकताडनात् ।

(सु०) तत्र बोल्लावण्या लक्षणमाह—आदिमध्येति । आद्यं खण्डम्, आदौ मध्ये, अवसाने च देमिति शब्दप्रचुरं भवति । द्वितीयमपि तादृशमेव यत्र पृथग्वाद्यते सा बोल्लावणी । अस्याः बोल्लावण्याः पटहादन्यस्मिन् वाद्ये योजनाया संबन्धः स्यात् । तामेव योजनामाह—झेंकृतिरिति । हुडुक्कायां इह बोल्लावण्यां झेंकारदेंकारः पाटः । डक्कायां मर्दले च थोमिति । त्रिवल्ल्यां दोमिति भवति । करटायां तुं टेमिति । इयं प्रधानाक्षरयोजना ज्ञातव्या । अनेन च प्रकारेण अन्येष्वपि वाद्येषूहनीयम् ॥ -९०६–९०८- ॥

इति बोल्लावणी (१)

(क०) चल्लावण्यादीनां लक्षणानि ग्रन्थत एवावगन्तव्यानि ॥ -९०९–९१८ ॥

(सु०) चल्लावण्यादीनां लक्षणमांह—मण्डल इति । यत्र मण्डले प्रदेशे चालनं क्रियते अमूमेतां चल्लावणीत्यवादिषुः; इति चल्लावणी (२) वामेनेति । तल-हस्तरूपेण वामहस्तेन कोणसहितेन पूर्वोक्तलुलितरूपेण दक्षिणपाणिना कृत-ताडनादुड्डवः; इत्युड्डवः (३) मुखे पूर्वोक्तया उद्दल्या पिहिते सति नृत्ताध्याये वक्ष्यमाणहस्तस्वस्तिकेन ताडने कृते सति खुंकारप्रचुरं वाद्यं कुचुम्बिणी; इति कुचुम्बिणी (४) पूर्वोक्तबोल्लावण्येव क्रमेण समकरालहस्तद्वयकृतैः बहुभिर्वाद्य-

खुंकारबहुलं वाद्यं कीर्तयन्ति कुचुम्बिणीम् ॥ ९११ ॥

इति कुचुम्बिणी (४)

बोल्लावण्येव पाणिभ्यां क्रमाद्वा युगपत्कृतैः ।
भूरिभिः संभृता पाटैश्चारुश्रवणिका भवेत् ॥ ९१२ ॥
शुद्धैश्चित्रैः क्रमात्पाटैः शुद्धा चित्रेति सा द्विधा ।

इति चारुश्रवणिका (५)

अलग्नः कुण्डलीस्पर्शं विना कोणप्रहारतः ॥ ९१३ ॥

इत्यलग्नः (६)

कर्तरी समपाणिश्चावघटो यत्र तु क्रमात् ।
सोक्ता परिश्रवणिका श्रीयज्ञपुरसूरिणा ॥ ९१४ ॥

इति परिश्रवणिका (७)

समप्रहारो युगपत्करद्वन्द्वेन घाततः ।

इति समप्रहारः (८)

कुडुवोद्भवपाटाभ्यां वाद्यं कुडुवचारणा ॥ ९१५ ॥

यूथैश्चारुश्रवणिका ; सा द्विप्रकारा—शुद्धा, चित्रेति । शुद्धैः पाटैर्विरचिता शुद्धा, चित्रैः पाटैर्विरचिता चित्रेति ; इति चारुश्रवणिका (५) कुण्डलीमस्पृश्य कोणप्रहारे कृते अलग्नः ; इत्यलग्नः (६) पूर्वोक्तकर्तरीसमपाण्यवघटाः यत्र क्रमेण क्रियन्ते सा परिश्रवणिका ; इति परिश्रवणिका (७) समकालं करद्वयेन घाते कृते सति समप्रहारः ; इति समप्रहारः (८) कुडुवाजाताभ्यां पाटाभ्यां कुडुवचारणा । कुडुवश्च वादनदण्डः, कोण इति चोच्यते ।

उच्यते वादनो दण्डः कोणः कुडुव इत्यपि ।

इति कुडुवचारणा (९)

जाता हस्तजपाटैस्तु केवलैः करचारणा ॥ ९१६ ॥

इति करचारणा (१०)

एकैको यः करद्वन्द्वान्मृदुदक्षिणपाणिकात् ।
जायते तादृशैः पाटैर्दण्डहस्तोऽभिधीयते ॥ ९१७ ॥

इति दण्डहस्तः (११)

यः करेण कराभ्यां वा कृतैः पाटैर्निरन्तरैः ।
निरन्तरघनध्वानः स स्याद्घनरवाभिधः ॥ ९१८ ॥

इति घनरवः (१२)

इति द्वादश पटहादिजातानि वाद्यानि ।

स्कन्धेन मणिबन्धेन कुडुवेन च चालनात् ।
सोल्लासाज्जायते वल्लिस्त्रिविधा पटहादिषु ॥ ९१९ ॥

इति वल्लिः (१)

इति कुडुवचारणा; (९) हस्तोद्भवैः केवलैः पाटैः करचारणा; इति करचारणा (१०) मृदुः शिथिलः दक्षिणपाणिः यस्मिन्, एवंविधात् करद्वयात् य एकैकः पाट उत्पद्यते, तथाविधैः बहुभिः पाटैर्दण्डहस्तः; इति दण्डहस्तः (११) य इति । एकेन हस्तेन, हस्तद्वयेन वा कृतैर्निरन्तरैर्मिलितैः पाटैरनवरतनिबिडध्वनिः घनरवः; इति घनरवः (१२) ॥ -९०९–९१८ ॥

इति द्वादश पटहादिजातानि वाद्यानि

(सु०) वल्ल्याद्यानि त्रयोदश प्रायिकहौडुक्कवाद्यानि लक्षयति—स्कन्धेनेति । स्कन्धेनांसेन मणिबन्धेन करपूर्वभागेन कुडुवेन कोणेन च कृतात् सोल्ला-

अर्धं वार्धद्वयं वल्ल्यां स्वैः स्वैः पाटैरयोजनम् ।
कृतं संयोजनं वा चेद्वल्लिपाटस्तदा भवेत् ॥ ९२० ॥

इति वल्लिपाटः (२)

निबद्धं वादयेदाद्यं झेंकारार्धं पुरातनम् ।
अनिबद्धं स्वबुद्ध्यार्धं कराभ्यां वादयेदथ ॥ ९२१ ॥
वाद्येनाद्यं निबद्धं चेत्पुनर्घत्ता तदोच्यते ।

इति घत्ता (३)

योगेनैकेन निष्पन्नस्तदुपाङ्गभवोऽपरः ॥ ९२२ ॥
पाटोऽन्योन्याङ्गयोगस्तैः संमिश्रैः पाटपूरणैः ।
नानावाद्योद्भवैः पाटैर्भेदस्त्रेधा लयत्रयात् ॥ ९२३ ॥

इति भेदः (४)

यस्यामुपक्रमे मध्येऽन्तेऽथ वाद्यैरनेकधा ।
सर्ववाद्यानि वाद्यन्ते जगदुस्तां झडप्पणीम् ॥ ९२४ ॥

इति झडप्पणी (५)

साचालनात् त्रिविधवल्लिर्जायते; इति वल्लिः (१) अर्धं वेति । वल्ल्या अर्धमर्धद्वयं वा स्वैः स्वैः पाटैः रहितं सहितं वा यदि स्यात्, तदा वल्लिपाटः; इति वल्लिपाटः (२) निबद्धमिति । झेंकारास्यार्धमाद्यं वादयेत् । अथ पुरातनमनिबद्धं स्वबुद्ध्या अर्धं करद्वयेन वादयेत् । पुनराद्यं निबद्धं वाद्येन वादयति चेत्, तदा घत्ता; इति घत्ता (३) योगेनेति । एकेन योगेन निष्पन्नः, यश्च योग उपाङ्गाज्जायते पाटः, यश्चान्योन्याङ्गैर्जातैः पाटपूरणैः मिश्रितैः पाटैः युक्तो भेदः, स च लयस्य त्रैविध्यात् त्रिविधो भेदः; इति भेदः (४) यस्यामिति । आदिमध्यावसानेषु वादनैरनेकविधानि वाद्यानि यस्यां वाद्यन्ते सा झडप्पणी; इति झडप्पणी

पाटः पाटाक्षरं यद्वा श्रूयते चेत्पुनः पुनः ।
अनुश्रवणिकां प्राह शंकरानुचरस्तदा ॥ ९२५ ॥

इत्यनुश्रवणिका (६)

द्वे चत्वारि भवन्त्यष्टौ यद्वा खण्डानि षोडश ।
देंकारादीनि यत्रासौ हस्तः स तु चतुर्विधः ॥ ९२६ ॥
चतुरश्रत्र्यश्रमिश्रखण्डतालप्रयोगतः ।

इति हस्तः (७)

तदर्धार्धादिभेदेन क्रमेण व्युत्क्रमेण वा ॥ ९२७ ॥
अखण्डतालाः पाटाश्चेद्युज्यन्ते जोडणी तदा ।

इति जोडणी (८)

खण्डानि त्रीणि यत्र स्युरेकैकं त्रिगुणं तथा ॥ ९२८ ॥
वाद्यते यत्र सा प्रोक्ता त्रिगुणा त्रिविधा च सा ।
आदिमध्यान्तखण्डानां त्रैगुण्यात्सा पुनर्द्विधा ॥ ९२९ ॥

(५) पाट इति । पाटो वा पाटावयवो वा यत्र पुनः पुनः श्रूयते, सा अनुश्रवणिका ; इत्यनुश्रवणिका (६) द्वे इति । प्रथमं देंकारयुक्तानि द्वे खण्डे, चत्वारि वा खण्डानि, अष्टौ षोडश वा यत्र भवन्ति, तदा हस्तः ; स चतुर्विधः— चतुरश्रः, त्र्यश्रः, मिश्र ; खण्ड इति । चतस्र अश्रयो यस्य स चतुरश्रः ; एकः चतुरश्रतालेन, अपरस्त्र्यश्रेण, कश्चिन्मिश्रेण, अन्यः खण्डेनेति ; इति हस्तः (७) तदर्धेति । खण्डतालं विहाय अन्यैस्तालैरुपनिबद्धाः पाटा अर्धरूपाः, अर्धार्धरूपा वा क्रमव्युत्क्रमाभ्यां यत्र संयोगमाप्नुवन्ति, तदा जोडणी ; इति जोडणी (८) खण्डानीति । यत्र त्रीणि खण्डानि भवन्ति । एकैकं खण्डं त्रिगुणं वा यस्यां सा त्रिगुणा । सा च त्रिप्रकारा—आदिखण्डस्य त्रैगुण्यादेका ; मध्यखण्डस्य त्रैगुण्यात् द्वितीया ; अन्त्यखण्डस्य त्रैगुण्यात् तृतोयेति । त्रिवि-

क्रमव्युत्क्रमतोऽथास्यास्तत्त्रैगुण्यमुदाहरेत् ।
प्रयुज्य त्रीणि खण्डानि प्रयुञ्जीतादिमद्वयम् ॥ ९३० ॥
ततश्चाद्यमिति प्रोक्तं खण्डे त्रैगुण्यमादिमे ।
इत्यादित्रिगुणा मध्ये त्रिगुणा तु द्विधा भवेत् ॥ ९३१ ॥
त्रैगुण्यान्मध्यखण्डस्य द्विःप्रकारात्तदुच्यते ।
खण्डत्रयं ततः खण्डद्वयमाद्यं प्रयुज्यते ॥ ९३२ ॥
ततो मध्यममित्येवं यद्वा खण्डद्वयात्परम् ।
अन्त्यद्वयं वादयित्वा प्रयोज्यं मध्यमं दलम् ॥ ९३३ ॥
अथान्तस्त्रिगुणायां प्राक् खण्डत्रितयवादनम् ।
ततोऽन्तिमद्वयं खण्डमन्तिमं वादयेत्तथा ॥ ९३४ ॥
एवमष्टविधामाह त्रिगुणां भववल्लभः ।
अथवा चतुरश्रादौ क्वापि ताले दलत्रयम् ॥ ९३५ ॥

धात् पाटक्रमात् व्युत्क्रमतः सा त्रिगुणा पुनर्द्विविधा । अथेति । पूर्वोक्तं त्रैगुण्यं विशेषेणोदाहरामीति प्रतिजानीते । एवं प्रतिज्ञाय तदेव त्रैगुण्यं निरूपयति—प्रयुज्येति । खण्डत्रयं पूर्वं गीत्वा, आद्यं खण्डद्वयं गायेत् । ततः पुनराद्यमेव-मादित्रैगुण्येन आदिमत्रैगुण्यं भवति । मध्ये तु त्रिगुणा द्विविधा । मध्यखण्डस्य द्विप्रकारात् त्रैगुण्यात् खण्डत्रयमुच्यते । तदेव द्विविधत्रैगुण्यमाह—खण्डेति । पूर्वं खण्डत्रयं गेयम् । तत आद्यं खण्डद्वयम् । ततो मध्यखण्डमित्येको भेदः । आद्य आदौ खण्डत्रयम्, ततोऽन्त्यं खण्डद्वयं, ततो मध्यमदलं खण्डमिति । अन्तस्त्रिगुणायाः त्रैगुण्यप्रकारमाह—अथान्तस्त्रिगुणायामिति । एवमष्टविधा त्रिगुणा भवन्ति ॥ ९१९–९३४- ॥

(सु०) पक्षान्तरमाह—अथवेति । चच्चत्पुटादौ यत्र क्वचन ताले खण्डत्रयं प्रयुज्य गीत्वा, एकस्वरमानेन खण्डद्वयं खण्डत्रयं यत्र क्रियते सा त्रिगुणा । अथवा चच्चत्पुटेन चाचपुटेन वा मिश्रैस्तालैर्युक्तैः क्रमात् त्रिभिः खण्डैरेषा

प्रयुज्यैकस्य खण्डस्य मानेनाथ दलद्वयम् ।
कुर्याद्दलत्रयं तावद्यत्र सा त्रिगुणा भवेत् ॥ ९३६ ॥
चतुरश्रत्र्यश्रमिश्रयुक्तैर्वैषा क्रमाद्दलैः ।
अन्ये त्वेककले ताले द्विकलेऽथ चतुष्कले ॥ ९३७ ॥
क्रमाद्विरचितैः खण्डैस्त्रिगुणामभणन्बुधाः ।
एकं चच्चत्पुटे खण्डद्वयं चाचपुटे ततः ॥ ९३८ ॥
मिश्रे खण्डत्रयं यत्र त्रिगुणां तां जगुः परे ।
पदैश्चतुर्भिरस्यां स्यात्खण्डमेकं पदं पुनः ॥ ९३९ ॥
मितं कलाभिरष्टाभिरित्युक्तं सूरिशार्ङ्गिणा ।

इति त्रिगुणा (९)

पञ्चहस्तो हस्तपाटैर्हस्तशब्दान्विताभिधैः ॥ ९४० ॥

इति पञ्चहस्तः (१०)

पञ्चपाणिस्तु पाटैः स्यात्पाणिशब्दयुताभिधैः ।

इति पञ्चपाणिः (११)

त्रिगुणा भवति। अन्ये त्विति। एककले द्विकले चतुष्कले च ताले क्रमात् कृतैः खण्डैस्त्रिगुणेत्यन्ये बुधा अभणन्। एवमिति। परे आचार्याः एकं खण्डं चच्चत्पुटे, खण्डद्वयं चाचपुटे, मिश्रताले खण्डत्रयं यस्यां, तां त्रिगुणामवादिषुः। पदैरिति। अस्यां त्रिगुणायां चतुर्भिः पदैरेकं खण्डम्। पदं पुनरष्टकलेन मितमिति शार्ङ्गदेवेनोक्तं भवति ॥ -९३६–९३९- ॥

इति त्रिगुणा (९)

(सु०) पञ्चहस्त इति। पञ्चहस्तशब्दसहितैः हस्तपाटैः पञ्चहस्तो भवति; इति पञ्चहस्तः (१०) पञ्चपाणिरिति। पाणिशब्दयुता आदिर्येषां

कर्तरीपदवत्संज्ञैः पाटैः स्यात्पञ्चकर्तरी ॥ १४१ ॥

इति पञ्चकर्तरी (१२)

वर्धन्ते च ह्रसन्ते चेन्मात्राश्चन्द्रकला इव ।
तालश्चन्द्रकलाख्यश्च तदा चन्द्रकला भवेत् ॥ १४२ ॥
द्वात्रिंशन्मात्रिकामन्ये प्राहुश्चन्द्रकलामिमाम् ।
द्विमात्राः षोडशकला वृद्धिह्रासयुजो विदुः ॥ १४३ ॥
तादृक्चतुःषष्टिकलां तामाहुर्दक्षिणे पथि ।

इति चन्द्रकला ।

इति त्रयोदश प्रायिकहौडुक्कवाद्यानि ।

इति पञ्चविंशतिरुभयवाद्यानि ।

उद्ग्राहादिनिबद्धाः स्युरत्र गीतप्रबन्धवत् ॥ १४४ ॥
वाद्यप्रबन्धास्तद्भेदलक्ष्माण्यभिदधेऽधुना ।

तथाविधैः पाटैः पञ्चपाणिर्भवति; इति पञ्चपाणिः (११) कर्तरीति । कर्तरीपदयुक्ता संज्ञा येषां तथाविधैः कर्तर्यर्धकर्तरीविषमकर्तर्यादीनां तैस्तैः पाटैः पञ्चकर्तरी जायते; इति पञ्चकर्तरी (१२) वर्धन्त इति । चन्द्रकलावत् मात्रा वर्धन्ते ह्रसन्ते न्यूनीभवन्ति चेत् यस्यां, सा चन्द्रकलाख्यतालेनोपनिबद्धा चन्द्रकला (१३) अन्ये तु द्वात्रिंशन्मात्रोपनिबद्धा चन्द्रकलेत्याहुः । वृद्धिन्यूनतायुक्ताश्च षोडशकलाः द्विमात्रास्ते अज्ञासिषुः । दक्षिणे मार्गे तादृशाः चतुःषष्टिकलाः यस्यां विद्यन्ते तां चन्द्रकलामाहुः ॥ -१४०-१४३- ॥

इति चन्द्रकला ।

इति त्रयोदश प्रायिकहौडुक्कवाद्यानि

इति पञ्चविंशतिरुभयवाद्यानि

(क०) एवं वाद्यानि निरूप्य तत्प्रबन्धान् दर्शयितुमाह—उद्ग्राहा-

यतिरोता च गजरो रिगोणी कवितं पदम् ॥ ९४५ ॥
मेलापकश्चोपशमोद्ग्राहप्रकरणान्यथ ।
अवत्सकश्छण्डणश्च तुडुका मलपं ततः ॥ ९४६ ॥
मलपाङ्गं च मलपपाटश्छेदोऽथ रूपकम् ।
अन्तरोऽन्तरपाटश्च खोजः खण्डयतिस्ततः ॥ ९४७ ॥
खण्डच्छेदोऽप्यवयतिः खण्डपाटश्च खण्डकः ।
खण्डहुल्लः समः पाटो ध्रुवकोऽङ्गाङ्गरूपके ॥ ९४८ ॥
तालो चितालः खलकः समुदायश्च जोडणी ।
उडवस्तलपाटश्चोड्डवणी तुण्डकस्ततः ॥ ९४९ ॥
अङ्गपाटश्च पैसारस्त्रिचत्वारिंशदित्यमी ।
उक्ताः श्रीकरणाग्रण्या प्रबन्धा वाद्यसंश्रयाः ॥ ९५० ॥
शीतोदकास्तथा स्नानगर्वोऽन्यो गर्वनिर्णयः ।
उत्प्रेक्षामात्रजा लक्ष्महीनास्तेऽस्मदुपेक्षिताः ॥ ९५१ ॥

**दीत्यादि** । अत्र; वाद्यप्रकरणे, **गीतप्रबन्धवत् उद्ग्राहादिनिबद्धा इति** । उद्ग्राहादयः ; उद्ग्राहः, मेलापकः, ध्रुवः, विकल्पेनान्तरः, आभोगश्चेति प्रबन्धाध्याय उक्ता धातवः ; तैर्निबद्धा एलादयो यथा गीतप्रबन्धे उक्ताः, तथात्रापि तैर्निबद्धा यत्यादयो वाद्यप्रबन्धाः स्युः । गीतप्रबन्धवदित्यतिदेशेनैव मेलापकाभोगयोर्यथायोगमभावेन द्विधातुकत्वादिकं भेदत्रयं द्रष्टव्यम् । वाद्यप्रबन्धगतानामुद्ग्राहादीनां भाण्डिकलोककृताः संज्ञास्तु लहरीत्युद्ग्राहस्य, येड्डपु इति मेलापकस्य, अन्तरिति ध्रुवस्य, उपान्तरिति वैकल्पिकस्यान्तरस्य, मुक्तायीत्याभोगस्य च संज्ञा द्रष्टव्याः । **तद्भेदलक्ष्माणीति** । तेषां वाद्यप्रबन्धानां भेदा यत्यादयः ; तासां लक्ष्माणि लक्षणानि । तान्युद्दिशति—**यतिरित्यादि** ॥ ९४४–९५१ ॥

प्रायो वाद्यप्रबन्धानां देंकारोऽन्ते निधीयते ।
काभ्यांचित्कूटवर्णाभ्यां रचितोऽत्यन्तकोमलः ॥ ९५२ ॥
एकरूपाक्षरस्तालच्छन्दोभिव्यञ्जनोज्ज्वलः ।
यो वाद्यते वाद्यखण्डो विरामैर्बहुभिर्मुहुः ॥ ९५३ ॥
यतिर्जका च सा तज्ज्ञैर्वाद्या मण्ठादिसालगे ।
आदौ वाद्यप्रबन्धस्य कस्याप्यङ्गतया यदा ॥ ९५४ ॥
तद्विदो वादयन्त्येतां वदन्त्युद्ववणं तदा ।
पाटानां रचनां केचिदत्र नेच्छन्ति सूरयः ॥ ९५५ ॥

गड्दगथों गक्कथोंटें गड्दगथों गक्कथोंटें गड्दगथों गक्कथोंटें ।

इति यतिः

(सु०) इदानीं वाद्यप्रबन्धान् निरूपयितुमाह—उदग्राहेति । उद्ग्राह-ध्रुवकाभोगैः पूर्वोक्तगीतप्रबन्धवदुपनिबद्धाः वाद्यप्रबन्धा भवन्ति । ते च यत्यादयो पैसारान्ताः त्रिचत्वारिंशत् । शीतोदकस्थानगर्वगर्वनिर्णयाख्यास्त्रयः केवलोत्प्रेक्षाजनिताः लक्षणाभावात् अस्माभिरुपेक्षिताः ॥ -९४४–९९१ ॥

(क०) तत्रस्थयतिं लक्षयति—**काभ्यांचिदिति** । **कूटवर्णाभ्यां** पटहादिवाद्यसाधारणवर्णाः कूटवर्णा उच्यन्ते, तेषु याभ्यां काभ्यांचित् । **रचित इति** । मिथोयोगार्हाभ्यां 'तथोंग कथोटिंग' इत्याद्यक्षराभ्यां निर्मितः । **अत्यन्तकोमलः** ; बन्धकाठिन्यवर्जितः । **एकरूपाक्षरः** ; उपक्रान्तवर्णानुसारेणैव समापितः । **तालच्छन्दोभिव्यञ्जनोज्ज्वल इति** । तालच्छन्दसोरभिव्यञ्जनेन प्रकाशमानः । **बहुभिर्विरामैः** ; विच्छेदैरुपलक्षितः **यो वाद्यखण्डः** मुहुर्वाद्यते सा यतिर्जका च । जकेति यतेः संज्ञान्तरमित्यर्थः । **सा तज्ज्ञैर्मण्ठादिसालग इति** । सालगसूडस्थे मण्ठादौ गीते वाद्या वादनीया, रचनायां योजनीयेत्यर्थः । एतां यतिं यदा कस्यापि वाद्यप्रबन्ध-

द्विरुद्ग्राहस्ततः खण्डं यस्यां द्विर्भूरिदेंकृति ।
तत्किंचिदधिकं वारे द्वितीयेऽथ तृतीयकम् ॥ ९५६ ॥
कियद्दीर्घं शुद्धकूटखण्डैः पाटैर्विमिश्रितैः ।
व्यस्तैः समस्तै रचितं ततो देंकृतिमत्पुनः ॥ ९५७ ॥

स्यौतागजरादेरादावङ्गतया तद्विदो वादयन्ति तदोद्वणं वदन्ति । अत्र; यतौ केचित्सूरयः पाटानां नागबन्धादीनां रचनां नेच्छन्तीत्यनेन केचिदिच्छन्तीति गम्यते ॥ ९५२–९५५ ॥

इति यतिः

(सु०) अथ वाद्यप्रबन्धानां साधारणं लक्षणमाह—प्राय इति । बाहुल्येन वाद्यप्रबन्धानामन्ते देंकारः देमितिशब्दः स्वेच्छोपनिबद्धाभ्यां कूटपाटस्य वर्णाभ्यां निबद्धः पाटाक्षरः समानाक्षरच्छन्दोभिव्यक्तिसमर्थस्ताल इति । यतिं लक्षयति—य इति । यो वाद्यखण्डः बहुभिः विरामैः वाद्यते सा यतिः । सा जक्केति चोच्यते । सा च मण्ठादिसालगसूडे वादनीया । आदाविति । इयं यस्य कस्यापि वाद्यप्रबन्धस्य आदौ यदा यतिं वादयन्ति, तदैनां वाद्यज्ञा उद्दवणमिति वदन्ति ॥ ९५२–९५५ ॥

इति यतिः

(क०) अनन्तरमोतां लक्षयति—द्विरुद्ग्राह इत्यादि । यस्यामोतायामुद्ग्राहो द्विर्द्विवारं प्रयोज्यो भवति । तत उद्ग्राहानन्तरं भूरिदेंकृति बहुलदेंकारं खण्डं मेलापकाख्यं खण्डं द्विर्भवेत् । तत्खण्डं द्वितीये वारे किंचिदधिकं प्रथमवारापेक्षया । किंचिदधिकमित्यनेन द्वितीयं खण्डमपि द्विवारं कर्तव्यमित्यर्थः । द्वितीयवारे किंचिदाधिक्यं च कतिपयैः पाटाक्षरैः कर्तव्यं भवति । अथ तृतीयकं ध्रुवाख्यं खण्डम् । शुद्धकूटखण्डैरिति पाटैरित्यस्य विशेषणम् । शुद्धाश्च कूटाश्च खण्डाश्चेति द्वन्द्वः । अत एव

सकृत्तच्च प्रयोक्तव्यमथ वर्णसरात्मकम् ।
दीर्घं खण्डं ततोऽल्पं च प्राच्यं शुद्धादिनिर्मितम् ॥ ९५८ ॥
ओता सोक्ता छण्डणान्ता कैश्चिद्देंकृतिमुक्तिका ।
एषैककलयुग्मे स्यान्निःसारौ छण्डणो भवेत् ॥ ९५९ ॥
उद्धतो ध्वनिरत्र स्यात्प्रायो मानं विलम्बितम् ।
दीप्तं नृत्तं च तामाहुः केचित्केदार इत्यपि ॥ ९६० ॥
इमामावहनीं प्राहुरेकेऽन्ये त्वन्यथा जगुः ।
पाटैर्बहुलदेंकारैस्तालैश्च निखिलैः कृता ॥ ९६१ ॥
बहुधा स्थापना यस्यामाहुराहवनीं बुधाः ।
आदौ देंकारखण्डं चेद्देंकारादिस्तदोच्यते ॥ ९६२ ॥

मिश्रितैर्व्यस्तैः समस्तपाटै रचितम् । **कियद्दीर्घं**—? पूर्वखण्डापेक्षया किंचिद्दीर्घं भवेत् । ततः ; अनन्तरम् । **देंकृतिमत्तच्च पुनः सकृत्प्रयोक्तव्यमिति**। तृतीयखण्डानन्तरं द्वितीयं देंकारखण्डं पुनः सकृदेकवारं प्रयुञ्जीतेत्यर्थः । देंकृतिमदिति द्वितीयखण्डमित्यत्र परामृश्यते । **अथ वर्णसरात्मकमिति**। **अथ**, अनन्तरं ; वर्णसरसंज्ञकमपरं दीर्घं खण्डं, ततोऽपि शुद्धादिपाटैः कार्यम् । **छण्डणान्तेति**। छण्डणो नाम वक्ष्यमाणो वाद्यप्रबन्धभेदः । सोऽन्ते यस्याः सा तथोक्ता । **देंकृतिमुक्तिकेति** । प्रायो वाद्यप्रबन्धानां देंकारोऽन्ते विधीयत इति सामान्येन पूर्वमुक्तम् । तस्य मतान्तरेण क्वचिदपवादो दर्शितो भवति । एषा ओता एककलयुग्मे यथाक्षरचच्चत्पुटे स्यात् । छण्डण ओताङ्गत्वेन तदन्ते प्रयोज्यः । छण्डणो निःसारौ भवेत् । **अत्र** ; ओतायां **प्रायः** ; प्राचुर्येण, **उद्धतो ध्वनिः**, घोषाक्षरजनितो ध्वनिः, **विलम्बितं मानं च दीप्तं नृत्तं च स्यात्**। अस्या एवौताया मतान्तरेण संज्ञान्तराणि दर्शयति—

यथा—तद्धिटें कत्थोंकट नगनथोंगकुथोंगदा२, धिक्ट२, तकटथोंगक धिधिक थोरघटे२, इत्युद्ग्राहो द्विवारं कर्तव्यः । गड्दगदे गिनदेंगक् तु थं हं देंगक् देंगनथ गनतदिगि नत्तत्तेकटदेंदेंगिन-तक्कट खुखुघंघं देंगक्, इति देंकारखण्डं द्विः ॥

तामाहुरित्यादिना । ये त्वेनामाहवनीमाहुस्तेषु केचन तस्या लक्षण-मन्यथा जगुरित्युक्त्वा तद्दर्शयति—**पाटैर्बहुलदेंकारैरिति । आदाविति ।** ओतायामादावुद्ग्राहखण्डात्पूर्वं देंकारखण्डं प्रयुज्यते चेत्तदौता देंकारादि-रित्युच्यते ॥ ९५६–९६२- ॥

(सु०) ओतां लक्षयति—द्विरिति । उद्ग्राहो द्विवारं गेयः । ततो भूरिदेंकृति बहुलीकृतदेंकारसहितं खण्डमपि द्विवारं गेयम् । द्वितीये वारे किंचिदधिकं गेयम् । ततस्तृतीयं दीर्घखण्डं शुद्धपाटैः कूटपाटैः खण्डपाटैः मिश्रैः व्यस्तैः समस्तैः पाटै रचितम् । शुद्धपाटादिलक्षणं मर्दलप्रकरणे कथयिष्यति । एवं तृतीयखण्डानन्तरं पुनस्तदेव खण्डे देंकारयुक्तं सकृत्प्रयोक्त-व्यम् । ततो वर्णसरसंज्ञकं दीर्घं खण्डम् । ततः शुद्धपाटादिनिर्मितमल्पं यस्यां सा ओतेत्युच्यते । तस्याश्चान्ते च छण्डणः कर्तव्यः । इयमोता देंकृतिमुक्तिकेत्यु-च्यते । एककलवत् चच्चत्पुटे च इयं कर्तव्या । निःसारौ ताले विरचिता इयमेव छण्डणो भवति । उद्धत इति । अस्यामुद्धतो ध्वनिः, विलम्बितं मानम्, विकृटं नृत्यं च । तामेतां केचित्केदार इत्याहुः । एके इमामाहवनीमाहुः । मतान्तरेणान्यथा लक्षयति—पाटैरिति । देंकारप्रचुरैः पाटैः सर्वैः तालयुक्ता स्थापना यस्यां, तामाहवनीमिहुः । आदौ देंकारो निबध्यते चेत्, तदा देंकारादिरित्युच्यते ॥ ९५६–९६१- ॥

इत्योता

(क०) लक्षणानुसारेण प्रस्तार्य दर्शयितुमाह—**यथेति** । प्रस्तारस्तु

द्वितीयवारे त्वधिकं कथ्यते यथा—गड्पक् देंगक् गडड्दक् देंगक्, इति। तदेंगडदक्टें थोंकदथोंगक् तटे कटदकट् दरे होंकथोरे-हेंटैतकें धिकथोंटैं थों टैं थों टैं, इति तृतीयखण्डं शुद्धादिपाटरचितम् ॥

ततः पुनः प्राचीनदेंकारखण्डं सकृत्। ततः—गड्दक् दग्निधिकाधिक तकदेंगि कथन हकदक दडक दरगड धिरिगिड धरगड्दक्। दरगरदग धिरगडदग२, तकधिगथोंगटे धिकथों-गटै थिक थोडिं खुं खुततक् थोरगड२, तक् थोरगडतक् थोतक् थोतक् थोरगड थोरगड तक् धिकथोंगटें, इति वर्णसरात्मकं खण्डम् ॥

ततः प्राचीनं शुद्धादिनिर्मितं स्वल्पम्। एतावत्पर्यन्तं चच्चत्पुटे। गड्दग् टेंद्रग् थोहटें हेते दहं थोर, तद धिधि थों थों रघटे टैं थों तथों तकथों धिकथोंटें, इति निःसारुके छण्डणः। टेंकारस्थाने देंकार इत्यन्ये ॥

इत्योता

—तद्धिटेमित्यादिग्रन्थत एवावगन्तव्यः। अत्र प्रथमं द्विरावृत्तं खण्डमुद्ग्राहः। ततो देंकारबहुलं द्वितीयवारेऽधिकं द्विरावृत्तं द्वितीयखण्डं मेलापकः। ततः शुद्धादिनिर्मितं तृतीयखण्डं ध्रुवः। ततो ध्रुवशेषत्वेन सकृद्देंकार-खण्डस्यानन्तरं वर्णसरात्मकं दीर्घं चतुर्थखण्डमन्तरः। ततोऽल्पं शुद्धादि-निर्मितं पञ्चमं खण्डमाभोगः। एवमन्यत्राप्युद्ग्राहादयोऽवयवा यथासंभवं द्रष्टव्याः। तदेतावदोतास्वरूपं चच्चत्पुटे प्रोक्तम्। छण्डणस्तु पृथक्प्र-बन्धोऽप्योताङ्गत्वेन विहितत्वादोतान्तर्भूत एव निःसारुके प्रयोक्तव्यः ॥

इत्योता (२)

कृत्वैकवारमुद्ग्राहं नातिदीर्घो न चाल्पकः ।
वादकोद्घोषगम्भीरो ध्वनिमुच्चतरं दधत् ॥ ९६३ ॥
त्रिः खण्डोऽभ्यस्यते कूटैर्बद्धो वर्णसरेण वा ।
मुहुर्विधायोपशमं छण्डणो यत्र रज्यते ॥ ९६४ ॥
गजरोऽसावुद्ववणं स्यादस्यादौ पुनः पुनः ।
एकताल्यामुद्ववणं तस्यां निःसारुकेऽथवा ॥ ९६५ ॥
भवेदुपशमोऽन्यत्र नास्य तालो नियम्यते ।
गजरावयवाः सर्वे वाद्यन्ते ते निरन्तराः ॥ ९६६ ॥

(क०) अथ गजरं लक्षयति—**कृत्वैकवारमित्यादि** । यत्र गजरे प्रथममेकवारमुद्ग्राहं कृत्वा । नातिदीर्घ इत्यादीनि खण्डविशेषणानि द्रष्टव्यानि । **कूटैः**; पटहादिसाधारणैरक्षरैः, **वर्णसरेण** वा बद्ध उच्चतरं ध्वनिं दधत् । **नातिदीर्घः**; अत्यायतत्वरहितः । **न चाल्पकः**; अतिह्रस्वत्वरहितः । **वादकोद्घोषगम्भीरः**; वादक इति तु स्वमुखेनैव पाटाक्षरोच्चारणपटुः तालधरो वा, पटहादिवाद्यवादको वा अभिधीयते । तस्योद्घोष उच्चारणे वादने वा घनध्वनिः, तेन गम्भीरः । एवंविधः खण्डस्त्रिवारमभ्यस्यते । **उपशमम्**; उपशमाख्यं वक्ष्यमाणं वाद्यप्रबन्धं मुहुर्विधाय, **यत्र छण्डणो रज्यते**; रागयुक्तः क्रियते चेत्, असौ गजरप्रबन्धः । अस्य गजरस्यादावुद्ववणं वक्ष्यमाणं पुनः पुनः स्यात् । तदुद्ववणमेकताल्यां स्यात् । उपशमस्तस्यामेकताल्यामथवा निःसारुके भवेत् । **अन्यत्रेति** । गजराङ्गत्वादन्यत्र प्रबन्धान्तराङ्गत्वे स्वतन्त्रत्वेनेत्यर्थः । अस्योपशमस्य तालो न नियम्यते । अत्रैव तालनियम इत्यर्थः ॥ ९६३–९६६ ॥

यथा—तथोह तथोह थियों२, हटे। थोंहदग थोहटें, इत्यु-द्ववणमेकताल्यां पुनः पुनः। थोंटें दंदगेन थोंगटें गें थिकतक, इत्युद्ग्राहः। प्रतिग्राहणा वोच्यते। अयं किलैकताल्यां कृतः। गड्दगत देंगगनगिदहिक्। कथोंगतकथिक थोंगटेंहें थोदगक्। गिड्दक्थोंगक्थों ३, देंथोंहटगथों ३, दें, इति त्रिरेकताल्यां खण्डः। केवलोऽप्ययं खण्डो गजर इत्युच्यते। गड्दक्थोंगक्थोंगक्थोहरघट थरे, इत्येकताल्यां पुनः पुनरुपशमः। थोहटें, इति च्छण्डणः। एतत्सर्वं नैरन्तर्येण वाद्यते॥

इति गजरः

(क०) प्रस्तार्यं दर्शयति—**तथोह तथोहेत्यादि**। उद्ग्राहं प्रस्तार्य प्रतिग्रहणा चोच्यत इत्युद्ग्राहस्य संज्ञान्तरमुक्तम्। लोके हि तथा **ताण्डिका** वदन्ति। प्राकृतत्वेन 'पडिघा' इति गजरावयवाः सर्वे वाद्यन्ते। ते निरन्तरा इत्युक्तत्वादत्रावयवत्वेनोक्तान्युपशमच्छण्डणोद्ववणानि नैरन्तर्येण प्रयोज्यानि। अयं गजर उद्ग्राहे ध्रुवाभ्यां द्विधातुको वेदितव्यः। उपशमादयः पृथक्प्रबन्धा अप्यङ्गत्वेन विहिताः प्रयुक्ताः। एवमन्यत्रापि द्रष्टव्यम्॥

इति गजरः (३)

(सु०) गजरं लक्षयति—कृत्वेति। एकवारमुद्ग्राहं गीत्वा, नातिदीर्घः, नाल्पः, वादकस्य भेदेन गम्भीरः उच्चध्वनिं विदधानः कूटपाटैः पूर्वोक्तवर्णसरेण वा निबद्धः खण्डः त्रिवारमभ्यस्य, तेन वोपशमं मुहुर्विधाय, छण्डणः पूर्वोक्तो यत्र क्रियते असौ गजरः। अस्य आदौ पूर्वोक्तमुद्ववणं गेयम्। तच्चैकताल्या निःसारुकतालेन वा भवेत्। उपशमस्तु अन्यत्र तालेन वा भवेत्। अस्य तालनियमो नास्ति। सर्वेऽपि गजरावयवा गजरसंनिकृष्टा वाद्यन्ते॥९६३–९६६॥

इति गजरः (३)

प्रत्येकं द्विः प्रयुक्तेनोपशमेनान्तयोगिना ।
युक्तं खण्डत्रयं शुद्धैः कूटैः खण्डैश्च निर्मितम् ॥ ९६७ ॥
पाटैर्व्यस्तैः समस्तैश्च बद्धं वर्णसरेण वा ।
यस्यां स्याद्वादकस्थूलमिलत्कोलाहलाकुलम् ॥ ९६८ ॥
छण्डणान्ता रिगोणी सा दधती ध्वनिमुत्तमम् ।
अस्यामुद्द्वणं कार्यं वैकल्पिकमुपक्रमे ॥ ९६९ ॥
दीप्तनृत्ते भवेदेषोपशमा ललिता मता ।
ललितं यद्युद्द्वणं तदा तल्ललिते भवेत् ॥ ९७० ॥
अन्त्यखण्डात्सोपशमाच्छण्डणाद्दीप्तनर्तनम् ।

(क०) अथ रिगोणीं लक्षयति—**प्रत्येकमित्यादि**। द्विर्द्विवारं प्रयुक्तेनान्तयोगिना खण्डान्तसंबन्धेनोपशमेन युक्तम्। पुनः किंविधम्? शुद्धैः कूटैः खण्डैश्च निर्मितम्। शुद्धास्तत्तद्वाद्यप्रतिनियता वर्णाः, कूटाः सर्ववाद्यसाधारणाः, अत्र खण्डशब्देन वर्णसमुदायावयवभूता उच्यन्ते, तैश्च निर्मितम्। व्यस्तैः समस्तैश्च पाटैर्नागबन्धादिभिर्बद्धं वर्णसरेण वा बद्धं प्रत्येकमेवंविधं खण्डत्रयं यस्यां स्यात्, सा रिगोणीति संबन्धः। पुनः किंविधा? वादकस्थूलमिलत्कोलाहलाकुलमुत्तमं ध्वनिं दधती मध्ये मध्ये वादको वाद्यध्वनिमेलनेन खलु कोलाहलं स्थूलध्वनिं करोति, तेन संकीर्णमुत्तमं सुखश्राव्यमित्यर्थः। तादृशं ध्वनिं दधती। छण्डणोऽन्ते यस्याः सा। अस्यां रिगोण्यामुपक्रम उद्द्वणं वैकल्पिकं कार्यम्। एषा रिगोणी दीप्तनृत्त उद्धते भवेत्। उपशमाः खण्डान्तेष्वङ्गत्वेन प्रयुक्ताः। **ललिते** लास्यनृत्ये मताः। उद्द्वणं यदि स्वयं ललितं तदोद्द्वणं ललितनृत्ते भवेत् इत्यनेनोद्द्वणस्य कदाचिदुद्धतत्वमप्युक्तं भवति। अन्त्यखण्डादारभ्य सोपशमच्छण्डणे **दीप्तनर्तनम्**, उद्धतं नृत्तं प्रयोज्यमित्यर्थः ॥ ९६७–९७०- ॥

यथा —तकें धिकें तकधिक तककि थोंकटगेन२ थोंगक्थों३ इति प्रथमखण्डम् । टैथोटेंगें त्थोंदिथोंद्धिहटें । इत्युपशमो द्विः । तक्कगं दडरद कुथिकुर्गदडधिक्क दक्गं दडगदक्थोंगत्तकधिक कधिकत धिककधि टेंगेंनथोंग२ थोंगक्थों इति द्वितीयखण्डम् । टें थों हटगें थोंटें । इत्युपशमो द्विः । थोंगटं दरगड धिरगड धित्थाः थोंकट तकथों कटधिक्क् । थोंधिक तद्धितक् । इति तृतीयखण्डम् । कत्थोंटक्क थोंहकटगे धिकटै थौ हटगें थों हटें इत्युपशमो द्विः । तथों गिड्दक् दिगनदिगन दिगनक थोंगतद्धितक् । थोंहेंट । इति च्छण्डणः । इत्येकताल्यामुदाहरणम् ॥

इति रिगोणी

**नातिदीर्घं द्विराद्यं स्यात्खण्डं शुद्धादिनिर्मितम् ॥ ९७१ ॥**

(क०) तकें धिकेमित्यादिः प्रस्तारो द्रष्टव्यः । **इत्येकताल्यामुद-हरणमिति** । लिखिते प्रस्तार इत्यर्थः । एवं तालान्तरेऽपि द्रष्टव्यमिति भावः । खण्डत्रययुक्तत्वादयं त्रिधातुर्वेदितव्यः ॥

इति रिगोणी (४)

(सु०) रिगोणीं लक्षयति—**प्रत्येकमिति** । शुद्धादिपाटैः व्यस्तैः समस्तैर्वा वर्णसरेण वा यन्निबद्धं प्रत्येकं द्विवारप्रयुक्तेन उपशमाख्येन अन्तेन युक्तं खण्डत्रयं गीयते । वादकस्थूलेन कोलाहलेन युक्तेन व्याकुलो भवति, अन्ते च छण्डणो यस्यां सा रिगोणी । अस्याम् ; उपक्रमे उद्वणं वैकल्पिकेन क्रियेत, तदा न वेति । इयं रिगोणी दीप्तनृत्ते नयेत् । ललिते तु उपशमयुक्ता, यदि उद्वणं ललितं स्यात्, तदा अन्त्यखण्डात् सोपशमं कार्यम् । दीप्तनर्तने च उद्धतः कार्यः ॥ ९६७–९७०· ॥

इति रिगोणी (४)

(क०) अथ कवितं लक्षयति—**नातिदीर्घमित्यादि** । यत्र कविते

यद्वा वर्णसरेणाथ तादृक्खण्डं सकृद्भवेत् ।
इत्युद्ग्राहध्रुवौ कृत्वा स्वोद्ग्राहान्त्यदलेऽथवा ॥ ९७२ ॥
स्वोद्ग्राहे यत्र मुक्तिस्तत्कवितं कवयो विदुः ।
अस्य नामान्तरं प्राहुरन्येऽवच्छेद इत्यपि ॥ ९७३ ॥
भवेदिह द्रुतं मानं वर्णाः प्रायः स्युरुद्धताः ।
बाहुल्यान्नर्तनं दीप्तं निःशङ्केनेति कीर्तितम् ॥ ९७४ ॥

यथा—गड्दकुदगिनदंदं गिनथोंग धिक्कट नकाधितक देंहकदर गडदरिक्थ रिक्थ रिदरगड थरिक थों गंडके। धिक्थोंटें२, इत्युद्ग्राहो द्विः। झेंकक नखखिन२ तहें हके नखखिनथों, इति ध्रुवाख्यं खण्डम्। ततो देंहकडरगडेत्यादिनोद्ग्राहान्त्यखण्डेनोद्ग्राहेण वा सकलेन गड्दगित्यादिना त्यागः। निःसारुताले चेदमुदाहरणम् ॥

इति कवितम्

शुद्धादिनिर्मितम्। आदिशब्देन कूटाः खण्डाश्च गृह्यन्ते। यद्वा वर्णसरेण निर्मितं नातिदीर्घमाद्यं खण्डं द्विः प्रयोज्यं स्यात्। अथ; अनन्तरं तादृगाद्यखण्डसदृशं द्वितीयखण्डं सकृद्भवेत् इत्युद्ग्राहध्रुवाविति। तत्राद्यं द्विरभ्यस्तमुद्ग्राहः। अथ सकृत्कृतं ध्रुवः। तौ कृत्वा स्वोद्ग्राहान्त्यदले स्वकीयोद्ग्राहान्त्यार्धे। अथवा स्वोद्ग्राहे समस्त एवोद्ग्राहे वेत्यर्थः। मुक्तिर्न्यासो भवति तत्कवितं विदुरिति संबन्धः। अस्य कवितस्य; अवच्छेद इति नामान्तरमन्ये प्राहुः। इह, कविते द्रुतं मानं भवेत्। प्राय उद्धता इति। उद्धतप्रचुरा इत्यर्थः। बाहुल्याद्दीप्तं नर्तनमिति। वर्णानुगुण्येनेति भावः ॥ -९७१—९७४ ॥

(क०) गड्दग्दगिनेत्यादिप्रस्तारो लक्षणानुसारेण द्रष्टव्यः। मेलापकाभोगहीनत्वादिदं द्विधातु वेदितव्यम् ॥

इति कवितम् (५)

उद्ग्राहोऽल्पो ध्रुवो नातिदीर्घः शुद्धादिनिर्मितः ।
स्याद्वर्णसरबद्धो वा छण्डणोऽन्ते यदा तदा ॥ ९७५ ॥
पदं वदन्ति वाद्यज्ञाः प्रायस्तद्दीप्तनर्तने ।
वादयित्वा यतिं मध्ये प्रबन्धस्य विमुच्यते ॥ ९७६ ॥
पाटेन यत्र तत्प्रोक्तमपरैः सूरिभिः पदम् ।

यथा—तद्देहें तद्दें ततक्कद्दे । इत्युद्ग्राहः । तकट थिकट थिथिकिटथिकिटर्गाड्दगथिकतक थिकथोंगटें । इति ध्रुवः । गत कटथिथि कटथिक्गिडदगथिथिकट थिकिरडाडगथिगक्गिडाहगथोंटैं हंथिकथोंगटें । इति च्छण्डणः । इदमुदाहरणं वर्णताले ॥

इति पदम्

(सु०) कवितं लक्षयति—नातिदीर्घमिति । शुद्धपाटादिनिर्मितं वाद्यखण्डं वर्णसरेण वा निर्मितं द्विर्गेयम् । तेन तत्सदृशमेव खण्डं सकृद्गेयं भवेत् । एवमुद्ग्राहध्रुवौ गीत्वा उद्ग्राहसहितेऽन्त्यखण्डे उद्ग्राहे वा यस्मिन् मुक्तिः तत्कवितम् ॥ -९७१–९७४ ॥

इति कवितम् (५)

(क०) अथ पदं लक्षयति—**उद्ग्राहोऽल्प इत्यादि** । ध्रुवो नातिदीर्घ इत्यनेन ध्रुवस्योद्ग्राहापेक्षया द्विगुणदीर्घत्वं विवक्षितम् । ततोऽपि दीर्घत्वं निषिध्यते । शिष्टं स्पष्टम् । मतान्तरेण पदस्य लक्षणमाह—**वादयित्वेति** । **प्रबन्धस्य**; उक्तलक्षणस्य पदप्रबन्धस्य, **मध्ये**; उद्ग्राहध्रुवयोरन्तराले, उद्ग्राहात्परं ध्रुवात्पूर्वमित्यर्थः । **यतिं**; प्रथमोक्तं यतिप्रबन्धं वादयित्वा, पाटेन तत्पूर्वोक्तेषु हस्तपाटेषु येन केनचित्पाटेन विमुच्यते त्यज्यते यत्र तत्पदं प्रोक्तम् । उद्ग्राहध्रुवकाभ्यामिदं पदं द्विधातु ॥९७५–९७६-॥

(क०) तद्देहें तद्देमिति प्रस्तारः ॥

इति पदम् (६)

एकताल्यां द्रुते [1]माने नर्तनारम्भगोचरे ॥ १७७ ॥
समं च करटाटीपिकाहलावादने सति ।
अभ्यस्तो वाद्यखण्डोऽल्पः कूटैनैकेन निर्मितः ॥ १७८ ॥
तद्धीमिति च्छण्डणान्तः स्मृतो मेलापको बुधैः ।
विद्यावन्तः स्वसमये प्राहुर्मेलापनीमिमाम् ॥ १७९ ॥
वर्णानां टिरिकीत्येषामावृत्तिष्टीपिरुच्यते ।

यथा—थोंगटें गड्द्गं थोंगटें । इति यावत्प्रबन्धपूर्ति पुनः-पुनर्वादनीयम् । तद्धीमिति । इति च्छण्डणः, इति मेलापकः ।

इति मेलापकः

(सु०) पदं लक्षयति—उद्ग्राह इति । अल्प उद्ग्राहः, ध्रुवश्च नात्यन्तदीर्घः शुद्धपाटादिभिर्निर्मितः ; वर्णसरेण वा अन्ते छण्डणः तदा पदमित्युच्यते । मतान्तरेणान्यथा लक्षयति—वादयित्वेति प्रबन्धस्य पूर्वोक्तयतिं वादयित्वा पाटेन यत्र विमुक्तिः तत्पदम् ॥ १७५–१७६- ॥

इति पदम् (६)

(क०) अथ मेलापकं लक्षयति—**एकताल्यामिदि** । द्रुते माने नर्तनारम्भगोचरे नृत्तारम्भविषये । **समम्** ; एककालम् । **करटाटीपिकाहलावादने सतीति** । करटायाष्टीपिः करटाटीपिः, काहलाया वादनं काहलावादनं, तयोर्द्वन्द्वैकवचनम् । **कूटैनैकेनेति** । शुद्धखण्डाभ्यां विनेत्यर्थः । तद्धीमित्यनुकरणम् । तदात्मकश्छण्डणोऽन्ते यस्येति स तथोक्तः । **विद्यावन्तः** ; केवलं लक्ष्यप्रयोक्तारः । तानेव लोके 'विद्यावंतरु' इति कर्णाटा वदन्ति । **टिरिकीत्येषामावृत्तिरिति** । टिरिकि टिरिकि टिरिकि टिरिकि, इति टीपेः स्वरूपमुक्तम् ॥ -१७७–१७९- ॥

[1] ताळे इति सुधाकरपाठः

खण्डं शुद्धादिभिः पाटैर्बद्धं वर्णसरेण वा ॥ ९८० ॥
अल्पं कोमलनादं च सुकुमाराक्षरान्वितम् ।
अभ्यस्तं कोमले नृत्ते भवेदुपशमाभिधम् ॥ ९८१ ॥

यथा—टेंथोंक्रगे थोंटेटे थोंहटगे थाथें थेंटे ॥

इत्युपशमः

(क०) थोंगटें गड्दग्नमित्यादिः प्रस्तारः । अयं केवलं मेलापक-खण्डात्मकत्वादेकधातुकोऽवगन्तव्यः ॥

इति मेलापकः (७)

(सु०) मेलापकं लक्षयति—एकताल्यामिति । एकतालीसंज्ञके द्रुतलये ताले, नर्तनारम्भगोचरे ; नृत्तारम्भविषये सति, करटादिवादने च युगपत् विद्यमाने अल्पकूटपाटेन एकेन निर्मितः अभ्यस्तश्चेत, तद्धीमिति वर्णोऽन्ते यस्य, एवंविधः छण्डणश्चान्ते वाद्यते यस्य, स मेलापकः । वादकप्रसिध्या मेलापनीमिति। टिरिकि टिरिकीति वर्णानामावृत्तिवशात् टीपिरित्युच्यते॥-९७७–९७९-॥

इति मेलापकः (७)

(क०) अथोपशमं लक्षयति— खण्डं शुद्धादिभिरिति । आदिशब्देन कूटा गृह्यन्ते । स्पष्टमन्यत् ॥ -९८०, ९८१ ॥

(क०) टेंथोंकट इत्यादिः प्रस्तारः । अयमप्येकधातुकः ।

इत्युपशमः (८)

(सु०) उपशमं लक्षयति—खण्डमिति । खण्डे सति शुद्धादिभिः पाटैः वर्णसरेण वा उपनिबद्धं, सुकुमाराक्षरान्वितं कोमलनादं च यत्र कोमले नृत्ते अभ्यस्तं तदुपशमः ॥ -९८०, ९८१ ॥

इत्युपशमः (८)

आदौ वाद्यप्रबन्धानां शुद्धकूटादिनिर्मितः ।
यः खण्डो वाद्यते प्राहुरुद्ग्राहं तं महत्तमाः ॥ ९८२ ॥
उद्ग्राहोपशमादीनां यद्यप्यन्याङ्गतोदिता ।
यावत्पूरणमावृत्तेस्तथापि स्यात्प्रबन्धता ॥ ९८३ ॥
द्विरावृत्तिरनावृत्तिर्वा स्यादङ्गतया स्थितौ ।

यथा—तें टें है तट्टें तक्कतटे, इति यावत्प्रबन्धपूरणमभ्यासादुद्ग्राहः प्रबन्धः । अङ्गत्वं तु द्विः सकृद्वा । प्राक्प्रयोगस्त्वङ्गप्रबन्धयोस्तुल्यः ॥

इत्युद्ग्राहः

(क०) अथोद्ग्राहं लक्षयति— आदावित्यादि । शुद्धकूटादिनिर्मित इत्यादिशब्देन खण्डा गृह्यन्ते । महत्तमाः; अतिशयेन महान्त आचार्या इत्यर्थः । ननूद्ग्राहादीनां प्रबन्धावयवत्वेनोक्तानां कथं पृथक्प्रबन्धतेत्यत आह—उद्ग्राहोपशमादीनामित्यादि । अत्रादिशब्देन मेलापकच्छण्डणादयो गृह्यन्ते । अन्याङ्गता प्रबन्धान्तराङ्गभावो यद्यप्युदिता । तथापि यावत्पूरणमिति । यावतीभिरावृत्तिभिः प्रबन्धाकाङ्क्षाबुद्धिः पूर्यते तावदावृत्तेर्हेतोः प्रबन्धता स्यात् । अयमर्थः—उद्ग्राहद्यवयवेषु यत्रैक एव प्रबन्धत्वेनोच्यते तत्रेतरावयवस्थाने तमेव प्रयुज्य, अवयवित्वेन प्रबन्धः पूरणीय इति । अत एवोद्ग्राहोपशमादीनां प्रबन्धानामेकधातुकत्वदोषोऽपि निवर्तनीयः । एकधातुकत्वे ह्यप्रबन्धत्वदोषः प्रसज्यते । प्रबन्धानामनेकावयवत्वनियमात् । एकधातुकस्य तु तदभावात् । तत्रावृत्तिकृतानेकत्वाङ्गीकारे तु न स दोष इति सर्वं समञ्जसम् । यद्येवं प्रबन्धत्वस्यान्याङ्गत्वस्य च को भेदः ? इत्यत आह—द्विरावृत्तिरित्यादि । अङ्गतया स्थितौ, द्विरा-

उद्धतं ध्वनितं कूटबद्धं खण्डं मुहुर्मुहुः ॥ ९८४ ॥
प्रयुक्तं स्यात्प्रहरणं ध्रुवाद्याभोगगोचरे ।
नृत्ते प्रायः प्रयोक्तव्यमन्यत्रापीच्छया भवेत् ॥ ९८५ ॥

यथा—कथोंगक थोंगत्थोंगटथोंगक थोग थोगथोक् कथोगक् थोंकट थोगक्थोकटं थोगक् । गड्दक्काधिक थोंगक् । टगें दंथोंह । दिङ्गिकुकुधित्थो हधिकं धिटं इति पुनः पुनः प्रयोज्यम् । एकताल्यामिदमुदाहरणम् ॥

इति प्रहरणम्

वृत्तिः; द्विवारमावृत्तिः । अनावृत्तिः, सकृत्प्रयोगः । बहुधावृत्तौ प्रबन्धतैवेत्यर्थः ॥ ९८२–९८३- ॥

(क०) तेंटेहिं तट्टेमिति प्रस्तारः । प्राक्प्रयोगस्त्वङ्गप्रबन्धयोस्तुल्य इति । उद्ग्राहस्यान्याङ्गत्वे पृथक्प्रबन्धत्वे च प्राक्प्रयोगः समान एव । आवृत्तय एव भेदिका इत्यर्थः । अयमप्येकधातुः ॥

इत्युद्ग्राहः (९)

(सु०) उद्ग्राहं लक्षयति—आदाविति । शुद्धकूटपाटादिभिर्निर्मितः खण्डः वाद्यप्रबन्धानामादौ यो वाद्यते स उद्ग्राहः । उदंग्राहेति । उद्ग्राहोपशमादीनां यद्यप्यन्याङ्गत्वमुक्तं, तथापि प्रबन्धपूरणपर्यन्तमावृत्तौ कृतायां स्वतन्त्रप्रबन्धत्वं भवति । अङ्गत्वेन प्राधान्येन स्थितौ सत्यां द्विरावृत्तिः । अनावृत्तिर्वा; सकृत्प्रयोगः । बहुधावृत्तौ प्रबन्धतैवेत्यर्थः ॥ ९८२–९८३- ॥

इत्युद्ग्राहः (९)

(क०) अथ प्रहरणं लक्षयति—उद्धतमित्यादि । ध्वनितं; घोषयुक्तम् । कूटबद्धं; कूटैरेव बद्धम् । मुहुर्मुहुः प्रयुक्तं खण्डं प्रहरणं स्यात् ।

उद्ग्राहः स्यात्ततः खण्डं शुद्धकूटादिनिर्मितम् ।
तद्वर्णसरबद्धं वा प्रयुज्य द्विरिदं द्वयम् ॥ ९८६ ॥
ततः प्राक्खण्डसहितं तादृक्कूटमयं दलम् ।
वाद्यते छण्डणोऽन्ते च यत्र सोऽवत्सको भवेत् ॥ ९८७ ॥
प्रयोज्यं नर्तने दीप्ते शार्ङ्गदेवेन कीर्तितः ।

यथा—गद्दगदंदं गद्दकिथकट तकधिकट तकिथत्तक् । इत्युद्ग्राहः । खडि खडि खखनख खिदक् झेंखखनख खिदत्तदक धिक्ककककगिणनग थोंगदिहिकिं थोगदिहिकिनक धिकथोंगटे गडक् । तकधिक थोंगटें । इति द्वितीयं खण्डम् । एतच्च सहोद्ग्राहेण पुनः पुनर्वादयेत् । झक झखिखिन्नखनखखिन हूं खखनखझें खन खरिब तुडि हिदिहि । कथोंगक् । इति तृतीयखण्डं पूर्वखण्डेन सह वादयेत् । तकधिक तकरे घटथथोंगक थोंगकटें, इति च्छण्डणः । इदमुदाहरणं रङ्गविद्याधरताले ॥

इत्यवत्सकः

ध्रुवाद्याभोगगोचरे प्रायः प्रयोक्तव्यमिति । अयमर्थः—ध्रुवादिभिः समस्तावयवैः परिमितं यावन्नृत्तं तावति नृत्ते खण्डस्य मुहुरावृत्त्या प्रायेण प्रयोज्यमिति । अन्यत्रापीति । खण्डनृत्ते चेत्यर्थः ॥ -९८४–९८५ ॥

(क०) कथों गकथोमित्यादिः प्रस्तारः । इदमप्येकधातुकः ॥

इति प्रहरणम् (१०)

(सु०) प्रहरणं लक्षयति—उद्धतेति । उद्धतनादात् कूटपाटैर्बद्धं पुनः पुनर्गीयमानं प्रहरणमित्युच्यते ॥ -९८४, ९८९ ॥

इति प्रहरणम् (१०)

(क०) अथावत्सकं लक्षयति—उद्ग्राहः स्यादित्यादि । इदं

कूटादिबद्धः खण्डः स्याच्छण्डणो वाद्यमोक्षकः ॥ ९८८ ॥

यथा—गड्दग् टैंदर तकथों थोंहटें हलटहें घों२ तकथों तकथों घिकथों तत घिघि थों थों रघ टै टै थाः तथांटे ॥

इति च्छण्डणः

द्वयमिति । उद्ग्राहं द्वितीयखण्डं च द्विः प्रयुज्य, ततोऽनन्तरं, **प्राक्खण्ड-सहितं**; द्वितीयखण्डसहितं, **कूटमयं**; कूटाक्षरप्रचुरं तादृग्द्वितीयखण्डसदृशं दलं तृतीयखण्डं यत्र वाद्यते, अन्ते च च्छण्डणो वाद्यते सोऽवत्सको भवेत् ॥ ९८६, ९८७- ॥

(क०) गड्दग्दंदमित्यादिः प्रस्तारः । अयं त्रिधातुकः ।

इत्यवत्सकः (११)

(सु०) अवत्सकं लक्षयति—उद्ग्राह इति । पूर्वपूर्वलक्षित उद्ग्राहः, ततः शुद्धपाटादिनिबद्धं खण्डं वर्णसरनिबद्धं वा ज्ञेयमुद्ग्राहः । खण्डं च द्विः प्रयोक्तव्यम् । ततः पूर्वं खण्डसहितं तादृशैः पाटै रचितं द्विर्वादयित्वा, अन्ते च छण्डणो गीयते यत्र सोऽवत्सकः ॥ ९८६, ९८७- ॥

इत्यवत्सकः (११)

(क०) अथ च्छण्डणं लक्षयति—**कूटादिबद्धः खण्ड इत्यादि** । **वाद्यमोक्षक इति** । वाद्यस्य वाद्यप्रबन्धस्य मोक्षकोऽवसानकारकः । इदमन्याङ्गत्वे । पृथक्प्रबन्धत्वे तूद्ग्राहोक्तो न्यायो द्रष्टव्यः । अत्र द्वयोरप्यन्तप्रयोक्तव्यः समानः -९८८ ॥

(क०) गड्दग्टेमित्यादिः प्रस्तारः । अयमप्येकधातुकः ॥

इति च्छण्डणः (१२)

शुद्धकूटादिभिर्बद्धः खण्डो वर्णसरेण वा ।
अभ्यस्तः स्याद् द्रुते माने तुडुका दीप्तनर्तने ॥ ९८९ ॥
द्रुताद् द्रुततरं मानमत्र लक्ष्येषु दृश्यते ।
उद्ग्राहध्रुवकाभोगे यत्रान्यतमखण्डकम् ॥ ९९० ॥
वादनीयं परे प्राहुरन्ये तु तुडुकां जगुः ।
उद्ग्राहध्रुवकाभोगोद्ग्राहाणां वादनं क्रमात् ॥ ९९१ ॥

यथा—टें देंदगि तथोंगटेंधिकतः रघटे हे कथीः टेगेधिक तटथोंगः गण नगिः थोंगतक धिकथोंगटें, एकताल्यामिदमुदाहरणम् ॥

इति तुडुका

(सु०) छण्डणं लक्षयति—कूटादीति । कूटपाटादिनिबद्धः खण्डः छण्डणः ॥ -९८८ ॥

इति च्छण्डणः (१२)

(क०) अथ तुडुकां लक्षयति—शुद्धकूटादिभिरित्यादि । द्रुते माने दीप्तनर्तनेऽभ्यस्तखण्डस्तुडुका स्यात् । अत्र तुडुकायां—लक्ष्येषु द्रुताद्द्रुततरं मानं दृश्यत इति । देशीत्वेनानियमादिति भावः । अस्या एव मतान्तरेण लक्षणान्तरमाह—उद्ग्राहेत्यादि । परे; आचार्याः, अत्र तुडुकायामुद्ग्राहध्रुवकाभोगेष्वन्यतमं खण्डकं वादनीयं प्राहुः । तदेयं द्विधातुका । पुनरपि मतान्तरेण लक्षणान्तरमाह—अन्ये त्विति । अन्ये; आचार्यास्तु उद्ग्राहध्रुवकाभोगे उद्ग्राहाणां क्रमाद्वादनं तुडुकां जगुः । तदानीमियं त्रिधातुका भवति ॥ ९८९–९९१ ॥

(क०) टेंददंगितेत्यादिः प्रस्तारः । अस्मिन्पक्ष इयमेकधातुका ॥

इति तुडुका (१३)

यत्र शुद्धादिभिर्बद्धः खण्डो वर्णसरेण वा ।
वितालः स्याद् द्रुतलयः पर्यन्ते तु विलम्बितः ॥ ९९२ ॥
दीप्तैर्वर्णैः क्वचित्क्वापि कोमलैश्चारुगुम्फितः ।
यत्रासौ मलपः प्रोक्तः प्रायिको दीप्तनर्तने ॥ ९९३ ॥
यत्रोद्ग्राहः सकृद् द्विर्वा ध्रुवकोऽथ सकृद्भवेत् ।
व्यापकाक्षरमिश्रैस्तद्धिथोंटेंदेंभिरक्षरैः ॥ ९९४ ॥
बद्धं निरन्तरयतिं प्राहुस्तं मलपं परे ।

यथा—गड्दक् तद्धित्थों हथोंहरे घैं गगनगतक धिक्क थौं हटें हैं थोदगक् । तक्क तहधिक थोकथोहक थो२ हट्टै डिं खिखरखिखिखेरथटैं हैं थोहगक् । दिहं कटदहं कटगड्द गथरिकटं२ थरिकटतक२ ततक धिधिक थोऽथोंदटें । इदमुदाहरणं मुद्रित-मण्ठताले ॥

इति मलपः

(सु०) तुडुकां लक्षयति—शुद्धेति । शुद्धपाटकूटादिभिः वर्णसरेण वा निबद्धः खण्डः अभ्यस्तः तुडुकेत्युच्यते । उद्ग्राहेति । केचिदेतस्यामुद्ग्राहादिषु अन्यतमं खण्डं वादनीयमित्याहुः । अन्ये तु उद्ग्राहादीनां चतुर्णां क्रमेण वादनात् तुडुकेत्याहुः ॥ ९८९–९९१ ॥

इति तुडुका (१३)

(क०) अथ मलपं लक्षयति—**यत्र शुद्धादिभिरित्यादि** । यत्र मलपे शुद्धादिभिर्वर्णसरेण वा बद्धः खण्डः । **द्रुतलयः सन्विशालः स्यादिति** । खण्ड आदित आरभ्य भागत्रये द्रुतलयः प्रयोक्तव्य इत्यर्थः । **पर्यन्ते तु विलम्बित इति** । चतुर्थभागे विलम्बितलयः प्रयोक्तव्य इत्यर्थः । मतान्तरेण लक्षणान्तरमाह—**यत्रोद्ग्राह इत्यादि** । **व्यापकाक्षरमिश्रैरिति** ।

**सोदाहरणलक्ष्माणि बालबोधार्थमभ्यधाम् ॥ ९९५ ॥**
**लक्ष्ममात्रमथो वक्ष्ये विस्तरत्रस्तमानसः ।**
**मलपाङ्गं तु मलपेनाङ्गेन मलपेन च ॥ ९९६ ॥**

इति मलपाङ्गम्

व्यापकाक्षराणि कादीनि षोडश, तैर्मिश्राणि कूटाक्षराणि तद्धिथों टें दें, इत्यक्षराणि मर्दलप्रतिनियतत्वेन शुद्धानि, तैर्बद्धम्। निरन्तरयतिमविलम्बित-विच्छेदं मलपं तं परे प्राहुः। अस्मिन् पक्षे द्विधातुकोऽयम् ॥९९२–९९४-॥

(क०) गड्दग् तद्धिथों, इत्यादि प्रस्तारः। अस्मिन्पक्षेऽयमेक-धातुकः ॥

इति मलपः (१४)

(सु०) मलपं लक्षयति—यत्रेति। शुद्धपाटादिभिर्वर्णसरेण वा निबद्धः, वितालः, तालशून्यः, द्रुतलयः प्रान्ते विलम्बितलयान्वितः दीप्तादिवर्णयुक्तः खण्डो यत्र स मलपः। मतान्तरेणान्यथा लक्षयति—यत्रेति। उद्ग्राहः सकृद् द्विर्वा गेयः। ध्रुवः सकृत् वक्ष्यमाणव्यापकाक्षरमिश्रैः तद्धिथोंटेंदेमित्येतैरक्षरैः निबद्धं निरन्तरयतियुक्तं मलपं परे प्राहुः ॥ ९९२–९९४- ॥

इति मलपः (१४)

(क०) अथ मलपाङ्गादीनां संक्षेपेण लक्षणमात्रमेव वक्तुमाह—**सोदाहरणेति**। तत्र मलपाङ्गं लक्षयति--**मलपाङ्गं त्विति**। अङ्गेन मलपेन। पुनरपि मलपेन चेत्यनेनाङ्गिना मलपेन चेति गम्यते। मलप एवाङ्गत्वेनाङ्गित्वेन च प्रयुज्यते चेन्मलपाङ्गं नाम प्रबन्धो भवतीत्यर्थः। ॥ -९९५, ९९६ ॥

इति मलपाङ्गम् (१५)

पाटैर्मलपपाटः स्याद्विषमैर्मलपोपमः ।

इति मलपपाटः

द्रुतैः करतलाघातैर्विकृतैर्यत्र वाद्यते ॥ ९९७ ॥
वाद्यं विच्छिद्य विच्छिद्य च्छेदमिच्छन्ति तं बुधाः ।

इति च्छेदः

(सु०) एवं मुग्धपरिज्ञानार्थं सदृष्टान्तान् भेदानुक्त्वा दृष्टान्तादीनवशिष्टभेदान् लक्षयति—मलपाङ्गमिति । अङ्गभूतेन मलपेन मुख्येन च मलपेन युक्तं मलपाङ्गम् ॥ -९९५, ९९६ ॥

इति मलपाङ्गम् (१५)

(क०) विषमैः पाटैः कृतो मलपोपमः मलपसदृशो मलपपाटः स्यात ॥ ९९६- ॥

इति मलपपाटः (१६)

(सु०) पाटैरिति । विषमैः पाटैः मलपवदुपनिबद्धयमानो मलपपाटः ॥ ९९६- ॥

इति मलपपाटः (१६)

(क०) अथ च्छेदः—**विकृतैरिति** । द्रुतस्यात्र प्रकृतत्वान्मध्यविलम्बिता विकृता उच्यन्ते ॥ -९९७, ९९७- ॥

इति च्छेदः (१७)

(सु०) द्रुतैरिति । करतलस्य आघातैः, द्रुतैः विकृतैश्च यत्र वाद्यं वाद्यते स च्छेदः ॥ -९९७, ९९७- ॥

इति च्छेदः (१७)

57

ओतां कृत्वा द्विरुद्ग्राहः सकृद्वा व्यापकाक्षरैः ॥ ९९८ ॥
सपाटैर्विहितो यत्र प्रान्ते रचितदेंकृतिः ।
मध्ये लये छण्डणः स्याद्रूपकं तन्निरूपितम् ॥ ९९९ ॥

इति रूपकम्

निबद्धो वादितो गीतवाद्यसंधौ मतोऽन्तरः ।

इत्यन्तरः

अन्तरं वादयित्वा चेदनिबद्धस्य वादनम् ॥ १००० ॥
क्रियतेऽन्तरपाटः स्यात्तदा निःशङ्कसंमतः ।

इत्यन्तरपाटः

समाश्लिष्टघनश्लक्ष्णपाटवर्णविनिर्मितः ॥ १००१ ॥
हस्तलाघवसंपन्नः खोजः संजल्पितो बुधैः ।

इति खोजः

(क०) इतः परं रूपकादीनां लक्षणानि ग्रन्थत एव सुबोधानि ॥ -९९८–१०१६- ॥

(सु०) इदानीं रूपकादीनां लक्षणं वक्तुमाह—ओतामिति । पूर्वोक्तामोतां कृत्वा यत्रोद्ग्राहः व्यापकाक्षरैः पाटसहितैः कृतः, इति रूपकम् ; अन्ते च देंकारेण युक्तः सकृत् द्विर्वा गेयः मध्यलये च छण्डणः, तद्रूपकम् (१) ; निबद्धमिति । पाटतः पाटैर्गीत्वा, गीतवाद्यसंधिगतः निबद्धोऽन्तरः, इत्यन्तरः (२) ; अन्तरमिति । अन्तरवादनानन्तरम्, अनिबद्धस्यवादनं क्रियते चेत् तदन्तरपाटः, इत्यन्तरपाटः (३) ; समेति । समैः समानैः श्लिष्टैः घनैः निबिडैः श्लक्ष्णैः मसृणैः पाटवर्णैर्निबद्धः हस्तलाघवसंयुक्तेन वाद्यमानो खोजः, इति खोजः (४) ;

कृत्वा खण्डं पाटबद्धं यतिवद्वादनं भवेत् ॥ १००२ ॥
एवमावृत्तिकरणादाहुः खण्डयतिं बुधाः ।

इति खण्डयतिः

खण्डच्छेदसमायोगात्खण्डच्छेदप्रबन्धयोः ॥ १००३ ॥
छेदैर्व्यक्तैः समायुक्तं खण्डच्छेदं परे जगुः ।

इति खण्डच्छेदः

यस्यां विरतिरन्ते च तालस्य व्यापकाक्षरैः ॥ १००४ ॥
सपाटैर्बद्धखण्डा या साख्यातावयतिर्बुधैः ।

इत्यवयतिः

पाटस्य खण्डनाद्वाद्ये खण्डपाटोऽभिधीयते ॥ १००५ ॥

इति खण्डपाटः

खण्डः स्यात्खण्डमध्येऽपि खण्डशो वादने सति ।

इति खण्डकः

स्रोतोगताख्यया यत्या खण्डहुल्लोऽभिधीयते ॥ १००६ ॥

इति खण्डहुल्लः

कृत्वेति । पाटनिबद्धं खण्डं कृत्वा पूर्वोक्तयतिवद् वादनं यत्र भवति । एतदावृत्तौ खण्डयतिः, इति खण्डयतिः (५); खण्डच्छेदयोः संयोगात् खण्डच्छेदः । अन्ये तु च्छेदैरवयवपाटैः व्यक्तैश्च युक्तममुं विदुः, इति खण्डच्छेदः (६) यस्यामिति । अन्ते तालस्य विरतिः, सपाटैः पाटसहितैः व्यापकाक्षरैः उपनिबद्धा च सा अवयतिः, इत्यवयतिः (७); वाद्ये पाटस्य खण्डनात् खण्डपाटः, इति खण्डपाटः (८); खण्डमध्ये खण्डशः अवयवशः वादने क्रियमाणे खण्डकः, इति खण्डकः (९); तस्मिन्नेव खण्डके स्रोतोगताख्यया

गीतनृत्तसमो माने प्रबन्धः प्रोच्यते समः ।

इति समः

निष्पन्नः केवलैः पाटैः पाट इत्यभिधीयते ॥ १००७ ॥

इति पाटः

ध्रुवको भूरिवाद्येषु स्यादावृत्तोऽन्तरेऽन्तरे ।

इति ध्रुवकः

अङ्गमङ्गीकृतं सान्द्रैरपाटैर्व्यापकाक्षरैः ॥ १००८ ॥

इत्यङ्गम्

द्विरुद्ग्राहो ध्रुवाभोगं ध्रुवाख्यः क्रमशस्ततः ।
यत्राङ्गरूपकं प्राह तत्तेजोन्वयदीपकम् ॥ १००९ ॥

इत्यङ्गरूपकम्

तालश्चतुःषष्टिकलो युग्मे मार्गे च दक्षिणे ।

इति तालः

यत्या वादने क्रियमाणे खण्डहुल्लः, इति खण्डहुल्लः (९); गीतेति । माने प्रमाणे गीते नृत्ते च समौ सम इत्युच्यते, इति समः (१०); निष्पन्न इति । केवलैः पाटैः गीतवाद्यसंधिगतो निष्पन्नः पाट इत्युच्यते, इति पाटः (११); ध्रुवक इति । अनेकवाद्येषु मध्ये मध्ये आवृत्तो ध्रुवकः, इति ध्रुवकः (१२); पाटहीनैः व्यापकाक्षरैः अङ्गसहितैरुपनिबद्धमङ्गं भवति, इत्यङ्गम् (१३); द्विरिति । उद्ग्राहो द्विर्गेयः, ततोऽनन्तरं ध्रुवाभोगं ध्रुवाक्रमेण बद्धं सकृद्गीयते तदङ्गरूपकमिति, इत्यङ्गरूपकम् (१४); युग्मे चच्चत्पुटे दक्षिणमार्गे चतुःषष्टिकलाभिर्यो गीयते स तालः, इति तालः (१५); आदिमध्यावसानेषु

वितालस्त्वादिमध्यान्तविकृतस्ताल इष्यते ॥ १०१० ॥

इति वितालः

हस्तेन विततांङ्गुष्ठविरलाङ्गुलिना क्रमात् ।
पताकेन हतैर्जातैः पाटैः स्यात्खलकाभिधः ॥ १०११ ॥

इति खलकः

समुदायो निजैः पाटैः समस्तातोद्यवादनात् ।

इति समुदायः

पाटानां पृथगुक्तानां मिश्रणाज्जोडणी मता ॥ १०१२ ॥

इति जोडणी

उडवः सलयात्तालाद् द्वितालाच्च लयोज्झितात् ।

इत्युडवः

तलपाटस्तु मलपोन्मिश्रपाटपबन्धजः ॥ १०१३ ॥

इति तलपाटः

निजैर्या तद्विथोंदेभिर्व्यापकैरक्षरैस्तथा ।

विकारं प्राप्तः ताल एव विताल इत्युच्यते, इति वितालः (१६); हस्तेनेति । विततोऽङ्गुष्ठः, विरलाश्चाङ्गुलयो यस्मिन्, एवंविधेन वक्ष्यमाणपताकाख्य-हस्तेन कृताघातैर्जातैः पाटैस्तु खलकः, इति खलकः (१७); समुदायेति । निजैः सहजैः पाटैः समस्तवाद्यवादनात् समुदायः, इति समुदायः (१८); पृथ-गुक्तानां पाटानां मिश्रीकरणे जोडणी, इति जोडणी (१९); पूर्वोक्ततालसहितात् लयप्रबन्धात् वितालप्रबन्धाच्च लयहीनात् कृताद्धेतोः उडवः, इत्युडवः (२०); पूर्वोक्ततलप्रबन्धमिश्रितपाटप्रबन्धादुत्पन्नस्तलपाटः, इति तलपाटः (२१);

पाटैर्वा रचिता किंचिद्विलम्बितलयाश्रया ॥ १०१४ ॥
देंकारालंकृताद्यन्ता वदन्त्युद्दवणीममूम् ।

इत्युद्दवणी

वाद्यैकदेशं वर्गान्तमयं वाद्यादिमध्ययोः ॥ १०१५ ॥
वादयेल्लघुहस्तत्वाद्यं तमाख्याति तुण्डकम् ।

इति तुण्डकः

पाटैरेव यतिः सान्द्रैः प्राङ्गलैरङ्गपाटकः ॥ १०१६ ॥

इत्यङ्गपाटकः

खण्डः स्यात्पृथगातोद्यवाद्यैः पैसारसंज्ञकः ।

इति पैसारः

इति त्रिचत्वारिंशद्वाद्यप्रबन्धाः ।

प्रदर्शनार्थमित्युक्ताः प्रबन्धाः कतिचिन्मया ॥ १०१७ ॥

निजैरिति । स्वोत्पन्नैः तद्धिर्थोंदेमित्यादिभिर्वर्णैः व्यापकाक्षरैः पाटैर्वा रचिता विलम्बितलययुक्ता आदावन्ते च देंकारेणालंकृता उद्दवणी, इत्युद्दवणी (२२); वाद्येति । वाद्यस्य आदौ मध्ये च वादकः वर्गान्तमयं लयवाद्यैकदेशे वादकं हस्तलाघवेन यं वादयेत्, तं तुण्डकमिति शार्ङ्गदेव आख्याति, इति तुण्डकः (२३); पाटैरिति । अङ्गसहितैः निबिडैः पाटैरुपनिबद्धा पूर्वोक्तयतिरेव अङ्गपाटकः, इत्यङ्गपाटकः (२४); आतोद्यवादितैः खण्डैः पाटैः पैसारः, इति पैसारः (२९) एवं त्रिचत्वारिंशद्वाद्यप्रबन्धाः ॥ -९९८–१०१६- ॥

इति पैसारः

इति त्रिचत्वारिंशद्वाद्यप्रबन्धाः ।

(क०) उक्तरीत्यान्येऽपि प्रबन्धाः कल्पयितुं शक्या इत्याह—प्रदर्शनार्थमित्यादि । पटहोक्तान् हस्तपाटादीन् यथायोगं मर्दलादिष्वतिदि-

अन्यानपि पथानेन विदांकुर्वन्तु तद्विदः ।
पाटभेदाश्च वाद्यानि प्रबन्धा वाद्यसंश्रयाः ॥ १०१८ ॥
यथायोगं मर्दलादिसर्ववाद्येष्विमे मताः ।

इति वाद्यप्रबन्धलक्षणम्

निर्दोषबीजवृक्षोत्थः पिण्डेऽर्धाङ्गुलसंमितः ॥ १०१९ ॥
एकविंशत्यङ्गुलः स्याद्दैर्घ्ये वामे मुखे पुनः ।
चतुर्दशाङ्गुलानि स्युर्दक्षिणे तु त्रयोदश ॥ १०२० ॥
मानं यस्य मनाङ्मध्यः पृथुरेकाङ्गुलाधिके ।
वक्त्राभ्यां चर्मणी वृत्ते घने ये प्रान्तयोस्तयोः ॥ १०२१ ॥
चत्वारिंशत्पृथग्रन्ध्राण्यङ्गुलान्तरवन्ति च ।
वध्रे तद्रन्ध्रविन्यस्ते सीवनप्रक्रियावति ॥ १०२२ ॥
प्रोतोर्ध्वाधःस्थिता दृष्टोदरपृष्ठा च विध्रिका ।

शति—**पाटभेदाश्चेत्यादि** । पाटभेदा नागबन्धादयोऽष्टाशीतिर्हस्तपाटाः । वाद्यानि बोल्लावणीप्रभृतीनि पञ्चविंशतिः । वाद्यसंश्रयाः प्रबन्धा यत्यादयस्त्रिचत्वारिंशत् ॥ -१०१७–१०१८- ॥

इति वाद्यप्रबन्धलक्षणम्

(सु०) एवमुक्तप्रकारेणान्यानपि प्रबन्धान् अनेनैव दिशोहनीया इत्याह—**प्रदर्शनार्थमिति** । अतिदेशमाह—**पाटभेदाश्चेति** । नागबन्धादयः पाटभेदा अष्टाशीतिः, बोल्लावणीप्रभृतीनि वाद्यानि पञ्चविंशतिः, यत्यादयो वाद्यसंश्रयाः प्रबन्धास्त्रिचत्वारिंशत् ॥ -१०१७–१०१८- ॥

इति वाद्यप्रबन्धलक्षणम्

(क०) अथ मर्दलं लक्षयति—**निर्दोषेत्यादि** । स्पष्टोऽर्थः ।

क्रियते वेष्टयते मध्ये त्रिभिर्बन्धैर्दृढं तथा ॥ १०२३ ॥
कार्यो गोमूत्रिकाबन्धस्तत्र वध्रद्वयेन च ।
तथा यथा पिनद्धास्ये भवेतां चर्मणी दृढे ॥ १०२४ ॥
कुण्डल्योः प्रान्तयोर्वामकुण्डल्यां संनिवेश्य च ।
कच्छां क्षिप्त्वा दक्षिणस्यां कृष्ट्वा द्विगुणतां नयेत् ॥ १०२५ ॥
साश्वलद्वितयां पट्टमयीमष्टाङ्गुलायताम् ।
यद्वान्यवस्त्रजां शोभानुगां न्यस्येत्कटीतटे ॥ १०२६ ॥
निगदन्ति मृदङ्गं तं मर्दलं मुरजं तथा ।
प्रोक्तं मृदङ्गशब्देन मुनिना पुष्करत्रयम् ॥ १०२७ ॥
अत्यन्ताव्यवहार्यत्वान्निःशङ्को न तनोति तत् ।
भूतिमिश्रेण भक्तेन चिक्कणेनातिमर्दनात् ॥ १०२८ ॥
पिण्डिकां पूरिकाकारां वामवक्त्रे निवेशयेत् ।
बोहणाख्येन तेनास्यं लिम्पेदल्पेन दक्षिणम् ॥ १०२९ ॥
एवं जलधरध्वानगम्भीरो भवति ध्वनिः ।
निःशङ्केनात्र च प्रोक्तो देवता नन्दिकेश्वरः ॥ १०३० ॥
रक्तचन्दनजो यद्वा खादिरोऽन्यैरयं मतः ।
त्रिंशदङ्गुलदैर्घ्यश्च पिण्डे त्वङ्गुलसंमितः ॥ १०३१ ॥
एतस्य वामं वदनं द्वादशाङ्गुलसंमितम् ।
दक्षिणं तु मितं सार्धैरेकादशभिरङ्गुलैः ॥ १०३२ ॥
पाटाश्च तद्धिथोटेंहेंनंदेमित्यत्र कीर्तिताः ।

पाटाश्च तद्धिथोंटेंहेंनंदेमित्यत्र कीर्तिता इति । अत्र मर्दलस्य दक्षिणवक्त्रे तद्धिथोंटेंहेंनंदेमिति सप्त वर्णाश्च पाटाः कीर्तिताः ।

तटह्वा दधलाश्चेति पाटानन्यत्र मन्वते ॥ १०३३ ॥
इह स्युः पटहोक्ताश्च वर्णाः षोडश कादयः ।
अधिकान्भञ्जमान्वर्णान्वर्णयन्त्यपरे त्विह ॥ १०३४ ॥
तेषु तद्धयादयः सप्त केवलाः शुद्धसंज्ञकाः ।
सस्वरैरस्वरैर्युक्तैरयुक्तैर्वा कखादिभिः ॥ १०३५ ॥
व्यापकाख्यैः षोडशभिर्मिश्रास्ते कूटसंज्ञकाः ।
कूटमिश्रास्तु ते शुद्धा बुधैः खण्डाभिधा मताः ॥ १०३६ ॥
छन्दसा भूरिहृद्येन स्फूर्तिमूर्तिरुदारधीः ।

**तटह्वा दधलाश्चेति पाटानन्यत्र मन्वत इति** । अन्यत्र मर्दलस्य वामवक्त्रे तटह्वा दधलाश्चेति षड्वर्णान् पाटान् मन्वते । **इह स्युरिति** । इह मर्दले पटहोक्ताः षोडश कादयो वर्णाश्च स्युः । अपरे ; आचार्यास्त्विह मर्दले भञ्जमान् वर्णानधिकान् वर्णयन्तीत्येवं मिलित्वा मर्दले द्वात्रिंशत्पाटा भवन्ति । अत्र केषांचिदेकरूपत्वेऽपि पृथक्प्रयत्नसाध्यत्वात्पृथग्वर्णत्वमवगन्तव्यम् । **तेष्वित्यादि** । तेषु द्वात्रिंशद्वर्णेषु तद्धयादयः सप्त तद्धितोटेंहेंनंदेमित्येते वर्णाः केवला वर्णान्तरैरमिश्राश्चेच्छुद्धसंज्ञका भवन्ति । कूटानां वर्णानां स्वरूपं दर्शयति—**सस्वरैरित्यादि** । तैः शुद्धा एव सस्वरादयः शब्दाः पूर्वमेव व्याख्याताः । तादृग्भूतैः व्यापकाख्यैः सकलवाद्यसाधारण्येन व्यापकसंज्ञैः कखादिभिः षोडशभिः वर्णैर्मिश्रिताश्चेत्तदा कूटसंज्ञका भवन्ति । खण्डानां स्वरूपं दर्शयति—**कूटमिश्रास्त्विति** ते शुद्धाः तद्धयादयः सप्त वर्णाः । अत्र तुशब्दश्चेदर्थे । कूटमिश्राश्चेदित्यर्थः । तदा खण्डाभिधा मताः । अथ श्लोकदृष्टान्तपूर्वकं वाद्यप्रबन्धनिर्माणप्रकारमाह—**छन्दसेत्यादि** । **स्फूर्तिमूर्तिरिति** । स्फूर्तिः प्रतिभा, सैव मूर्तिर्यस्येति स तथोक्तः । उदारधीः ; अविकलबुद्धिः कविर्यथा श्रवणोत्सवदैः पदैः श्लोकं

कविः कवयति श्लोकं श्रवणोत्सवदैः पदैः ॥ १०३७ ॥
यथा तथा कचित्तालैर्वर्णत्रयमनोहरान् ।
विधाय वादको वाद्यप्रबन्धान्बन्द्धुमर्हति ॥ १०३८ ॥
इमं कवितकाराख्यं वादकं ब्रुवते जनाः ।

इति मर्दललक्षणम्

कवयति तथा तादृशो वादकः। कचित्तालैरित्यनेनान्यत्र तालेनापरत्र तालाभ्यां वा निबद्धान्, वर्णत्रयमनोहरान्; वर्णानां शुद्धानां कूटानां खण्डानां च त्रयं वर्णत्रयम् । यथाशोभं ग्रथितैः शुद्धादिभिस्त्रिविधैर्वर्णैः, मनोहरान् विधाय वाद्यप्रबन्धान् बहून् ग्रथितुमर्हति योग्यो भवति। जनाः; भाण्डिकजनाः। इमं प्रबन्धनिबन्धारं वादकं कवितकाराख्यं कवितकार इत्याख्या यस्येति स तथोक्तस्तं ब्रुवते ॥ -१०१९–१०३८- ॥

इति मर्दलक्षणम्

(सु०) अथ मर्दलं लक्षयति— निर्दोष इति। व्रणभेदादिदोषहीनात् बीजकवृक्षात् जातः अर्धाङ्गुलप्रमाणः पिण्डः, मध्यविवरं विना काष्ठप्रमाण-मेकविंशत्यङ्गुलं दैर्घ्यं, वाममुखं च चतुर्दशाङ्गुलं, दक्षिणे तु त्रयोदश, मध्यः; मध्यप्रदेशः, पृथुः; स्थूलः, मुखाभ्यामेकाङ्गुलेनाधिकः, द्वयोः प्रान्तयोः वृत्ते वर्तुले घने निविडे द्वे चर्मणी, तयोः चर्मणोः प्रत्येकमङ्गुलान्तराणि चत्वारिंशद्रन्ध्राणि कार्याणि। वध्र इति। सीवनप्रक्रियायुक्ते तयोश्चर्मणोः रन्ध्रेषु विन्यस्ते वध्रे प्रोता ऊर्ध्वमधश्च स्थिता दृष्टमुदरं पृष्ठं च यस्याः, एवंविधा विघ्निका यत्र क्रियते, "विघ्निका वाद्यशास्त्रेऽस्मिन् कर्परा परिकीर्तिता" इति। सा च विघ्निका त्रिभिर्वध्रैः बद्धे सति, दृढवेष्टिते कार्या इति। तत्र तस्मिन् प्रदेशे द्वाभ्यां बद्धाभ्यां गोमूत्रिका कार्या, गोमूत्रिकाकारेण रचनाविशेषेण वध्रे च कार्य इत्यर्थः। तथा कार्ये यथा द्वे आच्छादितमुखे चर्मणी दृढे स्याताम्। प्रान्तयोरिति। प्रान्ते वर्तमाने कुण्डलिद्वयमध्ये वामकुण्डल्यां कच्छां

**चतुर्विधो मार्दलिको वादको मुखरी तथा ॥ १०३९ ॥**
**ततः प्रतिमुखर्याख्यस्तुर्यो गीतानुगो मतः ।**

चिपिटरज्जुं निवेश्य दक्षिणकुण्डल्यां निक्षिप्य आकृष्य द्विगुणां कुर्यात् । कथंभूतां कच्छाम्? अञ्चलद्वयेन युक्तां पट्टसूत्रकृताम् अष्टाङ्गुलामन्यवस्त्रजातां शोभानुगां कटिप्रदेशे न्यस्येत् स्थापयेत् । एवंविधलक्षणयुक्तं मृदङ्गमाहुः । तस्यैव पर्यायौ मर्दलमुरजाविति । प्रोक्तमिति । मुनिना भरतेन पुष्करत्रयमुक्तम् । तदत्यन्तं लोकव्यवहाराभावात् शार्ङ्गदेवो न व्यतिस्तरत् । भूतीति । भूतिः काष्ठभस्म, तन्मिश्रितेन ओदनेन चिक्कणेन स्निग्धेन संमर्द्य पिण्डिकां गोलकीं कृत्वा पूरिका गुडमिश्रः, पूला इति महाराष्ट्रे प्रसिद्धः, तदाकारां पिण्डिकां मर्दलस्य वामे मुखे निवेशयेत् । भूतिमिश्रस्यौदनस्य बोहणमिति संज्ञा । तेन दक्षिणमुखं स्वल्पमेव लिम्पेत् । एवं बोहणलिप्ते गम्भीरो ध्वनिर्भवति । अत्र देवता च नन्दिकेश्वरः ॥

मतान्तरमाह—खादिरेति । अयं मर्दलः अन्यैराचार्यैं रक्तचन्दनकाष्ठेन खदिरकाष्ठेन वा जातः संमतः । त्रिंशदङ्गुलानि दैर्घ्यम्, अङ्गुलप्रमाणः पिण्डः, वाममुखं द्वादशाङ्गुलम्, दक्षिणं सार्धैकादशाङ्गुलम् । पाटानाह—पाटा इति । तद्धिथोंटेहेंनेंदेमित्येते पाटाः । अन्ये तु तटह्वा दघलाश्चेत्येते पाटा इत्याहुः । पाटप्रोक्ताश्च षोडश कवर्गादयः भज्ञमानपि अत्राधिकाः पाटवर्णा इति केचिदाहुः । पाटानां संज्ञाविशेषमाह—तेष्विति । तद्धयादयः सप्त केवलाः शुद्धपाटाः, सस्वरैः स्वरयुक्तैः, अस्वरैः, स्वरहीनैर्वा समस्तैः व्यस्तैर्वा व्यापकसंज्ञैः कखादिभिः षोडशभिर्वर्णैः मिश्राः पाटाः कूटसंज्ञकाः पाटाः । कूटमिश्राः शुद्धास्तु खण्डपाटा इत्युच्यन्ते । छन्दसेति । रमणीयेन छन्दसा प्रतिभावान् कविः यथा श्रवणयोरुत्सवदायकैः पदैः श्लोकं रचयति, तथा वादकः शुद्धकूटादिवर्णत्रयमनोहरान् बन्धान् बन्द्धुं रचयितुमर्हति ॥-१०१९–१०३८-॥

इति मर्दललक्षणम्

(क०) अथ मार्दलिकभेदानाह—चतुर्विध इत्यादि । जल्पवि-

वादको वादकर्ता स्याद्वादः पक्षपरिग्रहः ॥ १०४० ॥
स्वपक्षसाधनं तद्वत्परपक्षस्य दूषणम् ।
येऽन्ये जल्पवितण्डाद्या वादभेदाः सलक्षणाः ॥ १०४१ ॥
न तान्ब्रवीम्यहं ग्रन्थप्रपञ्चभयभङ्गुरः ।
वादे च वादनं कार्यं प्रथमं त्राटनाभिधम् ॥ १०४२ ॥
मर्दले तालरहिते बोहणेन विना ध्वनिः ।
यो देहडगित्यादि कृतोऽसौ त्राटनं मतम् ॥ १०४३ ॥
वोडवाडं घनरवं हस्तावत्यैर्थमाचरेत् ।
मुक्तशब्दात्मकं देहदडादप्रमुखं ततः ॥ १०४४ ॥
उधारं स्थापनं पश्चाद्वादयेत्तदथोच्यते ।
मुखयोर्बोहणं दत्वा वादयेद्वाममाननम् ॥ १०४५ ॥

तण्डाद्या इति तर्कशास्त्रोक्तलक्षणा वादभेदा द्रष्टव्याः । **त्राटनाभिधमिति** । त्राटनमित्यभिधा यस्य तत्तथोक्तम् । त्राटनस्य स्वरूपमाह—**मर्दल इत्यादि** । देहडगित्यादिरीत्याद्यनुकरणे वर्णोच्चारणम् । आदिशब्देनान्येऽप्यनुकरणयोग्या वर्णा ग्राह्याः । एवं कृतोऽसौ देहडगित्यादि ध्वनिस्त्राटनं मतमिति संबन्धः । **वोडवाडमिति** । हस्तावर्त्यर्थमिति बोडवाडप्रयोजनकथनेन हस्तजाड्यापनयनाय क्रियमाणां निरन्तराङ्गुष्ठकनिष्ठिकाहतिमद्धस्ताभ्यां वादनं वोडवाडमिति तत्स्वरूपमुन्नेयम् । ततोऽनन्तरं मुक्तशब्दात्मकं सानुरणनध्वनिरूपं देहडादप्रमुखमुधाराख्यं वाद्यं वादयेत् । पश्चादुधारानन्तरं स्थापनं वादयेत् । **तदथोच्यत इति** । अथ; अनन्तरं तत्; स्थापनमुच्यते, स्वरूपकथनेन प्रकाश्यते । **मुखयोर्बोहणं दत्वेति** । भूतिमिश्रेण मर्दितेनौदनेन पूरिकाकारां पिण्डिकां कृत्वा वामवक्त्रे निवेश्यारपेन तेनौदनेन दक्षिणं वक्त्रं लिप्त्वेत्यर्थः । वाममाननं गड्दग्धोमित्यनुकरणं यथा

**गड्दग्धोमिति वक्त्रं तु गड्दग्धामिति दक्षिणम् ।**
**ततो मध्यलये ताले द्वितीये मुखयोर्द्वयोः ॥ १०४६ ॥**
**कुर्यान्नादसमायोगमथोच्चोच्चं दलत्रयम् ।**
**पृथग्विलम्बिते मध्ये द्रुते चैव लये क्रमात् ॥ १०४७ ॥**
**तथैकद्वित्रिर्थोंकाररचितं ग्रहमोक्षभाक् ।**
**आलप्तिवच्च त्रिस्थानशुद्धं हस्तद्वयेन यत् ॥ १०४८ ॥**
**मधुरं वाद्यते तज्ज्ञैः स्थापनं तदुदाहृतम् ।**
**ततस्थोंकारबहुलग्रहमोक्षोऽन्तरो भवेत् ॥ १०४९ ॥**

भवति तथा वादयेत् । दक्षिणं वक्त्रं तु गड्दग्धामित्यनुकरणं यथा भवति तथा वादयेत् । ततः; अनन्तरं, मध्यलये द्वितीयाख्ये ताले द्वयोर्मुखयोर्वामदक्षिणयोर्नादसमायोगं नादयोरेकाकारयोर्भिन्नाकारत्वे वादिसंवादिरूपयोः समायोगं मेलनं कुर्यात् । **अथः**; अनन्तरम् । **उच्चोच्चमिति** । दीर्घदीर्घं दलत्रयं खण्डत्रयं विलम्बिते मध्ये द्रुते च पृथग्वाद्यत इत्युत्तरेण संबन्धः । **पृथगिति** । प्रथमखण्डाद्दीर्घं द्वितीयखण्डं, तस्मात् तदपेक्षया दीर्घं द्वितीयं खण्डं, तदपेक्षया दीर्घं तृतीयं खण्डमपि लयत्रये योजयेदिति पृथक्शब्दार्थः । एतल्लयक्रमात्तथैकद्वित्रिर्थोंकाररचितं तत्तदेव खण्डत्रयं ग्रहमोक्षभाग्वाद्यते । अयमर्थः—प्रथमदलं विलम्बितलये ग्रहमोक्षयोरेकैकथोंकाररचितम्, मध्यलये ग्रहमोक्षयोर्द्विद्विर्थोंकाररचितम् । द्रुतलये ग्रहणमोक्षयोस्त्रिस्त्रिर्थोंकाररचितं कृत्वा, तथा द्वितीयतृतीयदलयोरपि कुर्यादिति । **आलप्तिवच्च त्रिस्थानशुद्धमिति** । आलप्तिर्यथा मन्द्रमध्यताराख्येषु स्थानेषु शुद्धापस्वररहिता कर्तव्या भवति, तथा मर्दलवाद्ये स्थापनमपि त्रिस्थानेषु विलम्बितमध्यद्रुतेषु शुद्धमसंकीर्णं कर्तव्यमित्यभिप्रायः । अथवा आलप्तिवत्, आलापो रागालापः, सोऽस्यास्तीति मत्वर्थे वतिः । अस्मिन्पक्षे त्रिस्थान-

चतुरश्रत्र्यश्रमिश्रखण्डेष्वेकेन केनचित् ।
तालेन टाकणीवादौ कर्तव्यौ तदनन्तरम् ॥ १०५० ॥
तयोरेकसरो जोडा चेति भेदद्वयं मतम् ।

शुद्धमिति मन्द्रादिष्वपस्वररहितमित्यर्थः । वादकः स्वयं रागालापयुक्तमुद्धट्टनं कुर्वन् तदुपरञ्जकत्वेन मध्ये मध्ये मर्दलवादनं कुर्यादित्यर्थः । एवं हस्तद्वयेन यन्मधुरं वाद्यते तत्स्थापनमिति तज्ज्ञैः; वाद्यज्ञैरुदाहृतम् । ततः; स्थापनानन्तरं, थोंकारबहुलग्रहमोक्षः; थोंकारैर्बहुलैर्ग्रहमोक्षौ यस्येति स तथोक्तः । अन्तरः; अन्तराख्यः खण्डः कर्तव्यो भवति । तदनन्तरम्; अन्तरानन्तरं चतुरश्रत्र्यश्रमिश्रखण्डेषु मध्य एकतमेन केनचित्तालेन टाकणीवादौ, टाकणी च वादश्चेति द्वन्द्वः; तौ कर्तव्यौ भवतः । तयोः; टाकणीवादयोः, प्रत्येकम् । **एकसरो जोडा चेति भेदद्वयं मतमिति** । एकसरटाकणी जोडाटाकणीति । एकसरवादो जोडावादश्चेत्यर्थः ॥ -१०३९–१०५०- ॥

(सु०) मार्दङ्गिकभेदानाह—चतुर्विध इति । मार्दलिकः; मर्दलवादकः, वादकादिभेदेन चतुर्विधः, वादकः, मुखरी, प्रतिमुखरी, गीतानुग इति । तत्र वादकस्य लक्षणमाह—वादक इति । वादस्य विद्याकलहस्य कर्ता वादकः, पक्षपरिग्रहश्च वाद इत्युच्यते । स्वपक्षसाधनं परपक्षदूषणं विपक्षपरिग्रहः । येऽन्य इति । ये जल्पवितण्डाद्या अन्ये भेदाः, तान् ग्रन्थविस्तरभीत्या नावोचत् । वाद इति । पक्षपरिग्रहरूपे वादे त्राटनासंज्ञिकं वाद्यं प्रथमं कर्तव्यम् । त्राटनं लक्षयति—मर्दल इति । बोहणेन विना अताले मर्दले वक्ष्यमाणे देहडगादिकृतः यो ध्वनिर्जायते तत्र त्राटनं मतमिति । बोडवाडमिति निबिडशब्दं मार्दङ्गिकप्रसिद्धं हस्तविस्तारार्थं कुर्यात् । ततः, अनन्तरं मुक्तशब्दरूपात् देहदडगात् अप्रमुखं कार्यम् । ततः उधारस्थापनं च । तत्स्थापनमप्रमुखमित्युच्यते । मुखयोरिति । मर्दलस्य मुखद्वये बोहणं दत्वा वामं मुखं गड्दग्धोमिति वर्णैर्वादयेत् । दक्षिणं वक्त्रं तु गड्दग्धामिति वादयेत् । तत

**कृत्वा श्रमस्य वहनीं यस्तालेऽष्टकलादिके ॥ १०५१ ॥**
**वाद्यखण्डस्तालकलाप्रस्तारानुगतः कृतः ।**
**अखण्डितष्टाकणी सैकसरत्वं सकृत्कृतेः ॥ १०५२ ॥**
**एकद्वित्रिचतुर्वारं शुद्धाभ्यसनतो भवेत् ।**
**इह श्रमवहन्याख्यः प्रकारो वादने यथा ॥ १०५३ ॥**

तद्धितोटें ततधिधिथोंथोंटेंटेंततततधिधिधिथोंथोंथोंटेंटेंटें । तत-तत धिधिधिधिथोथोथोथोटेटेटेटे । इति श्रमवहनीं त्वा, एकसरटा-कणी यथा—तकधिकट तकधिकट धिकटतक तकधिकट तकतक-धिकट धिकटकतधिकट इत्यष्टौ वाद्यखण्डस्य खण्डा अष्टासु कलासु, सैव द्विवारं जोडा ॥

इति । ततोऽनन्तरं मध्यलये तालद्वये वादसंयोगं कुर्यात् । ततो नादं पूर्वस्मात् पूर्वस्मात् उच्चमानम् उत्तरोत्तरं विलम्बितादिलयत्रयं क्रमात् एकद्वित्रैः थोंकारैः ग्रहे मोक्षे च युक्तं दलत्रयं खण्डत्रयं स्थानत्रयमिति शुद्धं हस्तद्वयेन मधुरं यद्वाद्यते तत् स्थापनमिति । तत इति । ततः अनन्तरं ग्रहमोक्षमध्ये थोमिति शब्देन व्याप्तं चतुरश्रादितालेषु येन केनचित्तालेन रचितं भवेत् । तदा टाकणीवादश्च कर्तव्यः । तयोः टाकणीयोः प्रत्येकमेकसरटाकणी जोडा-टाकणी चेति द्वौ भेदौ ॥ -१०३९–१०५०- ॥

(क०) तत्र सामान्येन टाकर्णीं लक्षयति—**कृत्वेति** । श्रमस्य वहनीं **कृत्वा, अष्टकलाधिके ताले**; एककलचच्चत्पुटादावित्यर्थः । आदिशब्देन द्विकलचतुष्कलचच्चत्पुटादयो गृह्यन्ते । तत्रैकस्मिन् ताले, **तालकलाप्रस्ता-रानुगत** इति दक्षिणादिमार्गवशात्तालस्य यावन्मात्रा कला भवति, तस्याः प्रस्तारमनुगतः कृतः । **अखण्डितः**; सकलो वाद्यखण्डः टाकणीति संबन्धः । **सा सकृत्कृतेरेकसरत्वमिति** । प्राप्नोती शेषः । अनावृत्त्यैक-

टाकणीवत्समस्तं प्राक्खण्डं कृत्वा ततः परम् ।
खण्डं खण्डं द्विर्द्विवारं वाद्यते वाद्यसंज्ञके ॥ १०५४ ॥
तत्रैकसरजोडात्वं टाकणीवदुदाहृतम् ।

यथा—दंदंटिरिटिट्टिकड्द कडदगझेक डदगझे थरिकथरि टगणगणधरि गणगणधरि दथरिगडदग दथरिगडदग हथरिगडदग दथरिदथरितर्गड्दक्थरिकटतत्तक् इति षोडशकले ताले षोडशकलासु-षोडशखण्डकं वाद्यं कृत्वा तान् षोडश खण्डान् द्विर्द्विः कुर्यात् ।

इत्येकसरवादः

सरटाकणी भवतीत्यर्थः । टाकण्यङ्गत्वेन प्रसक्तायाः श्रमवहन्या लक्षणमाह—**एकद्वित्रीत्यादि** । **शुद्धाभ्यसनेनेति** । शुद्धानां तद्व्यादिसप्तवर्णानां मध्ये केषांचिदेकद्वित्रिचतुर्वारमावृत्तौ । ताः प्रस्तार्य दर्शयितुमाह—**यथेति** ॥ -१०५१-१०५३ ॥

(क०) तद्धितोंटेमित्यादि यावदष्टकलं श्रमवहन्याः प्रस्तारो द्रष्टव्यः । सैव द्विवारं कृता चेज्जोडाटाकणी ॥

(क०) अथ वादं लक्षयति—**टाकणीवदित्यादि** । वादसंज्ञकं प्राक्खण्डं स्वकीयं प्रथमं खण्डं टाकणीवट्टाकण्यामिव सकृदेकवारं कृत्वा । ततः परं खण्डं खण्डं द्विर्द्विवारं वाद्यत इति संबन्धः । **तत्रैकसरजोडात्वमिति** । एकसरत्वं चैकसरजत्वम् । **टाकणीवदुदाहृतमिति** । उक्तलक्षणस्य वाद्यस्य सकृत्करणेनैकसरवादः । तस्यैव समुदायत्रयस्य द्विःकरणेन जोडावाद इत्यर्थः ॥ १०५४, १०५४- ॥

(क०) दंदं टिरि, इत्याद्येकसरवादस्य प्रस्तारः । जोडावादे तमेव द्विः कुर्यात् ।

इत्येकसरवादः

तकारेण च सर्वेषामेतेषां त्याग इष्यते ॥ १०५५ ॥
कुर्यात्ततो दिगिदिगिं ताटवादादिकं तथा ।
वर्णा दिगिदिगीत्येते प्रोक्ता दिगिदिगौ बुधैः ॥ १०५६ ॥
यः खण्डोऽतिद्रुते माने ताटवादः स कथ्यते ।
अन्येऽपि वादविधयोऽभ्यूह्यन्तामध्वनामुना ॥ १०५७ ॥
इति वादप्रकाराणां सम्यक्त्वे विजयो भवेत् ।

इति वादकः

(सु०) तयोर्लक्षणमाह—कृत्वेति । श्रमस्य वहनीं कृत्वा अष्टकलाधिके ताले तालकलाविस्तारानुगः एकसरगीतौ वाद्यखण्डः टाकणीत्युच्यते । सा टाकणी एकद्वित्रिचतुर्वारमावृत्त्या एकसरः । इहेति । श्रमवहन्याः वादनप्रकारः तद्धिथोंदेमित्याद्यैः पाटैः । एकसरं लक्षयति—टाकणीवदिति । टाकणीवत् समस्तखण्डं प्रथमं गीत्वा, ततः परं खण्डं द्विप्रकारं वाद्यते चेत् पाटः पाटस्यैकसरत्वात् । जोडात्वं च टाकणीवद् ज्ञातव्यम् । स एवेति ; स एवैकसरः द्विःकृतश्चेत् , जोडेत्युच्यते ॥ -१०५१–१०५४- ॥

इत्येकसरवादः

(क०) सर्वानुगतं लक्षणैकदेशमाह—**तकारेणेति** । ततोऽनन्तरं दिगिदिगिं कुर्यात् । तथा दिगिदिगेत्यनन्तरं ताटवादादिकं कुर्यात् । अत्रादिशब्देन ताण्डिकप्रसिद्धो वाद्यविशेषो द्रष्टव्यः । दिगिदिगीति ताटवादयोः क्रमेण स्वरूपं दर्शयति । **वर्णा** इत्यादि । **अन्येऽपीति** । पूर्वोक्ता बोल्लावण्यादयो देशीप्रसिद्धाश्च वाद्यविधयः । अमुना अध्वना वादोक्तमार्गेणाभ्यूह्यन्ताम् । निगमयति—**इतीति** । सम्यक्त्व उक्तप्रकारेण वादने विजयो भवेदिति फलं दर्शितम् ॥ १०५५–१०५७- ॥

इति वादकः

कर्ता वाद्यप्रबन्धानां नृत्तशिक्षाविचक्षणः ॥ १०५८ ॥
गीतवादननिष्णातः सुरेखोऽन्तर्मुखश्च यः ।
अर्धाङ्गमिव नर्तक्या वादयेद्रङ्गभूमिगः ॥ १०५९ ॥
वादकैः प्रेक्षितमुखो वादनार्थं मुखर्यसौ ।

इति मुखरी

किंचिद्धीनो मुखरिणः प्रोक्तः प्रतिमुखर्यसौ ॥ १०६० ॥

इति प्रतिमुखरी

(सु०) तकारेणेति । एतेषां सर्वेषां प्रान्ते तकारः कर्तव्यः । दिगिदिगीत्यादिवर्णान् कुर्यात् । अतिद्रुते माने यः खण्डो गीयते, स ताटवाद इत्युच्यते । अन्येऽपि वाद्यप्रकारा अनेका अमुना अध्वना अनेन मार्गेण ऊहनीयाः । एवमुक्तप्रकारेण, वादप्रकाराणां सम्यक्त्वं समीचीनत्वं यत्र विद्यते, तत्र तस्य मार्दलिकस्य विजयो भवेत् ॥ -१०५५-१०५७- ॥

इति वादकः

(क०) अथ मुखरिणं लक्षयति--**कर्तेत्यादि** । वाद्यप्रबन्धानां यत्यादीनां कर्ता निर्माता । **नृत्तशिक्षाविचण इति** । पात्राणां प्रथमं नटेनोपदिष्टस्य नृत्तस्य तदसंनिधावप्यभ्यासकरणे दक्ष इत्यर्थः । **गीतवादननिष्णात इति** । मध्ये मध्ये नादानुकरणेन गीतं यथा रज्यते तथा वादने निपुण इत्यर्थः । **सुरेख इति** । वादसमये दृश्याङ्गसंनिवेशवानित्यर्थः । **अन्तर्मुख इति** । अवहितमना इत्यर्थः । **नर्तक्या अर्धाङ्गमिवेति** । करचरणाद्यङ्गं यथा नृत्त उपयुज्यते तथा मुखर्यपि नृत्तानुगुणलयप्रदानाङ्गवदुपयुज्यत इत्यर्धाङ्गमिवेत्युक्तम् । **वादनार्थं वादकैः प्रेक्षितमुख इति** । इतरेषां वादकानां वादनं मुखर्यधीनमित्यर्थः ॥-१०५८-१०५९-॥

इति मुखरी

शुद्धसालगगीतानां वर्णान्कठिनकोमलान् ।
समांश्च विषमान्नादं मन्द्रं मध्यं च तारकम् ॥ १०६१ ॥
प्रौढं वा मधुरं सम्यगनुगच्छति वादनात् ।
पूर्वभागे तथाभोगे जक्काप्रहरणे क्रमात् ॥ १०६२ ॥
कुर्याद्वैकल्पिके यद्वा समग्रं गीतमाश्रिते ।
समुत्थिते वानुलोम्याद्वैलोम्याद्वोभयेन वा ॥ १०६३ ॥
निःसारौ सालगे गीते यस्तं गीतानुगं विदुः ।
क्रमात्तकारथोंकारौ स कुर्याद् ग्रहमोक्षयोः ॥ १०६४ ॥

इति गीतानुगः

(सु०) मुखरीलक्षणमाह—कर्तेति । सुरेखः रञ्जकः अन्तर्मुखश्च कर्तव्यः । अर्धाङ्गमिव नृत्ते तदनुसारित्वात् अभिनयकारकः रङ्गसंगतः रङ्गमण्डपं प्राप्तः ॥

इति मुखरी

(सु०) प्रतिमुखरीलक्षणमाह—मुखरीप्रोक्तलक्षणैः किंचिद्धीनः प्रतिमुखरी ॥ -१०५८–१०५९- ॥

इति प्रतिमुखरी

(क०) प्रतिमुखरीगीतानुगयोर्लक्षणं ग्रन्थत एव सुबोधम् । तत्र 'जक्केति यतिरुच्यते । यतिर्जक्केति सा' इत्युक्तत्वात् । ग्रहे तकारः । मोक्षे थोंकार इति क्रमो द्रष्टव्यः ॥ -१०६०–१०६४ ॥

इति गीतानुगः

इति चतुर्विधमार्दलिकलक्षणम्

(सु०) गीसानुगं लक्षयति—शुद्धेति । यस्तु शुद्धानां सालगानां च गीतानां कठिनादिगुणान् वर्णान् बध्वा, समांश्च विषमान् नादं, मन्द्रमध्यतारेण प्रौढं मधुरं वा वादनात् सम्यगनुगच्छति अनुसरति, यश्च सालगगीते पूर्वभागे

वर्णव्यक्तिः सुरेखत्वमनुयायप्रवीणता ।
मधुरोद्धतवाद्येषु विज्ञता हस्तलाघवम् ॥ १०६४ ॥
अवधानं श्रमजयो मुखवाद्येषु पाटवम् ।
रक्तिराविद्धकस्यानुवृत्तिर्बहुलता तथा ॥ १०६५ ॥
यतितालल्यज्ञत्वं गीतानुगमनं तथा ।
गुणा मार्दलिकस्यैते दोषः स्यात्तद्विपर्ययः ॥ १०६६ ॥

इति मार्दलिकगुणदोषाः

उद्ग्राहे आभोगे च निःसारुताले आनुलोम्येन प्रातिलोम्येन उभयेन वा जक्का प्रहारेण कुर्यात् । तं गीतानुगं विदुरिति संबन्धः । स गीतानुगो वादकः ग्रहे मोक्षे च तकारथोंकारौ कुर्यात् ॥ -१०९९-१०६२- ॥

इति गीतानुगः

इति चतुर्विधमार्दलिकलक्षणम्

(क०) अथ मार्दलिकगुणदोषानाह—**वर्णव्यक्तिरित्यादि** । **अनुयायप्रवीणता**; अनुयायो नामानुवृत्तिर्वाद्यानुकरणमित्यर्थः । तत्र प्रवीणता । तद्दोषानाह—**तद्विपर्यय इति** । तेषां गुणानां विपर्ययो वैपरीत्यं दोषः ॥ १०६४–१०६६ ॥

इति मार्दलिकगुणदोषाः

(सु०) मार्दलिकगुणदोषानाह—वर्णव्यक्तिरिति । सुरेखत्वं रञ्जकत्वं, गीतच्छायानुसरणमनुयायत्वं, तत्र प्रवीणता । आविद्धको हुडुक्कावादकः, तस्य अनुवृत्तिरनुसरणम् ॥ १०६४–१०६६ ॥

इति मार्दलिकगुणदोषाः

तद्वृन्दं द्वित्रिचतुरैस्तज्ज्ञैर्मर्दलधारिभिः ।
प्राधान्येन विधातव्यं तैर्मुखर्यनुवर्तनम् ॥ १०६७ ॥

इति मार्दलिकबृन्दम्

या हस्तसंमिता दैर्घ्येऽष्टाविंशत्यङ्गुला पुनः ।
परिधावङ्गुलमिता पिण्डे सप्ताङ्गुले मुखे ॥ १०६८ ॥
मण्डल्यौ वक्त्रयोर्वल्लीमध्यावेकादशाङ्गुले ।
सपादाङ्गुलकस्थौल्ये उद्दलीकृतबन्धने ॥ १०६९ ॥
वदनाभ्यां सह स्यातां कुर्याद्रन्ध्राणि षट् तयोः ।
बद्धरज्जुनिवेशार्थं पुरोभागेऽर्गलात्रयम् ॥ १०७० ॥
कलशाकलितद्वयन्तं पश्चाद्भागेऽर्गलाद्वयम् ।
बन्धसूत्रान्तरे मध्ये भवेदुदरपट्टिका ॥ १०७१ ॥
अङ्गुलत्रयविस्तारा श्लक्ष्णा हृदयहारिणी ।
द्वात्रिंशत्तन्तुसंजातरज्ज्वा पक्षद्वयं दृढम् ॥ १०७२ ॥

(क०) अथ मार्दलिकबृन्दं लक्षयति—**तद्वृन्दमिति** । तेषां मार्दलिकानां वृन्दं समाजः ॥ १०६७ ॥

इति मार्दलिकबृन्दम्

(सु०) मार्दलिकबृन्दं लक्षयति— तद्बृन्दमिति । द्वाभ्यां त्रिभिश्चतुर्भिर्वा मृदङ्गधारकैः बृन्दं भवति । तैश्च प्राधान्यात् पूर्वलक्षितो मुखर्यनुसर्तव्यः ॥ १०६७ ॥

इति मार्दलिकबृन्दम्

(क०) अथ हुडुक्कां लक्षयति—**या हस्तसंमितेत्यादि** । **मझेंकारा**विति । अत्र हुडुक्कायां मकारझेंकारौ पाटहेभ्यो वर्णेभ्योऽधिकावुक्तौ ।

बद्ध्वा तत्रोत्कक्षकौ च विधाय स्कन्धपट्टिकाम् ।
तयोर्द्विगुणतां न्यस्येदङ्गुलार्धार्धसंमितम् ॥ १०७३ ॥
छिद्रं यस्याश्चतुर्थांशे नादोद्बोधविधायकम् ।
हुडुक्का सा बुधैः प्रोक्ता तस्याश्च स्कन्धपट्टिकाम् ॥ १०७४ ॥
न्यस्य स्कन्धे दक्षिणेन पाणिना वादनं भवेत् ।
उदरे पट्टिका प्रोक्ता तस्यां वामं निवेशयेत् ॥ १०७५ ॥
देवता मातरः सप्त शार्ङ्गदेवेन कीर्तिताः ।
कुर्वीत पाटहान्वर्णानिह देंकारवर्जितान् ॥ १०७६ ॥
अत्रान्यैरधिकावुक्तौ मझेंकारौ मनीषिभिः ।
लक्ष्यज्ञास्त्वावजं प्राहुरिमां स्कन्धावजं तथा ॥ १०७७ ॥

इति हुडुक्कालक्षणम्

पाटहैर्वर्णैः सह मकारझेंकारौ प्रयोक्तव्यावित्यर्थः । इमां हुडुक्कां लक्ष्यज्ञा आवजं तथा स्कन्धावजं चैवं संज्ञाद्वयमपरमाहुः ॥ १०६८–१०७७ ॥

इति हुडुक्कालक्षणम्

(सु०) हुडुक्कां लक्षयति—या हस्तेति । दीर्घत्वे हस्तप्रमाणे, परिधौ वर्तुलप्रमाणे अष्टाविंशत्यङ्गुलः, पिण्डे एकाङ्गुलः, तस्याः द्वे मुखे सप्ताङ्गुलः, मुखयोः मण्डल्यौ वल्लीमध्यौ चर्मरचिते एकादशाङ्गुलमिते, सचतुर्थांशाङ्गुलः स्थौल्ये, पूर्वोक्तया उदल्या बद्धमुखेन सह स्यातां भवेताम् । तयोः मण्डल्योः बन्धनरज्जुप्रवेशाय षड् रन्ध्राणि कार्याणि । पूर्वभागे च तिस्रोऽर्गला कलशे कलिता आदिरन्तश्च यासां तथाविधा, पश्चाद्भागे तु द्वे अर्गले बन्धे, बन्धसूत्रयोः मध्ये उदरपट्टिका भवेत् । अङ्गुलत्रयविस्तारा श्लक्ष्णा मसृणा हृदयहारिणी द्वात्रिंशत्तन्तुभिः संजातारज्जुः, तया पक्षद्वयं दृढं बध्वा, तत्र प्रोक्तावस्था ऊर्ध्वकक्षा यस्याः, तथाविधां स्कन्धपट्टिकां कृत्वा, तयोः; रन्ध्रयोः,

बीजवृक्षोद्भवा पिण्डेऽङ्गुलतुर्यांशसंमिता ।
एकविंशत्यङ्गुला स्याद्दैर्घ्ये हस्तमिताथवा ॥ १०७८ ॥
परिधौ दधते मानं या चत्वारिंशदङ्गुलम् ।
चतुर्दशाङ्गुले वक्त्रे केषांचिद् द्वादशाङ्गुले ॥ १०७९ ॥
मण्डल्यौ लोहजे सूत्रवेष्टिते चर्मबन्धने ।
परिधौ संमिते ते च द्वाचत्वारिंशताङ्गुलैः ॥ १०८० ॥
तिस्रस्तिस्रस्तथा तन्त्रीर्मुखयोर्वलयद्वयम् ।
दधते कवलव्याप्तं चतुर्दशभिरन्वितम् ॥ १०८१ ॥
रन्ध्रैस्तेष्वेकान्तरेषु विम्रिकास्तावतीः क्षिपेत् ।
द्वाभ्यां द्वाभ्यां विम्रिकाभ्यां बन्धो मत्स्याकृतिर्भवेत् ॥१०८२॥
यस्यास्तां करटामाहुः प्रान्तयोः प्रान्तबद्धया ।
कच्छया स्कन्धदेशे तां कण्ठ्यां वा वादने वहेत् ॥ १०८३ ॥
चर्चिका देवता चास्यां पाटास्तु करटेत्यमी ।
वादनं कुडुपाभ्यां तु शार्ङ्गदेवेन कीर्तितम् ॥ १०८४ ॥
तिरिकितिरिकिरीति प्रायः पाटद्वयं मतम् ।

इति करटालक्षणम्

न्यस्येत् । अङ्गुलचतुर्थांशमितं छिद्रं यस्याः, चतुर्थांशे नादोद्बोधविधायकं स्यात् । तस्या वादनप्रकारमाह—तस्या इति । वर्णानाह—कुर्वीतेति । देंकारं विना पटहोक्तान् वर्णान् कुर्यात् । अन्यैः मनीषिभिः मकारझेंकारावधिकावुक्तौ । इयं हुडुक्का लोके आवजं स्कन्धावजमिति च कथ्यते ॥ १०६८–१०७७ ॥

इति हुडुक्कालक्षणम्

(क०) अथ करटां लक्षयति—**बीजवृक्षोद्भवेत्यादि** । **पाटास्तु करटेत्यमी** ; करटेति वर्णसमुदाय एकः । तिरिकि तिरिकिरीति द्वितीयः ।

घनः श्लक्ष्णः सुपक्वश्च स्तोकवक्त्रो महोदरः ॥ १०८५ ॥
पाणिभ्यां वाद्यते तज्ज्ञैश्चर्मनद्धाननो घटः ।
कथिताः पाटवर्णा ये मर्दले ते घटे मताः ॥ १०८६ ॥

इति घटलक्षणम्

प्राय इति प्राचुर्येणेत्यर्थः । सामान्येन तु पटहादिकूटपाटा यथोचितं द्रष्टव्याः ॥ १०७८–१०८४- ॥

इति करटालक्षणम्

(सु०) करटालक्षणमाह—बीजेति । बीजकोऽसनवृक्षः, तस्मात् जाते पिण्डे अङ्गुलचतुर्थांशेन मिता दीर्घत्वे, एकविंशत्यङ्गुला परिधौ, वर्तुलप्रमाणे चत्वारिंशदङ्गुला, तस्याश्च द्वे मुखे चतुर्दशाङ्गुले कार्ये इति । मण्डल्यौ च लोहमय्यौ सूत्रेण वेष्टिते चर्मणावबद्धे परिधौ द्वाचत्वारिंशदङ्गुले कार्ये । तिस्र इति । मुखयोः चतुर्दशभी रन्ध्रैः युक्तं कवलेन व्याप्तं वलयद्वयं दधाना तिस्रस्तिस्रः तन्त्रीष्वेकान्तरेषु रन्ध्रेषु क्षिपेत् । तावतीर्विघ्निका कर्पराश्च निक्षिपेत् । द्वाभ्यां विघ्निकाभ्यां मत्स्याकारं बन्धनं क्रियते यस्यां, तां करटा-मित्याहुः । प्रान्तप्रदेशयोः प्रान्तया बद्धया स्कन्धप्रदेशे च कच्छया कक्ष्यां वा वादनसमये करटां वहेत् । करटेति त्रयो वर्णाः पाटाः, कुडुपाभ्यां; कोणद्वयेन वादनं कार्यम् ॥ १०७८–१०८४- ॥

इति करटालक्षणम्

(क०) अथ घट-घडस-ढवस-ढक्का-कुडुक्का-कुडुवा-रुञ्जा-डमरुक-डक्का-मण्डिडक्का-डक्कुली-सेल्लुका-झल्लरी-भाण-त्रिवली-दुन्दुभि-भेरी-निःसा-ण-तुम्बकीनां लक्षणानि ग्रन्थत एव सुबोधानि ॥ -१०८५–११५६ ॥

इति घटादिलक्षणम्

(सु०) घटं लक्षयति—घन इति । घनः अन्तःसारः, श्लक्ष्णो मसृणः, सुपक्वः सम्यक्पाकवान्, स्तोकवक्त्रः अल्पमुखः, महोदरः स्थूलोदरः, चर्मनद्धाननः

हुडुक्कयैव घडसो व्याख्यातः किंतु मण्डली ।
दक्षिणस्योद्दलीबद्धा वामा रज्ज्वा नियन्त्रिता ॥ १०८७ ॥
औदर्यां पट्टिकायां च वामोऽत्र न निवेश्यते ।
गोंकारबहुलं चामुं वादयेदिति तद्विदः ॥ १०८८ ॥
अङ्गुष्ठमध्यमाङ्गुल्यौ मदनाक्ताग्रभागतः ।
दक्षिणेन करेणास्ये घर्षणाद्गोंकृतिर्भवेत् ॥ १०८९ ॥
घातोऽङ्गुलीभिर्वामस्य वामाङ्गुष्ठेन पीडनम् ।

इति घडसलक्षणम्

स्याद्धस्तदैर्घ्यः परिधौ सनवत्रिंशदङ्गुलः ॥ १०९० ॥
द्वादशाङ्गुलके वक्त्रे वल्लीवलयसंयुते ।

चर्मणा आच्छादितमुखश्च यत्र करद्वयेन वाद्यते स घटः । मर्दले ये कथिताः पाटवर्णाः ते सर्वेऽप्यस्मिन् घटे ज्ञातव्याः ॥ -१०७९–१०८६ ॥

इति घटलक्षणम्

(सु०) घडसं लक्षयति—हुडुक्कयैवेति । हुडुक्कालक्षणमेव घडसस्य लक्षणं, तर्हि कथं पृथङ्निर्देश इत्याह—किंत्विति । अयं विशेषः—दक्षिणस्य स्थिता मण्डली अस्य घडसस्य उद्दल्या बध्यते । वामामण्डली तु तर्जन्या नियम्यते । औदर्यामुदरसंबन्धिन्यां पट्टिकायां वामहस्तस्य निवेशो नास्ति । गोंकारस्य प्राचुर्यं यस्मिन्; एवंविधं सममङ्गुल्योः मध्वोच्छिष्टलिप्तेन अग्रभागेन वादयेत् । दक्षिणेन अस्य घर्षणात् मुखघर्षणात् गोंकार उत्पद्यते । एतस्य च वामवादने वामहस्तस्याङ्गुलीभिः घातस्यैवाङ्गुष्ठेन पीडनमिति ॥ १०८७–१०८९- ॥

इति घडसलक्षणम्

(सु०) ढवसं लक्षयति—स्यादिति । हस्तप्रमाणदैर्घ्यः परिधौ वर्तुल-

यो धत्ते सप्त सप्तापि रन्ध्राणि वलयद्वये ॥ १०९१ ॥
तथा कवलयोस्ताभ्यां तुण्डे वलयसंयुते ।
पिधाय गाढं बध्येते रन्ध्रविन्यस्तदोरकैः ॥ १०९२ ॥
यस्यासौ ढवसः प्रोक्तः शार्ङ्गदेवेन सूरिणा ।
स्कन्धे निक्षिप्य कच्छान्तं वामहस्तेन वादयेत् ॥ १०९३ ॥
वामास्ये दक्षिणस्थेन कुडुपेन तु दक्षिणे ।
ढंकारपाटवर्णैश्च रूढोऽयं ढवसो जने ॥ १०९४ ॥

इति ढवसलक्षणम्

व्याख्याता ढवसेनैव ढक्का किंतु मुखद्वयम् ।
त्रयोदशाङ्गुलं तस्या धृत्वा तां वामपाणिना ॥ १०९५ ॥
तज्ज्ञो दक्षिणहस्तस्थकोणघातेन वादयेत् ।
ढंकारः पाटवर्णाः स्युर्निःशङ्केनेति कीर्तितम् ॥ १०९६ ॥

इति ढक्कालक्षणम्

प्रमाणेन च सहितः सनवत्रिंशदङ्गुलः एकोनचत्वारिंशदङ्गुल इत्यर्थः । यश्च वल्लीवलयसंयुते द्वादशाङ्गुलप्रमाणे द्वे मुखे धत्ते, वलयद्वये च सप्त सप्त रन्ध्राणि धत्त इति । यस्य च वलयः तुण्डे मुखे वलयेन संयुक्ते ताभ्यां वलयाभ्यामाच्छाद्य रन्ध्रविन्यस्तैः दोरिकैः यस्य गाढं बध्येते, असौ ढवस इति । स्कन्ध इति । स्कन्धे कच्छान्तं प्रान्तं निक्षिप्य, वामहस्तेन वादयेत् वामास्ये, दक्षिणास्ये तु दक्षिणहस्तस्थेन कोणेनेति ॥ -१०९०–१०९४ ॥

इति ढवसलक्षणम्

(सु०) ढक्कां लक्षयति—व्याख्यातेति । ढवसोक्तलक्षणेनैव ढक्का व्याख्याता । अयं तु विशेषः—मुखद्वयं त्रयोदशाङ्गुलमिति ॥ १०९५–१०९६ ॥

इति ढक्कालक्षणम्

हुडुक्कैवार्गला हीना कुडुक्का किंतु वादनम् ।
अस्याः करेण कोणेन क्षेत्रपालस्तु देवता ॥ १०९७ ॥

इति कुडुक्कालक्षणम्

बीजदारुमयी सप्ताङ्गुलगर्भमुखद्वया ।
एकविंशत्यङ्गुला च यस्या दैर्घ्ये समाकृतिः ॥ १०९८ ॥
संहताग्नित्रयाकारत्र्यङ्गुलस्थूलतायुते ।
वृत्ते नवाङ्गुले गर्भे वलये वल्लिनिर्मिते ॥ १०९९ ॥
सप्तसप्तच्छिद्रयुते यस्याः स्यातां मुखद्वये ।
कवलाभ्यां पिनह्येते मुखे च वलयान्विते ॥ ११०० ॥
सरन्ध्रे कवले रन्ध्रन्यस्ततन्त्रीसुयन्त्रिते ।
कुडुवा सा हुडुक्कोक्तवर्णात्रैंकारभूयसी ॥ ११०१ ॥
कोणाभ्यां मदनाक्ताभ्यां वाद्यते त्यक्तझेंकृतिः ।

इति कुडुवालक्षणम्

(सु०) कुडुक्कां लक्षयति—कुडुक्केति । पूर्वोक्तहुडुक्कैव अर्गला हीना कुडुक्का । किंतु करेण कोणेन वादनमिति विशेषः ॥ १०९७ ॥

इति कुडुक्कालक्षणम्

(सु०) कुडुवां लक्षयति—बीजेति । बीजकवृक्षकृता लोहादिधातुमयी वा सप्ताङ्गुलो गर्भो मुखद्वयं यस्याः, एकविंशत्यङ्गुलदीर्घा समानाकारा संहतमेवोत्थापितं यदग्नित्रयं तद्वत् त्रिकोण आकारो यस्याः । यस्याश्च मुखद्वये वर्तुले गर्भगर्ते नवाङ्गुले वलयीकृते सप्तसप्तरन्ध्रे द्वे वलये स्याताम् । मुखद्वयेति । मुखद्वये कवलाभ्यामिति द्विमुखे कवलाभ्यामपि पिनह्येते आच्छाद्येते । मुखे च वलयान्विते कार्ये, सरन्ध्रे रन्ध्रसहिते, रन्ध्रन्यस्तया तन्त्र्या सम्यक् नियन्त्रिते

अष्टादशाङ्गुला दैर्घ्ये दृढा रुञ्जा समाकृतिः ॥ ११०२ ॥
एकादशाङ्गुले तस्या वदने कुण्डलीयुते ।
नद्धव्ये चर्मणा वामवक्त्रान्तःकुण्डलीद्वयम् ॥ ११०३ ॥
तत्रैका वक्त्रमात्रा स्यादपरा चतुरङ्गुला ।
कुण्डल्योरन्तराले स्यान्नलिका स्नायुनिर्मिता ॥ ११०४ ॥
सैकच्छिद्रं वामवक्त्रं सूत्रतन्त्वञ्चनीयुतम् ।
पूर्ववद्विम्रिकाः कार्या वक्त्रयोः सप्त सप्त च ॥ ११०५ ॥
पादोनहस्तमात्रां च नागपाशवतीं दृढाम् ।
कच्छां स्कन्धे निवेश्यास्या वादनं वेदितं बुधैः ॥ ११०६ ॥
रुंकारजननाद्रुञ्जा सा भवेद्भृङ्गिदैवता ।
मतङ्गोक्तास्त्विमे वर्णाः कतदा वनमा रवौ ॥ ११०७ ॥
उक्तास्त्वन्यैरिमे वर्णाः करगा घटनाः खहौ ।
विम्रिका वाद्यशास्त्रेऽस्मिन्कर्पराः परिकीर्तिताः ॥ ११०८ ॥

इति रुञ्जालक्षणम्

द्वे कवले यस्यां सा कुडुवा ; हुडुक्कोक्त एव वर्णो यस्यां, मधूच्छिष्टकोणद्वयेन वाद्यते । झेंकारो नास्ति ॥ १०९८–११०१- ॥

इति कुडुवालक्षणम्

(सु०) रुञ्जां लक्षयति—अष्टादशेति । अष्टादशाङ्गुलदीर्घा रुञ्जा, सा समानाकृतिः, तस्या कुण्डलीयुते द्वे वदने एकादशाङ्गुला च चर्मणा नद्धव्ये बन्धयितव्ये । वाममुखस्य आस्यमध्ये कुण्डलीद्वयं कर्तव्यम् । तत्र कुण्डल्योर्मध्ये एका वक्त्रप्रमाणा, अपरा तु चतुरङ्गुलप्रमाणा च, स्नायुनिर्मिता नलिका स्थाप्या । वाममुखमेकच्छिद्रसंयुतं सूत्रतन्तुनाञ्चनवल्या वाद्यं बध्वा, प्रान्ते

वितस्तिमात्रदैर्घ्यः स्यादष्टाङ्गुलमुखद्वयः ।
यो यस्य मण्डलीयुक्ते मुखे बद्धे च चर्मणा ॥ ११०९ ॥
त्रिवलीवत्क्षाममध्यो निबद्धः सूत्रदोरकैः ।
मध्ये च गाढतां नीतावञ्चन्यौ वादनाय च ॥ १११० ॥
भवेतां प्रान्तसंलग्नसमृन्मदनगोलकैः ।
असौ डमरुको मध्ये धृत्वा हस्तद्वयेन च ॥ ११११ ॥
डघवर्णो वादनीयः प्रोक्तो निःशङ्कसूरिणा ।
अन्यैः कखरटा वर्णाः प्रोक्ता डमरुकेऽधिकाः ॥ १११२ ॥

इति डमरुकलक्षणम्

कठिनया वादनरज्ज्वा संयुतं भवेत् । पूर्वप्रकारेण विघ्निकाः कर्पराः प्रतिमुखं सप्त सप्त कर्तव्याः । अस्या वादनप्रकारमाह—पादोनेति । चतुर्थांशोनहस्तप्रमाणां कच्छां चिपिटरज्जुं स्कन्धे निवेश्य वादनं कर्तव्यम् । इयं च रुंशब्दमुत्पादयति तस्मात् रुञ्जेत्युच्यते । मतङ्गेन कतदवनमरवा वर्णा उक्ताः । अन्यैः करगघटनखहा उक्ताः । अस्मिंश्च वाद्यशास्त्रे विघ्निकाशब्देन कर्परा उच्यन्ते ॥ -११०२-११०८ ॥

इति रुञ्जालक्षणम्

(सु०) डमरुकं लक्षयति—वितस्तिरिति । वितस्तिप्रमाणदैर्घ्ये, अष्टाङ्गुलप्रमाणमुखद्वयं च, यस्य मुखद्वयं चर्मणा युक्तं मण्डलीयुक्तं च भवेत्, वक्ष्यमाणत्रिवलीवत् क्षामः कृशो मध्यप्रदेशो यस्य, मध्ये; मध्यप्रदेशे, गाढैः दोरकैरुपनिबद्धः द्वे अञ्चन्यौ वादनीयस्य प्रान्ते संलग्नः समृन्मृदा सहितः मदनस्य सिक्थकस्य गोलको ययोः स डमरुकः । मध्ये हस्तद्वयेन धृत्वा डघवर्णयुतो वादनीयः । अन्यैः कखरटा वर्णा अधिकाः प्रोक्ताः ॥ ११०९-१११२ ॥

इति डमरुकलक्षणम्

वितस्तिमात्रं दैर्घ्यं स्यान्मध्यः किंचित्कृशो भवेत् ।
मुखे त्वष्टाङ्गुलैः पिण्डोऽर्धाङ्गुलस्तन्त्रिकाद्वयम् ॥ १११३ ॥
मुखे मुखे शङ्कवश्च चत्वारस्ताम्रनिर्मिताः ।
तेषामधो द्वावूर्ध्वं द्वौ तन्त्रीबन्धनसिद्धये ॥ १११४ ॥
तन्त्र्योस्तृणशलाकां च निदध्याद्ध्वनिपुष्टये ।
अन्यल्लक्ष्म हुडुक्कावद्यस्याः पाटाक्षराण्यपि ॥ १११५ ॥
स्याद्दशाङ्गुलदैर्घ्येण कुडुपेन तु वादनम् ।
निःशङ्कशार्ङ्गदेवेन डक्का सा परिकीर्तिता ॥ १११६ ॥
अन्येऽस्या वादनं प्राहुः करेण कुडुपेन च ।
हस्तघातेन डंकारो वादने कुडुपेन तु ॥ १११७ ॥
घटस्ततो डगिश्चेति मुखान्पाटान्वदन्त्यमी ।
नगौ खकरटा वर्णा मुख्याः प्रोक्ताः परैरिह ॥ १११८ ॥
अस्यां च सूरयः प्राहुर्देवतां विन्ध्यवासिनीम् ।
अङ्गुलोना मध्यमा सा द्व्यङ्गुलोना कनीयसी ॥ १११९ ॥

इति डक्कालक्षणम्

(सु०) डक्कां लक्षयति—वितस्तिमात्रमिति । दैर्घ्यं वितस्तिप्रमाणम्, मध्यः किंचित् कृशः क्षामः, अष्टाङ्गुलप्रमाणं मुखद्वयम्, द्वे तन्त्र्यौ, मुखे मुखे; प्रतिमुखम्, चत्वारः ताम्रनिर्मिताः शङ्कवः, तेषां शङ्कूनामधःप्रदेशे द्वौ, ऊर्ध्वे च द्वौ तन्त्रीबन्धनार्थं, तन्त्रीद्वयं नादवृद्ध्यर्थं तृणशलाका क्षेप्तव्या, अन्यत् लक्ष्म कुडुक्कावत् । कुडुपेन च वादनं यस्याः, सा डक्का । केचित् करेण कोणेन वादनमाहुः । करेण घाते क्रियमाणे ऱंशब्द उत्पद्यते । कोणेन तु घटादयः, अमून् पाटमुखान् वदन्ति । अन्यैः नगखकरटा वर्णा इह मुख्या इति वदन्ति । अस्यां डक्कायां विन्ध्यवासिनीं देवतामाहुः । पूर्वोक्तप्रमाणा डक्का उत्तमा, अङ्गुलन्यूना मध्यमा, द्व्यङ्गुलन्यूना कनिष्ठेति ॥ १११३–१११९ ॥

इति डक्कालक्षणम्

डक्कैव मण्डिडक्का स्यात्किं त्वस्याः षोडशाङ्गुलम् ।
दैर्घ्यमष्टाङ्गुलौ गर्भौ स्यातां वदनयोर्द्वयोः ॥ ११२० ॥
षोडशाङ्गुलको मध्यपरिधिर्नात्र चार्गला ।
न च कच्छोत्कक्षकस्तु मध्ये स्यादश्वनीद्वयम् ॥ ११२१ ॥
उत्कक्षं चाश्वनीद्वन्द्वं वामाङ्गुष्ठाङ्गुलित्रयात् ।
धृत्वा संपीड्य तर्जन्या मण्डलीप्रान्तमाननम् ॥ ११२२ ॥
अस्या दक्षिणजानुस्थं हन्याद्दक्षिणपाणिना ।
उत्कक्षं मणिबन्धोर्ध्वे यद्वान्यस्याश्वनीद्वयम् ॥ ११२३ ॥
कनिष्ठानामिकाङ्गुष्ठैः संयुज्यापीड्य मण्डलीम् ।
तर्जन्या मध्यया वाथ हस्तेनान्येन वादयेत् ११२४ ॥
वदन्ति वादनं तस्याः करेण कुडुपेन वा ॥ ।
चर्यागाने च पूजायां शक्तेः सा विनियुज्यते ॥ ११२५ ॥

इति मण्डिडक्कालक्षणम्

(सु०) मण्डिडक्कां लक्षयति—डक्कैवेति । पूर्वोक्तलक्षणा डक्कैव मण्डिडक्का भवति । अयं तु विशेषः—दैर्घ्यं षोडशाङ्गुलं वदनद्वये, गर्भद्वयमष्टाङ्गुलम्, मध्यपरिधिः षोडशाङ्गुलः, अर्गलाश्च न सन्ति, न च कच्छा, मध्ये तु पुनः ऊर्ध्वकक्षमश्वनीद्वयं स्यात्, एवंविधमश्वनीद्वयं वामाङ्गुष्ठेन अङ्गुलीत्रयेण च धृत्वा, अस्या आननं दक्षिणजानुनि स्थितं दक्षिणहस्तेन घातयेत् । वादने प्रकारान्तरमाह—उत्कक्षमिति । ऊर्ध्वकक्षमश्वनद्वयं मणिबन्धे ऊर्ध्वप्रदेशे निक्षिप्य, कनिष्ठानामिकाङ्गुष्ठैः संयोज्य, तर्जनीमध्यमाभ्यां मण्डलीं पीडयित्वा, अन्यहस्तेन वादयेत् । प्रबन्धाध्यायोक्तचच्चरीगाने, शक्तेः पूजायां च सा विनियुज्यते ॥ ११२०–११२५ ॥

इति मण्डिडक्कालक्षणम्

कांस्याद्गोश्रृङ्गतो दन्तिदन्ताद्वा डक्कुली भवेत् ।
दैर्घ्ये पञ्चाङ्गुला वक्त्रे तस्याश्च चतुरङ्गुले ११२६ ॥
मेषपार्युदलीबद्धे स्वस्वचक्रसमन्विते ।
चक्रे च कांस्यजे ताम्रमये वा लोहजे पृथक् ॥ ११२७ ॥
पञ्चरन्ध्रे तथोद्दल्यौ रन्ध्रविन्यस्तदोरकैः ।
सौत्रैर्गाढं निबध्येते मध्ये सूत्रेण वेष्टितम् ॥ ११२८ ॥
नातिश्लथं नातिगाढं मध्यं सूत्रे त्वनामिकाम् ।
निधाय मध्यतर्जन्यौ विवृते चक्रसंयुते ॥ ११२९ ॥
कृत्वाङ्गुष्ठं त्वन्यचक्रे न्यस्याथ मदनाञ्चिताम् ।
विधायाञ्चनिकामेकां तां दुंदुमिति वादयेत् ॥ ११३० ॥
तुंतुमित्यपरे प्राहुः पाटा मर्दलसंभवाः ।
यथासंभवमेतस्यां शार्ङ्गदेवेन कीर्तिताः ॥ ११३१ ॥

इति डक्कुलीलक्षणम्

(सु०) डक्कुलीं लक्षयति—कांस्यादिति । कांस्येन गोश्रृङ्गेण हस्तिदन्तेन वा डक्कुली कार्या । तस्या दैर्घ्यं पञ्चाङ्गुलम्, मुखद्वयं चतुरङ्गुलम् । मेषस्य अजस्य वा पारिका कृत्तिः, तया निर्मितया उद्दल्या बद्धे मुखद्वये चक्रसमन्विते, चक्रद्वयं कांस्येन ताम्रेण लौहेन वा पञ्चरन्ध्रसंयुक्तं कार्यम् । तथा द्वे उद्दल्यौ छिद्रे न्यस्ते, सौत्रैः ; सूत्रकृतैः दोरकैः गाढं बन्धनीयम् । वादनप्रकारमाह—मध्य इति । अन्तःसूत्रेण वेष्टितमतिगाढमतिश्लथत्वहीनम्, अनामिकाम्, मध्यसूत्रेषु निधाय मध्यमातर्जन्यौ द्वे अङ्गुल्यौ विवृते असंयुक्ते कृत्वा, अङ्गुष्ठमन्यस्मिन्वक्त्रे न्यस्य स्थापयित्वा, मदनाञ्चितां ; सिक्थकेन अञ्चितां लिप्तामेकामञ्चनिकां कृत्वा, ताम् ; उद्दलीं दुंदुमिति शब्देन वादयेत् । अपरे तुंतुमिति मर्दलसंभवाः पाटाः प्राहुः ॥ ११२६–११३१ ॥

इति डक्कुलीलक्षणम्

षड्विंशत्यङ्गुला दैर्घ्ये परिधौ त्रिंशदङ्गुला ।
समकाया सेल्लुका स्याद्बीजकाष्ठेन निर्मिता ॥ ११३२ ॥
दशाङ्गुले मुखे तस्याः परैस्त्वेकादशाङ्गुले ।
उक्ते न बन्धनोद्दल्यौ ताभ्यामेकाङ्गुलाधिके ॥ ११३३ ॥
वल्लीजं तर्जनीस्थौल्यं मुखयोर्वलयद्वयम् ।
सरन्ध्रषट्कं रन्ध्रस्थरज्जुभिर्गाढयन्त्रितम् ॥ ११३४ ॥
एकाङ्गुलाधिकं तच्च वक्त्राभ्यां वदनं पुनः ।
तन्त्रिकागर्भितं वामं वामहस्तेन वादयेत ॥ ११३५ ॥
मुखं दक्षिणपाणिस्थकुडुपेन तु दक्षिणम् ।
मुखे वामे तु झेंकारो धिंकारो दक्षिणे मुखे ॥ ११३६ ॥

इति सेल्लुकालक्षणम्

पलैः स्यात्पञ्चविंशत्या दैर्घ्ये तु द्वादशाङ्गुला ।
अष्टादशाङ्गुलमिता परिधौ समविग्रहा ॥ ११३७ ॥

(सु०) सेल्लुकां लक्षयति—षड्विंशतीति । दैर्घ्ये; षड्विंशत्यङ्गुला, परिधौ; वर्तुलप्रमाणौ त्रिंशदङ्गुला च, समानदेहा बीजकाष्ठेन असनकाष्ठेन निर्मिता सेल्लुका स्यात् । तस्या मुखद्वयं दशाङ्गुलम् । अन्यैराचार्यैः एकादशाङ्गुलमित्युक्तम् । बन्धनमुद्दली च ताभ्यां मुखाभ्यामेकेनाङ्गुलेनाधिके, वलयद्वयं वल्लीयुतं मुखयोः स्थाप्य रन्ध्रषट्केण युक्तं, रन्ध्रस्थिताभी रज्जुभिर्गाढं बद्धाभ्यां वक्त्राभ्याम् एकेनाङ्गुलेनाधिकमिति वलयद्वयं विशेषणम् । तन्त्रिकागर्भितं मुखं वामहस्तेन वादयेत् । दक्षिणहस्तस्थकोणेन दक्षिणं मुखं वादयेत् । वामे मुखे झेंकारः, दक्षिणे मुखे तु धिंकार उत्पद्यते ॥ ११३२–११३६ ॥

इति सेल्लुकालक्षणम्

(सु०) झल्लरीं लक्षयति—पलैरिति । पलैः पञ्चविंशतिप्रमाणा, दैर्घ्ये

ससूत्रकटकं रन्ध्रद्वयं कण्ठे च बिभ्रती ।
चर्मणानद्धवदना झल्लरी परिकीर्तिता ॥ ११३८ ॥
वामहस्तधृता सा च वाद्या दक्षिणपाणिना ।

इति झल्लरीलक्षणम्

स्यात्तदर्धपलो भाणः परिधौ द्वादशाङ्गुलः ॥ ११३९ ॥
अन्यत्तु झल्लरीलक्ष्म तस्य श्रीशार्ङ्गिणोदितम् ।

इति भाणलक्षणम्

सप्ताङ्गुलमुखद्वन्द्वात्त्रिवली हस्तदैर्घ्यभाक् ॥ ११४० ॥
मुष्टिग्राह्यश्च मध्योऽस्या वदने कवलावृते ।
कवले लोहमण्डल्यौ सप्तरन्ध्रे पृथक्पृथक् ॥ ११४१ ॥
रन्ध्रन्यस्तैर्गुणैर्बद्धो मध्ये गाढं च वेष्टनम् ।
सूत्ररज्ज्वा हस्तमात्रा कच्छा स्कन्धावलम्बिनी ॥ ११४२ ॥

द्वादशाङ्गुला, परिधौ अष्टादशाङ्गुलमिता, समविग्रहवती सूत्रकटकयुक्तं कण्ठे रन्ध्रद्वयं दधाना चर्मणा आच्छादितमुखी झल्लरी स्यात् । सा वामहस्तेन धृत्वा दक्षिणपाणिना वादनीया ॥ ११३७–११३८- ॥

इति झल्लरी

(सु०) भाणं लक्षयति—स्यादिति । तदर्धपलः; सार्धद्वादशपलपरिमितः । परिधौ ; द्वादशाङ्गुलः । अन्यत्तु लक्ष्म झल्लरीवत् ॥ -११३९–११३९- ॥

इति भाणलक्षणम्

(सु०) त्रिवलीं लक्षयति—सप्ताङ्गुलेति । सप्ताङ्गुले द्वे मुखे हस्तौ दैर्घ्यम् । एवंविधा त्रिवली भवति । अस्याः त्रिवल्या मध्यो मुष्टिग्राह्यः, वदने चर्मनद्धे मुखे कवलेनावृते कार्ये सप्तरन्ध्रे, लोमहमण्डल्यौ कवले इत्युच्येते ।

वादनं करयुग्मेन शार्ङ्गदेवेन कीर्तितम् ।
तदांदोंदेति वर्णाः स्युस्त्रिपुरा चात्र देवता ॥ ११४३ ॥
एकादशाङ्गुलमुखी विंशत्यङ्गुलदैर्घ्यभाक् ।
मुखार्धमानमध्यासौ मध्ये चाश्वनिकायुता ॥ ११४४ ॥
तदर्धवर्णसंयुक्ता त्रिकुल्या चोच्यते बुधैः ।

इति त्रिवलीलक्षणम्

आम्रद्रुमसमुद्भूतो महागात्रो महाध्वनिः ॥ ११४५ ॥
कांस्यभाजनसंभारगर्भो वलयवर्जितः ।
चर्मनद्धाननो बद्धो वध्रैर्गाढं समन्ततः ॥ ११४६ ॥
दृढचार्मेण कोणेन वाद्यो वर्णेन दुन्दुभिः ।
मेघनिर्घोषगम्भीरघोंकारस्यात्र मुख्यता ॥ ११४७ ॥
मङ्गले विजये चैव वाद्यते देवतालये ।

इति दुन्दुभिलक्षणम्

रन्ध्रैर्न्यस्तैर्गुणैः मध्यभागे वेष्टनं कार्म्। सूत्ररज्जुना कृतहस्तप्रमाणा स्कन्धावलम्बिनी कच्छा कार्या, करद्वयेन च वादनम्। तदांदोंदे इत्यादयो वर्णाः। अत्र देवता च त्रिपुरा। अस्यास्त्रिवल्याः लक्षणविशेषेण नामान्तरमाह—एकादशेति। एकादशाङ्गुलं मुखं यस्याः। विंशत्यङ्गुलदीर्घा मुखस्य, अर्धमानं सार्धपञ्चाङ्गुलं तावत्प्रमाणं मध्यो यस्याः, एवंविधलक्षणयुक्ता अश्वनिकया युता च त्रिवली वर्णसंयुक्तेत्याहुः। इयमेव त्रिकुल्येत्युच्यते॥-११४०—११४४-॥

इति त्रिवलीलक्षणम्

(सु०) दुन्दुभिं लक्षयति—आम्रेति। आम्रद्रुमोद्भवः स्थूलध्वनिः; स्थूलरवः; कांस्यभाजनानां समूहो गर्भे यस्य, वलयहीनः, चर्मणा आच्छादितमुखः, वध्रैः परितो बद्धः, दृढेन चर्मकृतेन कोणेन वर्णेन च दुन्दुभि-

वितस्तित्रयदैर्घ्या स्याद्भेरी ताम्रेण निर्मिता ॥ ११४८ ॥
चतुर्विंशत्यङ्गुले च वदने वलयान्विते ।
तस्याः सवलये चर्मच्छन्ने छिद्रसमन्विते ॥ ११४९ ॥
रज्ज्वा नियन्त्रिते गाढं मध्ये सूत्रेण बन्धनम् ।
दक्षिणस्थेन कोणेन वामहस्तेन ताडनात् ॥ ११५० ॥
उद्भटो भवति ध्वानो गम्भीरोऽरिभयंकरः ।
तंकारः पाटवर्णोऽस्यां मुख्यो निःशङ्ककीर्तितः ॥ ११५१ ॥

इति भेरीलक्षणम्

कांस्यजस्ताम्रजो लौहो वोत्तमो मध्यमोऽधमः ।
एकवक्त्रो महान्वक्त्रे स्वल्पोऽधोऽर्धयवाकृतिः ॥ ११५२ ॥
भृतगर्भः कांस्यपात्रभारैर्महिषचर्मणा ।
छन्नाननो बद्धचर्मा तद्रन्ध्रन्यस्तवध्रकैः ॥ ११५३ ॥

वादनीयः । अत्र मेघगर्जितगम्भीरध्वनिवत् धोंकारस्य मुख्यत्वम् । अयं दुन्दुभिः विजययात्रायां देवतालये मङ्गले च वाद्यते ॥ -११४६–११४७- ॥

इति दुन्दुभिलक्षणम्

(सु०) भेरीं लक्षयति—वितस्तिरिति । वितस्तित्रयमिता दीर्घा ताम्रेण निर्मिता भेरी वलयसंयुते मुखे यस्याः, चतुर्विंशत्यङ्गुले कार्ये । वलयद्वयं च चर्मणा आच्छादितं च्छिद्रसहितं रज्जुबद्धं कार्यम् । मध्ये च सूत्रेण बन्धनं कार्यम् । दक्षिणहस्तेन कोणेन वामहस्तेन च घातात् अरिभयंकरः गम्भीरः अत्युद्भटश्च ध्वानो भवति । अस्यां तंकारः पाटवर्णो मुख्यो भवति ॥ -११४८–११५१ ॥

इति भेरीलक्षणम्

(सु०) निःसाणं लक्षयति—कांस्यज इति । कांस्यजो निःसाण उत्तमः,

क्षिप्तोऽधो वध्रवलये निवेश्यावर्तितैर्मुहुः ।
द्विषद्वित्रासजननो निःसाणः शार्ङ्गिणोदितः ॥ ११५४ ॥
चार्मणेनास्य कोणेन सद्वितीयस्य वादनम् ।
दृढशब्देन भीरूणां भिनत्ति हृदयान्ययम् ॥ ११५५ ॥
स्यादस्माद्युद्धवीराणां रोमाञ्चोपचितं वपुः ।

इति निःसाणलक्षणम्

निःसाणवत्तुम्बकी स्यात्ततोऽल्पा गात्रनादयोः ॥ ११५६ ॥

इति तुम्बकीलक्षणम्

उक्तौ प्रकृतिदारूणामनुक्तौ वा विकल्पतः ।
ज्ञेयो दारववाद्यानां खदिरो रक्तचन्दनः ॥ ११५७ ॥

ताम्रजो मध्यमः, लोहजोऽधमः । एकमुखो महान् स्थूलः मुखे स्वल्पः, अधोऽर्धयवाकृतिः ; अर्धयवप्रमाणाकाराधोभागः । कांस्यपात्रसमूहैः पूर्वे मध्ये महिषचर्मणा आच्छादितमुखः, तस्य निःसाणस्य रन्ध्रे विन्यस्तैः चर्मवलये निवेश्य मुहुर्मुहुः आवर्तितैः द्विगुणितैः वध्रकैः बद्धं चर्म यस्य, स वैरिवित्रासकारी निःसाणः । सद्वितीयस्यास्य चर्मसंबन्धिना कोणेन वादनं दृढशब्देन यदा क्रियते तदायं निःसाणः भीरूणां हृदयानि भिनत्ति । अस्मात् युद्धवीराणां रोमाञ्चितं वपुश्च स्यात् ॥ ११९२–११९९- ॥

इति निःसाणलक्षणम्

(सु०) तुम्बकीं लक्षयति— निःसाणवदिति । निःसाणात् गात्रे नादे च किंचिदल्पा तुम्बकी स्यात् ॥ -१११६ ॥

इति तुम्बकीलक्षणम्

(क०) अथावनद्धवाद्यप्रकृतिभूतं दारुविशेषं तद्गुणांश्चाह— उक्ताविल्यादि । प्रकृतिदारूणामुक्ताविति । यत्र वाद्यस्य प्रकृतित्वेन

सर्वेषु स्युर्यथायोगं पाटाः पाटहमार्दलाः ।
नीरसोच्छ्रितभूर्जाताज्जीर्णाद्वाताहतात्तरोः ॥ ११५८ ॥
निर्भिद्योत्सारिते गर्भे शेषाद्वाद्यानि कारयेत् ।
पूर्वप्ररोहे छिन्नेऽन्यो यः प्ररोहः प्ररोहति ॥ ११५९ ॥
तदुद्भवद्रुमोद्भूतं वाद्यं सर्वं प्रशस्यते ।
गर्भस्योत्सारणं त्वेतद्वेणोरन्यत्र पादपे ॥ ११६० ॥
तरूणां जातयस्तिस्रः पित्तला वातला तथा ।
श्लेष्मला चेति तत्र स्यात्पित्तला नीरसक्षितौ ॥ ११६१ ॥
अत्यल्परसभूजाता वातला श्लेष्मला पुनः ।
जलाशयसमीपस्थरससंप्लुतभूमिजा ॥ ११६२ ॥
पित्तलात्युत्तमा जातिर्वातला त्वधमा भवेत् ।
श्लेष्मला वर्ज्यते शुष्के वृक्षेऽपि च्छेदनात्पुरा ॥ ११६३ ॥

इति काष्ठलक्षणम्

यथानुक्तं दारूणामुक्तिर्यथा पटहादौ खदिरादेः । **अनुक्तौवेति** । यथाभिधानं दारुविशेषाणामनभिधानं वा, यथा कुडुक्कादीनाम् । तत्रोभयत्रापि दारववाद्यानां दारुणा निर्मितानां पटहादीनां वाद्यानां प्रकृतित्वेनेति शेषः । खदिरो रक्तचन्दनेन विकल्पितो ज्ञेयः । खदिरो वा रक्तचन्दनो वा कर्तव्य इत्यर्थः । **सर्वेष्विति** । सर्वेषु तुडुक्कादिषु वाद्येषु । **पाटहमार्दलाः पाटा इति** । पाटहाः कखादयः षोडश । मार्दला अपि मतान्तरोक्तैः सह तद्धचादयः षोडश । **यथायोगं स्युरिति** । यैः पाटैर्यस्य वाद्यस्य स्फुटमनुकरणं भवति तत्र प्रयोज्या इत्यर्थः ॥ ११५७–११६३ ॥

इति काष्ठलक्षणम्

(सु०) वाद्यकाष्ठविशेषानाह—उक्ताविति । कारणभूतानां काष्ठाना-

कोमलत्वं व्रणग्रन्थिभेदान्दारुषु वर्जयेत् ।

इति काष्ठदोषाः

षाण्मासिकस्य वत्सस्य चर्म स्यात्पुटबन्धने ॥ ११६४ ॥

अन्ये द्विवत्सरस्याहुस्तन्न लक्ष्येषु दृश्यते ।

मुक्तावनुक्तौ वा विकल्पेन दारुरचितानां सर्वेषां खादिरो रक्तचन्दनो वा प्रकृतिर्ज्ञातव्या । यथायोगं, यथासंख्यः । एवं पटहसंबन्धिनो मर्दलसंबन्धिनश्च पाटाः । नीरसायाम्; अम्बुशून्यायाम्, उच्छ्रितभूजातायां, जीर्णात् पुराणात् सर्वदा पवनेन आन्दोलितात् तरोः निर्भिद्य छित्वा गर्भे उत्सारिते त्यक्ते सति शेषात् तस्मात् वाद्यानि कारयितव्यानि । पूर्वे इति । पूर्वस्मिन् प्ररोहे छिन्ने सति प्ररूढात् अन्यस्मात् प्ररोहात् जातं वाद्यं प्रशस्तम् । गर्भोत्सारणमिदं वेणुवाद्यं विना अन्यत्र ज्ञातव्यम् । तरुजातीः कथयति—तरूणामिति । तासां लक्षणमाह —तिस्रेति । तरूणां तिस्रो जातयः ; पित्तला, वातला, श्लेष्मला चेति । तत्र तिसृणां मध्ये नीरसभूमौ जाता पित्तला, अल्पतररसभूमौ जाता वातला, जलाशयसमीपस्थरससंप्लुतभूमौ जाता श्लेष्मला इति । तासु पित्तला अत्युत्तमा, वातला अधमा, श्लेष्मला तु वर्ज्या इति । छेदात्पूर्वं शुष्को वृक्षोऽपि वर्ज्य इति ॥ ११५७–११६३॥

इति काष्ठलक्षणम्

(क०) दारुदोषानाह—कोमलेत्यादि ॥ ११६३- ॥

इति काष्ठदोषाः

(सु०) काष्ठदोषानाह—कोमलत्वमिति । कोमलत्वं ; सुकुमारत्वम् । व्रणं छिद्रं, ग्रन्थिः शाखासंधिः, भेदो भिन्नत्वं, एते दोषा दारुषु वर्जनीयाः॥ ११६३-॥

इति काष्ठदोषाः

(क०) चर्मणो गुणानाह—षाण्मासिकस्येत्यादि ॥ -११६४–११६७ ॥

इति चर्मगुणाः

बद्धस्य वृषभस्यास्य चर्मणा वध्रकल्पना ॥ ११६५ ॥
कुन्देन्दुहिमसंकाशमाम्रपल्लवसंनिभम् ।
स्नायुमांसविहीनं च चर्म गोसंभवं च यत् ॥ ११६६ ॥
शीतोदके निशामेकां वासयित्वा समुद्धृतम् ।
वाद्यावनहनार्थं तद् ग्राह्यं श्रीशार्ङ्गिणोदितम् ॥ ११६७ ॥

इति चर्मगुणाः

मेदोदुष्टं जराक्रान्तं छिन्नं काकमुखाहतम् ।
अग्निधूमहतं जीर्णं न वाद्ये चर्म कर्मकृत् ॥ ११६८ ॥
गुणैर्भूरितरोदारैर्यस्य नद्धं जगत्त्रयम् ।
अवनद्धमिदं तेन शार्ङ्गदेवेन कीर्तितम् ॥ ११६९ ॥

इति चर्मदोषाः

इत्यवनद्धवाद्यप्रकरणम् ।

(सु०) चर्मगुणानाह— षाण्मासिकस्येति । षण्मासोत्पन्नस्य वत्सस्य तर्णकस्य चर्म पुटबन्धने स्यात् । अन्ये तु द्विवत्सरस्याहुः । तत् लक्ष्येषु न दृश्यते । पुटं वाद्यमुखं वृद्धवृषभस्य चर्मणा वध्रा कार्या । कुन्देति । कुन्दादिवत् उज्ज्वलं, माकन्दपल्लववत् आताम्रं वा स्नायुमांसाभ्यां विहीनं गोचर्म, तदेकस्यां निशायां शीतलोदके स्थापयित्वा, उद्धृतं सत् वाद्यपिधानार्थं ग्राह्यम् ॥ -११६४-११६७ ॥

इति चर्मगुणाः

(क०) चर्मदोषानाह— **मेदोदुष्टमित्यादि** । अथावनद्धवाद्यप्रकरणं निगमयितुमाह— **गुणैरित्यादि** ॥ ११६८-११६९ ॥

इति चर्मदोषाः

इत्यवनद्धवाद्यप्रकरणम् ।

अथ घनवाद्यम् —

कांस्यजे घनवाद्ये स्यात्कांस्यमग्नौ सुशोधितम् ।
कांस्यजो वर्तुलस्तालः सपादद्व्यङ्गुलाननः ॥ ११७० ॥
मध्योऽस्याङ्गुलविस्तारो निम्नो रन्ध्रं च मध्यगम् ।
पादोनगुञ्जामात्रं स्यात्पिण्डस्तु यवमात्रकः ॥ ११७१ ॥
सार्धाङ्गुलः स्यादुत्सेधः समाश्लक्ष्णशुभाकृतिः ।
कार्या तथा यथा नादो भवेच्छ्रुतिमनोहरः ॥ ११७२ ॥
नेत्रवस्त्राञ्चलाग्राणि रज्जूकृत्य निवेशयेत् ।
रन्ध्रेऽग्राणामनिर्गत्यै ग्रन्थिं च रचयेद् दृढम् ॥ ११७३ ॥
ईदृक्तालयुगं कृत्वा तालमेकमथाञ्चलैः ।
आवेष्ट्य तर्जनीं वामामङ्गुष्ठेन च वेष्टनम् ॥ ११७४ ॥
आक्रम्य तलमध्यस्थं धृत्वा तिर्यङ्मुखीकृतम् ।
शेषाङ्गुलीः प्रसार्योर्ध्वाद्दक्षिणेन तु पाणिना ॥ ११७५ ॥
तालमन्यतरस्यान्तलम्बमानाचलावलिम् ।
तर्जन्यङ्गुष्ठयोरग्रभागतस्तिर्यगाननम् ॥ ११७६ ॥
धृत्वा तस्याग्रभागेण मध्यमन्यस्य ताडयेत् ।
अल्पनादो भवेच्छक्तिर्भूरिनादः शिवो भवेत् ॥ ११७७ ॥

(सु०) चर्मदोषानाह—मेद इति । मेदसा दूषितम्, मेदो धातुविशेषः । जरा गर्भवेष्टनं, तया आक्रान्तम् । क्लिन्नं स्तिमितम् । काकमुखाहतं शिथिलम् । अग्निना धूमेन वा नष्टम् । जीर्णं जरठम् ॥ ११६८–११६९ ॥

इति चर्मदोषाः

इत्यवनद्धवाद्यप्रकरणम् ।

(क०) अथ घनवाद्यं लक्षयितुमाह—अथेति । कांस्यजमिति घनवाद्यस्य सामान्यलक्षणम् । तच्च कांस्यमग्नौ सुशोधितं ग्राह्यमिति

शिवे स्निग्धे घनो नादः शक्तौ स्यात्तद्विपर्ययः ।
वामेन धारयेच्छक्तिं शिवं दक्षिणपाणिना ॥ ११७८ ॥
अश्वमेधफलं चैव प्राप्नुयाद्दोषमन्यथा ।
देवता तुम्बरुर्युग्मे शक्तिः शक्तौ शिवे शिवः ॥ ११७९ ॥
द्रुतादिसिद्धयै तन्नादधृतिरूर्ध्वाङ्गुलीकृता ।
कल्पनेत्युच्यते कार्यमस्य स्यात्तालधारणम् ॥ ११८० ॥
निःशङ्कशार्ङ्गदेवेन पाटाः सर्वेऽत्र कीर्तिताः ।

इति तालक्षणम्

शेषः । तत्र तालं लक्षयति—**कांस्यज इत्यादि । द्रुतादीत्यादि । द्रुतादिसिद्धयै**; अत्रादिशब्देन लघ्वादयो गृह्यन्ते, द्रुतादिमितकालप्रदर्शनायेत्यर्थः । **ऊर्ध्वाङ्गुलीकृता**; हस्तद्वये तर्जन्यङ्गुष्ठाभ्यां तालद्वयस्य धृतत्वात्तदतिरिक्ताङ्गुल्य ऊर्ध्वीकृतास्ता ऊर्ध्वाङ्गुल्यस्ताभिः कृता । **तन्नादधृतिः**; तयोस्तालयोः नादस्यानुकरणेनाकारेण दीर्घस्य दीर्घस्य निरोधेनावसानकरणं ह्रस्वीकरणमित्यर्थः । **कल्पनेत्युच्यत इति** । लक्ष्यप्रधानैस्तालधारिभिरिति शेषः । **कार्यमस्य स्यात्तालधारणमिति** । अस्य तालधारिणः, **तालधारणम्**; उक्तप्रकारेण तालयोर्धारणं, तथा तन्नादधारणं च कार्यं स्यात् कर्तव्यं भवति । **अत्र ताले सर्वे पाटाः कीर्तिता इति** । तालस्य तूर्यत्रयमितिहेतुत्वादिति भावः ॥ ११७०–११८०- ॥

इति तालक्षणम्

(सु०) घनवाद्येषु प्रथमं तालं लक्षयति—कांस्यज इति । कांस्यजाते घनवाद्ये प्रथमं कांस्यमग्नौ शोधयेत् । कांस्यात् जातो कांस्यजः, वृत्तः वर्तुलः, सचतुर्थांशद्वयाङ्गुलमितमाननं मुखं यस्य; अस्य, कांस्यतालस्य मध्यः अङ्गुलविस्तारो भवति, निम्नः नीचश्च भवति । मध्यगतं रन्ध्रं पादोनगुञ्जाप्रमाणं

नलिनीदलसंकाशौ कांस्यतालौ समाकृती ।
त्रयोदशाङ्गुलौ वक्त्रे कांस्यजे द्व्यङ्गुलौ तले ॥ ११८१ ॥
मध्येऽङ्गुलमितौ निम्नौ तयोरन्यत्तु तालवत् ।
पाटा झनकटा मुख्याः सन्ति पाटान्तराण्यपि ॥ ११८२ ॥
नारदो देवता चात्रेत्युक्तं सोढलसूनुना ।

इति कांस्यताललक्षणम्

भवेत् । पिण्डस्तु, यवमात्रः । उत्सेधः; उच्छ्रायः, सार्धाङ्गुलप्रमाणः । समानः श्लक्ष्णो मसृणो रमणीयाकृतिश्च तथा कार्यो यथा श्रवणयो रमणीयनादो भवति । नेत्रे वस्त्राञ्चलाग्राणि पट्टवस्त्रविशेषाणि, तैः रज्जूकृत्य रज्जुं विधाय रन्ध्रे निवेश्य अग्राणामनिर्गत्यै ग्रन्थिं कुर्यात् । ईदृगिति । एवंविधं तालद्वयं विधाय एकं तालं अञ्जलेरावेष्ट्य तर्जन्या वामाङ्गुष्ठेन च वेष्टितं तालमाक्रम्य पाणितलस्य मध्यस्थले धृत्वा, दक्षिणहस्तस्य तर्जन्या अङ्गुष्ठेन च रज्जुं वेष्टयित्वा, द्वितीयं तालं पाणितलमध्ये लम्बमानं तिर्यङ्मुखं धारयित्वा, अन्यस्य तालस्य मध्यं ताडयेत् । अल्पेति । उभयोस्तालयोर्मध्ये अल्पध्वनिः शक्तिः, बहुध्वनिः शिवः, शिवतालेन ताड्यमाने सति स्निग्धो घनो निबिडो नादो जायते । शक्तौ अस्निग्धायामल्प इति । वामेनेति । वामेन पाणिना शक्तिं धारयेत् । दक्षिणेन पाणिना शिवम् । एवंकृते अश्वमेधफलं प्राप्नोति । अन्यथा दोषं प्राप्नुयादिति । ऊर्ध्वाङ्गुल्या तस्य नादस्य धृतिः स्तम्भनं द्रुतत्वादिसिद्धये यत्क्रियते सा कल्पनेत्युच्यते । अस्य तालस्य अन्यत् कार्यं तालधारणमिति ॥ ११७०–११८०- ॥

इति ताललक्षणम

(क०) अथ कांस्यतालादीनां लक्षणानि ग्रन्थत एव सुबोधानि । तत्र कम्रिकापट्टवाद्ययोर्दारवत्वे कांस्यजत्वेऽपि मूर्तिरूपत्वाद्घनवाद्यत्वमेवेत्यवसेयम् ॥ ११८१–१२०५ ॥

इति कांस्यताललक्षणम्

